कात्यायनीयशुक्लयजुःप्रातिशाख्यस्य
श्रीरामशर्मणा प्रणीता

# ज्योत्स्नावृत्तिः


भूमिकालेखकः, सम्पादकः, संशोधकश्च

डॉ. युगलकिशोरमिश्रः



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

सरस्वतीभवन-ग्रन्थमाला
[ १२५ ]

## कात्यायनीयशुक्लयजुःप्रातिशाख्यस्य

श्रीरामशर्मणा प्रणीता

# ज्योत्स्नावृत्तिः

( समीक्षात्मकसंस्करणे विशदभूमिकापरिशिष्टटिप्पण्यादिभिर्विभूषिता )

भूमिकालेखकः, सम्पादकः, संशोधकश्च

**डॉ० युगलकिशोरमिश्रः**

आचार्योऽध्यक्षश्च
वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




वाराणस्याम्

२०४६ तमे वैक्रमाब्दे    १९११ तमे शकाब्दे    १९८९ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसंधानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२



प्राप्तिस्थानम्—
**विक्रयविभागः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२



प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम् ८०.०० रूप्यकाणि



मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स**
बी २१/४२ ए, कमच्छा
वाराणसी–२२१००२

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 125 ]

**Commentary on Śukla-yajurveda Prātiśākhya of Kātyāyana**

# JYOTSNĀ-VṚTTI

By
ŚRIRĀM ŚARMĀ

[Critically Edited with an elaborate Introduction, Notes and Appendices]

EDITED BY
**DR. YUGAL KIŚORE MIŚRA**
Professor & Head
Department of Vedic Studies
Sampurnanand Sanskrit University




VARANASI
1989

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harishchandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi—221002.



First Edition, 1000 Copies
Price Rs. 80.00



Printed by—
Ratna Printing Works
B 21/42 A, Kamachha
Varanasi—221001.

# समर्पणम्

( १ )

वेदाम्भोनिधिपारगो निजयशोराशिप्रकाशीकृत-
स्तातो मे समभूत्सतामभिमतो गोपालचन्द्राभिधः ।
तत्पुण्यस्मरणप्रसङ्गकलितं तत्पादयोरर्पितं
ज्योत्स्नाधौतमुपायनं विजयतां श्रीप्रातिशाख्याभिधम् ।।

( २ )

शुक्लयजुःश्रुतिसरणिव्याकृतये प्रातिशाख्यमिदम् ।
गुरुपदपङ्कजमिलितं ललितमिलिन्दायतामनिशम् ।।

# पुरोवाक्

परमेशितुः श्रीविश्वेशकृपया वेदपुरुषानुग्रहेण च सम्पादितं ज्योत्स्नावृत्तिसमलङ्कृतमिदं शुक्लयजुःप्रातिशाख्यं नाम। तदेतत् शास्त्रसुधारसिकानां ज्ञानैकव्रतिनां विदुषां पुर उपस्थापयन्नहमानन्दसन्दोहमनुभवामि।

विदितचरमेवैतन्मनीषिणां यच्चतुर्षु वेदेषु यजुर्वेदस्य बहुजनसमादृतत्वाद्, यज्ञेषु आध्वर्यवस्य प्राधान्याच्चाभ्यर्हितत्वं प्रसिद्धम्। तत्रापि "कलौ माध्यन्दिनी शाखा" इतिवचनानुरोधेन शुक्लयजुषो माहात्म्यं सर्वानतिशेते। शुक्लयजुर्वेदस्य वर्णोच्चारणे उदात्तादिस्वरधर्माणां हस्तेन प्रदर्शने च किमप्यपूर्वमेव वैशिष्ट्यं दृश्यते, यस्य भाषावैज्ञानिकानुशीलनेन मन्ये नूतनानि वातायनानि समुद्घाटितानि भवितारः। भगवतः कात्यायनविरचितस्यास्य प्रातिशाख्यस्य श्रीरामशर्माचार्यविरचितया ज्योत्स्नाख्यविवृत्या सह इदम्प्रथमतया पाठभेदादिप्रदर्शनपूर्वकं समीक्षात्मकं प्रकाशनं प्रस्तूयते। अत्र प्रकाशनेऽस्माभिः संयोजितः शास्त्रपरिचायनपरो भूमिकाभागः, सम्प्रदायप्रबोधिनीशिक्षादिसम्बद्धविषयपोषकः परिशिष्टभागश्चेत्युभयं जिज्ञासूनामुपकारायालं स्यादितिविश्वसिमि। सेयं ज्योत्स्नाविवृतिः क्रमबद्धपदार्थप्रतिपादनपरा, प्रयोगप्रक्रियानुवर्तनमञ्जुला, प्रसन्नपदगभीरा, नितान्तं हृद्या, अन्वर्था च विद्यते। प्रातिशाख्यवाङ्मयेऽनुपमेया सोदाहरणा साष्टविकृतिलक्षणा सव्याख्यप्रतिज्ञासूत्रञ्च स्वाङ्के निदधती वेदविद्याकान्तारचारिणो विद्वज्जनान् भृशमावर्जयति। मन्ये ग्रन्थमणेः प्रकाशनस्यास्माकीनोऽयं यत्नः विबुधां मनस्तोषाय कल्पेत।

कार्येऽस्मिन्नहं येषां हार्दिकेन शुभाशिषा प्रेरणया निर्देशेन च संलग्नोऽभवम्, सर्वप्रथमं तेषु वाराणसेय-संस्कृतविश्वविद्यालयस्य वेदविभागाध्यक्षचराणां महामहिमोपाध्यायानामाहिताग्नीनां श्री पं० भगवत्प्रसादमिश्रपितामहपादानाम्, वेदविद्याविद्योतितान्तःकरणानां प्रत्यग्रधिषणानां सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य वेदविभागाध्यक्षचराणां विद्वत्तिलक–डॉ०श्रीगोपालचन्द्रमिश्रतातपादानामुपकारभारं श्रद्धायुक्तेन मनसा स्मरामि। येषां कृपाकटाक्षं विना सर्वथा दुःशकमेवासीदिदं कार्यम्। वाचोऽभिव्यञ्जने किमपि कर्त्तुमनीशोऽहं तान् प्रति सश्रद्धं प्रणतिततीः समर्प्यात्मानं धन्यं मन्ये।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचरैः करुणावरुणालयैः विद्वत्तल्लजैः डॉ०श्रीगौरीनाथशास्त्रिमहोदयैः विश्वविद्यालयप्रकाशनयोजनायां ग्रन्थममुं स्वीकृत्य साशीर्वादं भृशमुपकृत इति महोपकारं स्मरन् पुनरपि तेषामाशीराशिं कामये।

विद्वद्वरेण्यैः विश्वभारतीपुरस्कारेण सम्मानितैः 'पद्मभूषण' पं० पी० एन० पट्टाभिरामशास्त्रिवर्यैः परमया कृपया ग्रन्थस्य कृते शुभसम्मतिलेखनेनाधमर्णीकृतोऽयं

जन इति तेभ्यः सप्रणति कृतज्ञतां ज्ञापये। अथ च वर्तमानकुलपतिमहेच्छैः विद्वन्-मूर्धन्यैः प्रो० वि० वेङ्कटाचलम्वर्यैःमहता स्नेहेन शिवसङ्कल्पोऽत्र ग्रन्थे समारचितः, प्रकाशनादिव्यवस्थासौकर्यपन्थाश्च प्रशस्तीकृत इति तेषां कार्तज्ञ्यं प्रकाशयामि।

प्रसङ्गेऽस्मिन् ममानुजं डॉ० श्रीकिशोरमिश्रं शिष्यवर्यं श्रीओमप्रकाशपाण्डेयञ्च हार्दिकैः शुभाशीर्वचोभिर्योजयामि, याभ्यामनेकविधसहयोगप्रदानेन कार्यमिदं सुसम्पन्नं व्यधायि।

मुद्रितेऽस्मिन्ग्रन्थे बहवो मुद्रणदोषाः स्वरचिन्हादिदोषाश्च शीसकाक्षरयोजकानां पारवश्येन यन्त्रपारवश्येन च विद्यमानाः सन्ति। सर्वथैव निर्दोषं मुद्रणं कारयितुं वाञ्छन्नपि तन्नापारयम्। अतस्तन्मुद्रणादिदोषान् क्षन्तुं मानवसुलभानन्यांश्चापि वर्तमानांस्त्रुटीनविगणय्य ग्रन्थममुं द्रष्टुं सुधियो विनिवेद्यन्त इति।

ग्रन्थस्यास्य प्रकाशनव्यवस्थायाः सर्वोऽपि चिन्ताभारः शीघ्रमुद्रणाय कार्य-सञ्चारश्च सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिभिः डॉ० हरिश्चन्द्रमणि-त्रिपाठिवर्यैः साधु निरूढ इति तान् धन्यवादकदम्बैरभिनन्दयामि। अत्र प्रकाशने येषां ग्रन्थानां पाण्डुपुस्तकानां लेखादीनाञ्चोपयोगो विहितस्तेषां ग्रन्थकृतो लेखकाः सङ्ग्राहकाः प्रकाशकाः समुपलम्भसहयोगिनश्च महोपकारस्निग्धैः साधुवादैरस्माभिः संविभूष्यन्ते।

युगलकिशोरमिश्रः

# शिवसंकल्पः

अथेदमुपह्रियते पाठकविदुषां करकमलयोः शुक्लयजुर्वेदप्रतिशाख्यम् अस्मद्विश्वविद्यालयस्य वेदविभागाध्यक्षैः पण्डितश्रीयुगलकिशोरमिश्रैः सम्पादितम्। यद्यपि शुक्लयजुर्वेदप्रतिशाख्यमिदं प्रकाशितपूर्वमेव वाराणसीत उवटाचार्यभाष्यसंवलितम्; तथापि प्रकृतसंस्करणस्यायमुत्कर्षो यदस्य प्रातिशाख्यस्य सर्वथा नूतना 'ज्योत्स्ना'—भिधा व्याख्या तत्प्रथममिह प्रकाशपदवीमुपनीयते। इयं च ज्योत्स्नाभिधाना व्याख्या न केवलम् अप्रकाशितपूर्वा; किन्तु विद्वन्मण्डलेष्वपि सर्वथाऽविदितपूर्वैव। भारते भारताद्बहिश्च वैदिकसाहित्यविषयकं प्रकाशितमप्रकाशितं ग्रन्थजातं निबन्धजातं च कृत्स्नं क्रोडीकृत्य फ्रांसदेशाभिजनेन लुई-रेनो-इत्याख्येन विदुषा प्रकाशितायाम् 'बिब्लियोग्राफी-वैदिक'-सूच्याम्, अथ च भारतीयविद्वद्धौरेयेण डॉ० रामचन्द्रनारायणदाण्डेकरविदुषा प्रकाशितायां बृहद्ग्रन्थसूचीत्रय्यां वाऽस्या 'ज्योत्स्ना'-टीकाया नास्ति कोऽप्युल्लेखः, इतीदमेव महत्प्रमाणं ग्रन्थस्यास्यापूर्वतायाम्। इत्थमन्यत्र क्वापि दुर्लभेयं ज्योत्स्नाटीका आस्माकीनविश्वविद्यालयस्य विख्याते सरस्वतीभवनमातृकाकोशे समुपलब्धा संस्करणेऽस्मिन् प्रकाश्यते इतीयदेव पर्याप्तं नः परितोषभूम्नः।

सरस्वतीभवनग्रन्थागारे सुरक्षितानां खल्वपूर्वाणां हस्तलिखितग्रन्थानां प्रकाशनं विधेयमिति यः संकल्पोऽस्य विश्वविद्यालयस्य, तस्यैवायं परिणामो यदयं ग्रन्थः सम्प्रति प्राकाश्यमुपनीयते। अस्या ज्योत्स्नाविवृतेर्ये असाधारणा विशेषाः, ते सम्पादकेन साधु स्पष्टीकृता स्वभूमिकायाम्। उवटादिप्रणीतेषु सत्स्वपि टीकान्तरेषु विवृतिरियं नूतना कामं कल्पिष्यते महते प्रयोजनायेति विश्वसिमः।

ग्रन्थस्यास्य सम्पादकैराचार्यश्रीयुगलकिशोरमिश्रैः संस्करणस्यास्य सज्जीकरणे सर्वतोदृष्ट्या महदवहितमिति ग्रन्थशरीरविलोकनेन तद्भूमिकावलोकनेन च स्पष्टं भवेत्। विशेषतश्च स्वभूमिकायां न केवलमेतद्ग्रन्थकारादिसम्बद्धविवरणसंयोजनेन उपकृताः पाठकाः; किन्तु सामान्यरूपेण प्रातिशाख्याभिधां बिभ्रतः सर्वान् ग्रन्थान्, तट्टीकाश्च बह्वीरवलम्ब्य प्रातिशाख्यशास्त्रस्वरूपं, तत्प्रतिपाद्यं, तत्प्रयोजनं, तत्पदव्युत्पादनं, तत्कालविषय आधुनिकानां विदुषां मतवैविध्यम्, एतच्छास्त्रान्तःपातिनां ग्रन्थानां पौर्वापर्यम्, प्रातिशाख्यविषये विद्वद्गोष्ठीषु प्रचलतां केषाञ्चिद् भ्रमाणां परिमार्जनम्, प्रातिशाख्यानां व्याकरणशास्त्रेण सम्बन्धः, तेषां वेदाङ्गभूतायां शिक्षायामन्तर्भावानन्तर्भावपरिप्रश्नः, इतीदृशा बहवो विषया बहुप्रमाणोपन्यासपुरस्सरं साधु विमृष्टाः।

इदं च महद्वैशिष्ट्यमस्या भूमिकाया यदस्यां श्रोत्रियवंशजैर्विद्वद्वरैरेकतो यत्र वैदिकशास्त्रसम्बद्धेषु ग्रन्थेषु परिनिष्ठितं पाण्डित्यं प्रमाणीकृतम्, तत्रापरत आधुनिकपाश्चात्यपौरस्त्यविद्वत्प्रणीते साहित्येऽपि नदीष्णता प्रादर्शीति स्वयं विदाङ्कुर्वन्तु पाठकाः।

प्रातःस्मरणीयैः सुगृहीतनामधेयैः श्रीगौरीनाथशास्त्रिपादैः श्रोत्रियावतंसैः प्राणपणैरपि श्रौतविद्यारक्षणबद्धपरिकरैः पण्डितश्रीपट्टाभिरामशास्त्रिभिरेतद्ग्रन्थप्रकाशनविषये मङ्गलाशंसनं विधाय ग्रन्थसम्पादको विश्वविद्यालयश्च अनुग्रहपात्रीकृताविति यत्सत्यं धन्यं नः कुलं सर्वम् ।

'सरस्वतीश्रुतिमहती महीयताम्' इति प्रार्थयमानो ग्रन्थरत्नमिदं प्रस्तौमि सुधीसहृदयशयकुशेशयेषु ।

काश्याम्,<br>श्रीरामनवम्याम्<br>२०४६ वैक्रमाब्दे

**वि० वेङ्कटाचलम्**<br>कुलपतिः,<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य<br>वाराणसो ।

## FOREWORD

It pleases me to write this foreword to a hitherto unpublished commentary on Kātyāyana's Prātiśakhya on white-Yajurveda. To our vedic scholars the commentaries of Uvvata and Anantadeva are wel-known. But the present text, known as 'Jyotsna' is yet another commentary which is dated samvat 1737.

The special feature of this work is that it is written on the pattern of Bhattoji's Sidhanta Kaumudi, in which sutras are explained not in the order in which they are found in the Astadhyayi of Panini. The present commentary explains the original text according to Prakriya and Prakarana and this facilitates the understanding of the new entrants with the subject.

Prof. Yugal Kishor Mishra inherits the tradition of a section of the vedic scholars of Varanasi. His grand-father the late Bhagwat Prasad Mishra and his father the late Prof. Gopal Chandra Mishra were reputed teachers of Veda at Sampurnanand Sanskrit University of Varanasi and it is gratifying that he himself is priviledged to carry on the traditions, being Professor of Vedic studies in present times.

In the introduction to the present edition Prof Mishra has covered a number of important issues. In his opinion Katyayana, the vedic scholar is not identical with Katyayana, the grammarian. Prof. Mishra evinces a first an acquaintance with the intricate issues and their solutions and as such his observations deserve careful study and consideration.

I hope the present edition will be welcomed by scholars working in the field of vedic study.

**DR. GAURI NATH SHASTRI**
**EX. VICE-CHANCELLOR**
**Sampurnananda Sanskrit University**
**VARANASI-2**

# शुभाशंसनम्

भारतमातुः प्राणा वेदाः। मातुः प्राणानां रक्षणाय चिरन्तनास्सततमुद्यता अभवन्। तद्रक्षणाय प्रथम उपायोऽध्ययनम्। अध्ययनञ्च गुरुमुखोच्चारणानूच्चारणम्। यामानुपूर्वीमवलम्ब्य यथोच्चारयति तथैवाऽन्तेवासी अनूच्चारयेत् इति प्रकारो वेदाध्ययनस्य। अन्तेवासिनामुच्चारणं गुरूच्चारणसापेक्षं भवति। उच्चारणसौष्ठवं तदैव निश्चितं भवति यदा गुरूच्चारितानुपूर्वीसदृशानुपूर्वीं शिष्य उच्चारयेत्। अतश्शिष्योच्चारणे गुरूच्चारणसापेक्षताऽस्ति। गुरूच्चारणमपि स्वगुरूच्चारणसापेक्षमेवासीत्, तस्यापि गुरोः स्वगुरूच्चारणसापेक्षतैवेति पूर्व-पूर्वगुरूच्चारणसापेक्षोच्चारणमेव शिष्येषु सिध्यति। अयं प्रकारः पौरुषेयेषु काव्येषु पद्येषु वाक्येषु वा नानुभूयते। यथाऽऽनुपूर्व्या कवयति कविः तत्सदृशानुपूर्वीनिरपेक्ष एव। कविनिर्मितामानुपूर्वीं परिवर्त्योच्चारयितारोऽपि दृश्यन्ते। अतस्सापेक्षोच्चारणविषयत्वं यत्र तत्रापौरुषेयत्वम्, यत्र च निरपेक्षोच्चारणविषयत्वं तत्र पौरुषेयत्वमिति व्यवहारस्सङ्गतः। वेदः पौरुषेय इति साधनं न सुकरम्।

'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥'

—इति मन्त्रं कश्चन रचयामासेत्यङ्गीकृत्य विचारयामः। अग्निर्यज्ञसम्बन्धी देवः, स च होता ऋत्विक्, स सर्वान् देवानाह्वयति, अतिशयेन स रत्नानि धारयति, महानाढ्यस्तमहं स्तौमि इति खल्वस्य मन्त्रस्यार्थः। इममर्थं रचयिता कथमुपलब्धवान्? कस्मादुपलब्धवान्? देवानां पौरोहित्यं कुर्वन्तमग्निं कदा दृष्टवान्? 'ईडे' इत्यत्र डकारस्य लकारं कथं प्रयुक्तवान्? अग्निः कस्मिन् कोशागारे रत्नानि धारयति? इत्यादीनां शतशः प्रश्नानामुत्तरं वक्तव्यं स्याद्रचयित्रा। 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्, स पर्यदीर्यत, स वारुणं चतुष्कपालमपश्यत्, तन्निरवपत्, स वरुणपाशादमुच्यत, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्'—इति कश्चन वेदसन्दर्भः। अत्राश्वदाता प्रजापतिः, प्रतिग्रहीता च वरुणः। अनन्तरं प्रयुक्तास्तच्छब्दाः प्रजापतिं परामृशन्ति। अन्ते च प्रतिग्रहीत्रा वारुणीष्टिः कर्त्तव्येत्यर्थः प्रतीयते। व्याहृतमिममर्थं रचयिता कथमुपलब्धवान्? वरुणरोगेण ग्रस्तः प्रजापतिः, वरुणदेवताकेष्ट्यनुष्ठानेन प्रजापतिः रोगान्मुक्तः, प्रतिग्रहीत्रा वरुणेनेष्टिः कर्तव्येति विधिर्वदति। किमयं न व्याहृतार्थः। एतादृशमर्थं कः प्रेक्षावान् लिखेत्? एवं सामवेदे 'अग्ने' इत्यस्योच्चारणम् 'अग्नाई' इति भवति। अत्रायीभावः कथमागतः? इत्येवमादयः प्रश्ना न केवलं दुरुत्तराः किन्त्वसमाधेयाः। अतो गुरुमुखोच्चारणानूच्चारणव्यापारादृते नान्यः कश्चन वेदाधिगमायस्ति।

एवं बहुतिथे काले गच्छति चिरन्तनाध्ययनपरिपाट्यां शैथिल्यं किञ्चिदिव लोकानामनुभवन्तो महर्षयः वेदरक्षायै यास्क-कात्यायना-पस्तम्ब-पाणिनि-वसिष्ठ-व्यास-प्रभृतयः निरुक्त-प्रातिशाख्य-व्याकरण-शिक्षाग्रन्थान् प्रवर्तयाम्बभूवुः। इमे ग्रन्थास्सत्य-मेव वेददुर्गं प्रवेष्टुं परिखा-प्राकाराधाररूपाः। परिखां प्राकारमाधारञ्चोल्लङ्घ्यैव वेद-दुर्गद्वारं प्रवेष्टुमर्हन्ति लोकाः। प्रतिशाखं प्रातिशाख्यं भिन्नम्, शिक्षाग्रन्थाश्च भिन्नाः। इमे वेदलक्षणग्रन्थाः कथ्यन्ते। लक्ष्यानुसारेण लक्षणानि प्रवर्तन्त इति नियमः। लक्ष्यैक-चक्षुषः खलु महर्षयः। वेदगतं लक्ष्यं पर्यवेक्ष्य तल्लक्षणं कृतं महर्षिभिः। तत्र शिक्षा-प्रातिशाख्यग्रन्थाः प्राधान्येन प्रथममुच्चारणं शिक्षयन्ति। उच्चारणावसरे प्रतिवर्णं स्थान-प्रयत्न-स्वर-कालादयो नियताः। इमान् नियमान् अधिगत्य वयं वेदमुच्चारयितुं न प्रभवामः। उच्चारणन्तु गुरुमुखोच्चारणानूच्चारणविधयैवाधिगन्तव्यम्। वर्णयो-र्वर्णानां वाऽन्तराले कालो मात्राभेदेन नियतः। स च शिक्षाप्रातिशाख्यार्थाधिगममात्रेण न सिध्यति। तत्र गुरुमुखोच्चारणमेव शरणीकर्तव्यम्।

तत्र शिक्षा—प्रातिशाख्यग्रन्था विकृतिपाठक्रमे महोपकारकाः। पदेष्वनुलोमेन प्रतिलोमेन चोच्चार्यमाणेषु विशेषेण केचन नियमा उपदिश्यन्ते। अनुलोमेन प्रतिलोमेन च पाठेऽभ्यस्यमाने पूर्वोत्तरभावेन पदानां यः क्रमः स सुदृढो भवति। प्रक्षिप्तमिदं पद-मिति कथनस्य कदापि नावसरस्स्यात्। एवं स्वराणां वैपरीत्यं न सम्पादितं स्यात्। एवं वेदरक्षणोपायानां प्रतिपादकाः शिक्षाप्रातिशाख्यग्रन्थाः। तत्र कात्यायनमहर्षिप्रणीतं शुक्लयजुर्माध्यन्दिनशाखामवलम्ब्य प्रवृत्तं प्रातिशाख्यम्। प्रकाशितपूर्वः स ग्रन्थः। सूत्राणां यः क्रमस्तमेवालम्ब्य प्रकाशितः। वेदाचार्यं डा० युगलकिशोरमिश्रसम्पादितं वृत्तिसहितं प्रातिशाख्यमवालोकयम्। तत्र मिश्रमहोदयेन किञ्चिद्वैलक्षण्यं सम्पादित-मिति प्रसीदामि। प्रक्रियाक्रममवलम्ब्य ग्रन्थोऽयं सम्पादितः। यथा भट्टोजीदीक्षितस्सूत्र-क्रमं परित्यज्य प्रक्रियाक्रमेण सूत्राणि योजयति सिद्धान्तकौमुद्यां, तथा डा० मिश्र-महोदयः प्रक्रियाक्रमेण सूत्राणां क्रमं स्वीकृत्य निर्मितं ग्रन्थमिमं सम्पादितवान्, येना-धुनिकच्छात्राणामध्ययने लाघवं भवेत्। लक्ष्याणामाकरस्थानानि पाठभेदांश्च निर्दिश्य ग्रन्थोऽयं सम्पादित इति मनो मे हरति। विद्याकुलशीलावदातः पौरस्त्यपाश्चात्त्योभय-विधविचारचर्चानिष्णातः शास्त्रसेवैकव्रती वैदिकग्रन्थप्रणयनप्रकाशनसुकृती संस्कृता-चारनिष्ठो वाङ्मयावगाहनान्वेषणादिगुणगणगरिष्ठो वेदविद्वरिष्ठो वाराणसेयसंस्कृतविश्व-विद्यालयीयवेदविभागाध्यक्षपदावाप्तप्रतिष्ठो वेदाचार्यादिविविधोपाधिविशिष्टः श्रीमान् युगलकिशोरमिश्रमहोदयो महता श्रमेणाध्यवसायतपसा चापूर्वप्रकाशितं ग्रन्थममुं बहु-विधसम्पादनवैशिष्ट्यसंवलितं सुधीजनोपकाराय प्रस्तौतीति भूयो भूयो धन्यवादार्हः। एवमादीनां ग्रन्थानां सम्पादनकार्यमाचरन् पण्डितवरः संस्कृतविश्वविद्यालयस्य गौरवं वर्द्धयतु स्वयञ्च प्रतिष्ठां लभतामिति पार्वतीपरमेश्वरं स्तौमि।

वाराणसी<br>३-४-१९८८

पट्टाभिरामशास्त्री<br>'पद्मभूषणम्'

# विषयानुक्रमणिका

**वर्णोच्चारणप्रकरणम्**



**विशेषप्रकरणम्**



———

# भूमिका

वैदिकवाङ्मये प्रातिशाख्यशास्त्रस्य समस्ति विशिष्टं स्थानम्। शास्त्रमिदं व्याकरणस्य शिक्षायाश्च पूरकमुपाङ्गं विद्यते। अत्र ते संशयाः सविशेषं विवेचिताः ये लौकिकव्याकरणज्ञातॄणां व्यामोहमुत्पादयन्ति। अत्रेदमवधेयम्भवति यत् प्रतिवेदम् उच्चारणशैल्याः किमपि वैशिष्ट्यं विद्यते, अतश्च तासां कृते विशेषनियमाः प्रतिपादिताः सन्ति। उच्चारणशैल्याः विभिन्नतायाः मूलस्रोतः ध्वनयः, ध्वनीनाञ्च मूलस्रोतः स्थानकरणप्रयत्नाः सन्ति। एषां पारस्परिकेण सूक्ष्मसंयोजनेन संघर्षतया च ध्वनिः वर्णत्वमापद्यते। वर्णेषु बाह्याभ्यन्तरपरिस्थितिवशात् विभिन्नवर्गाणां निष्पत्तिः भवति। वर्गाक्षराणां पारस्परिकसन्निकर्षतया ध्वनिपरिवर्त्तनं वर्णपरिवर्त्तनं वा। निसर्गसिद्धस्यास्य ध्वनिविज्ञानस्य सन्धिविज्ञानस्य च यादृग् विश्लेषणं प्रातिशाख्यग्रन्थेषु समुपलभ्यते तादृगन्यत्र दुर्लभम्। किञ्च ध्वन्यभिव्यक्तेः उदात्तानुदात्तस्वरितविषयात्मिका पद्धतिः स्वतन्त्रतया विराजते, यस्याः व्यवहारः केवलमद्यत्वे वेदोच्चारणेष्वेव दृश्यते। अत्र वैषम्यं शैथिल्यं वा न भवेदेतदर्थं प्रातिशाख्येषु सूक्ष्मेक्षिकया बहु विवेचितम्। अतएव अनादिसिद्धपरम्परयानुस्यूतानां वेदानाम्मध्ये वर्णोच्चारणे स्वरधर्मविषये किञ्चिन्मात्रमपि पाठान्तरं नास्ति। तस्मात् प्रातिशाख्यानामनुशीलनं भारतीयवाङ्मयस्य महदुपकाराय कल्पते।

विषय-वस्तुदृष्ट्याऽपि प्रातिशाख्यग्रन्थानामपूर्वं किञ्चिद्वैशिष्ट्यमनुभूयते। क्रमपाठ-क्रमहेतु-पारायणविध्यादि कतिपये विषया एतादृशाः प्रतिपादिताः सन्ति येषामन्यत्रोपलब्धिर्न दृश्यते। न केवलमेतावदेव अपितु वैदिकमन्त्राणां स्वरज्ञानविषये पदार्थज्ञाने च प्रातिशाख्यग्रन्थानां महत्त्वपूर्णं स्थानं विद्यते। तदत्र प्रातिशाख्यविषयकं किमपि विचारचिन्तनं चर्च्यते।

**प्रातिशाख्यशास्त्रस्य समुद्भवः**

पुरा वेदानां कण्ठस्थधारणपरम्परा न केवलम् अतीव सुदृढाऽऽसीत् अपितु स्वाधीतवेदग्रन्थस्य कण्ठस्थपारायणधारा ब्रह्मयज्ञरूपेण नियमिततया प्रवर्तिताऽऽसीत्।[1] परवर्तिनि काले आश्रमव्यवस्थायाः शैथिल्यात् शास्त्रोक्तनियमपालने प्रमादवशात् मानवजीवनस्य भौतिकपदार्थोन्मुखतया च वेदग्रन्थानां संरक्षणे तदभ्यासे च कश्चन ह्रासक्रमः प्रादुर्बभूव। आचार्यास्तु वैदिकमन्त्राणामुच्चारणे लेशमात्रमपि विपर्यासो माभूदिति धिया वर्ण-पद-सन्धि-स्वर-मात्रादि विषयकाणां विशिष्टनियमानां, पाठसुरक्षार्थं ग्रन्थरूपेण लेखनमावश्यकमेवेति मेनिरे। अतश्च प्रतिचरणं तदन्तर्गतशाखानां च कृते तत्तत्सम्प्रदायाधिकृताः मान्याचार्यवर्याः विभिन्नप्रातिशाख्यग्रन्थान् रचयामासुः।

---

१. 'अहरहः स्वाध्यायमधीयीत' श० ब्रा० ११।५।६।३

**प्रातिशाख्यसंज्ञायाः प्रवृत्तिनिमित्तम्**

वाजसनेयिप्रातिशाख्यस्य भाष्यकारः अनन्तदेवः प्रातिशाख्यपदमेवं निर्वक्ति-"शाखायां शाखायां प्रति प्रतिशाखम् । प्रतिशाखं भवमिति प्रातिशाख्यम् ।"[1] व्युत्पत्तिमिमामाधारीकृत्य कतिपये आधुनिकाः विद्वांसः यावत्यः वेदशाखाः आसन् तावत्संख्याकाः प्रातिशाख्यग्रन्था अप्यासन्निति संभावयन्ति ।[2]

यास्काचार्यस्य—"पदप्रकृतीनि सर्वचरणानि पार्षदानि"[3] इत्युल्लेखेन प्रतिभाति यत् प्रातिशाख्यग्रन्थानां प्रवृत्तिः वेदचरणानाधारीकृत्य वर्त्तते, न तु वेदशाखाः। इदमत्रावधेयं यत् शाखा-चरणशब्दौ पर्यायवाचिनौ न स्तः। चरणपदं शाखासमूहवाचकमस्ति। चरणस्यैवावान्तरो विभागः शाखेति नाम्ना व्यवह्रियते। तथ्यमिदं द्वादशशताब्द्याः भोजवर्ममहीपतेः ताम्रलेखेनापि सुपुष्टं भवति। लेखस्त्वित्थम्—"**जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकण्वशाखाध्यायिने**"[4] इति। प्रातिशाख्यभाष्यकर्त्रा अनन्तदेवेनापि एकत्र संकेतितं यत् काण्वादिपञ्चदशशाखासु एकमेव प्रातिशाख्यमिति[5]। काण्वादिपञ्चदशशाखावाङ्मयं वाजसनेयचरणान्तर्गतमेवेति पूर्वोद्धृतताम्रपत्रलेखेन सुस्पष्टं प्रतीयते। भट्टकुमारिलवर्येणापि तन्त्रवार्तिकग्रन्थे प्रातिशाख्यग्रन्थानां चरणानुसारिणी प्रवृत्तिरेव संकेतिता वर्तते।[6] तैत्तिरीयप्रातिशाख्यस्य भाष्यकारेण गोपालयज्वमहोदयेन एकवेदीयप्रातिशाख्यस्य तद्वेदीयानेकशाखोपरि साधारणतया उपपत्तिः स्वीकृता। यथा—ऋग्वेदप्रातिशाख्यस्य सम्बन्धः ऋग्वेदगताभ्यां शाकल-बाष्कलशाखाभ्यां सह वर्तते। किञ्च गोपालयज्वमहोदयानामभिमतमस्ति यत्—तैत्तिरीयप्रातिशाख्यग्रन्थे यान्युद्धृतानि उदाहरणानि तैत्तिरीयसंहितायां नोपलभ्यन्ते, तेषां सम्बन्धः नूनं ताभिः वेदशाखाभिः वर्तते, याः शाखाः साम्प्रतं नोपलभ्यन्ते ।[7]

---

१. वा० प्रा० १।१ सूत्रे अनन्तदेवः ।

२. डा० सूर्यकान्तः ऋ० तं० पृ० २, अ० प्रा० पृ० ३० ।

३. निरुक्तम्—१ ।

४. Inscriptions of Bengal, Volume III published by the Varendra Research Society, Rajashahi, 1929. p. 21.

५. 'तस्मात्सिद्धं काण्वादि पञ्चदशशाखासु एकमेव प्रातिशाख्यमिति ।' वा० प्रा० १।१, अनन्तः ।
'सूत्रकारस्य बहुशाखोपरि तन्त्रेण प्रवृत्तत्वात्' वा प्रा. १।१२२ अनन्तः ।

६. 'धर्मशास्त्राणां गृह्यग्रन्थानाञ्च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्थोपलभ्यते ।' तं० वा० ५।१।३ ।

७. वीत्युपबन्धस्य व्यावर्त्यं शाखान्तरे । नन्वेवमनेकशाखाविषयत्वे प्रातिशाख्यमिति ग्रन्थस्य आख्या विरुद्ध्यते । नैतदस्ति । द्वि-त्रिशाखाविषयत्वेऽपि तदसाधारणतया उपपत्तेः । तथा बह्वृचानां शाकलबाष्कलात्मकशाखाद्वयविषयं प्रातिशाख्यं प्रसिद्धम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

कतिपये आधुनिकाः विद्वांसोऽपि मन्यन्ते यत् एकस्य प्रातिशाख्यग्रन्थस्यं सम्बन्धः नैकाभिर्वेदशाखाभिः सह वर्तते।[1] प्रातिशाख्यपदं चरणवाचीति मन्वानो युधिष्ठिरमीमांसकमहोदयः प्रातिशाख्यपदमेवं निर्वक्ति—"शाखां शाखां प्रति प्रतिशाखम्। प्रतिशाखेषु भवं प्रातिशाख्यम्"।[2]

यदि प्रत्येकशाखामवलम्ब्य प्रातिशाख्यशास्त्रस्य प्रवृत्तिनिमित्तं स्वीक्रियते चेत् भगवत्पतञ्जलिद्वारा ज्ञापिताभ्यः ११३१ शाखाभ्यः तावत्संख्याकाः प्रातिशाख्यग्रन्थाः स्वीकरणीयाः स्युः। वेदशाखानुपलब्धिदृशा, यवनशासनकाले भारतीयवाङ्मयविनष्टिदृशा वा प्रातिशाख्यग्रन्थानामप्यनुपलब्धिः कल्पनीयेति चेत्, न। संहिता—ब्राह्मण—सूत्रग्रन्थानामिव शाखान्तरीयाणां द्वित्राणां प्रातिशाख्यग्रन्थानामदर्शनात् अन्येषु ग्रन्थेषु संकेताभावाच्च।

ननु प्रतिशाखानुसारं प्रातिशाख्यग्रन्थानुपलब्धित्वे अनन्तदेव-गोपालयज्वप्रभृत्याचार्याणां प्रातिशाख्यपदव्युत्पत्तिः कथं संगच्छत इत्याशङ्कायामुच्यते—

पाणिनीयसूत्रानुसारं 'प्रति' इति पदस्य लक्षणे, इत्थंभूताख्याने, भागे, वीप्सायाञ्च प्रयोगव्यवस्था वर्त्तते।[3] तत्र वीप्सार्थस्वीकारे प्रत्येकशाखामुद्दिश्य प्रातिशाख्यग्रन्थप्रवृत्तिप्रसङ्गः समुदेति। यदि लक्षणार्थे प्रतीति पदस्य प्रयोगः स्वीक्रियते चेत् प्रत्येकशाखामुद्दिश्य प्रातिशाख्यकल्पनायाः अवसरो नास्ति।

"प्रतिवृक्षं विद्योतते विद्युत्" इत्याद्युदाहरणेषु यथा विद्युदेकत्वेऽपि तस्याः सम्बन्धः प्रतिवृक्षमस्ति तथैव एकस्य प्रातिशाख्यग्रन्थस्य स्वचरणान्तर्गतानेकशाखाभिः सह सम्बन्धवचनं सुकरम्। तत्त्वबोधिनीकारास्तु अमुमेव लक्ष्यलक्षणभावरूपेण प्रतिपादयन्ति।[4]

परिमुखादिगणपठितप्रतिशाखशब्दात् भवार्थे प्रत्यये कृते प्रातिशाख्यपदस्य सिद्धिर्भवति।

**प्रातिशाख्यग्रन्थानां कालविचारः**

भारतीयाचार्याणां स्वीयैतिह्यलेखने प्रवृत्तिर्नासीत्। ग्रन्थकाराणां लक्ष्यं केवलं ज्ञानवृद्धिरासीत्। आत्मख्यापने ते औदासीन्यं भजन्ते स्म। अतएव प्रायशः भारतीय-

---

१ S. Varma : Critical studies in the phonetic observation of Indian Grammarians. p. 12.
बलदेव उपाध्याय : वैदिक साहित्य और संस्कृति पृ० २९९।

२. द्र० संस्कृत व्याकरण शास्त्र का इतिहास, भाग—२, पृ० २८५-८६।

३. 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (पा० १।४।९०)।

४. 'लक्षणे वृक्षं प्रति विद्योतते विद्युत्' (सि० कौ० १।४।९०)।
'वृक्षसम्बन्धिद्योतनमर्थः, सम्बन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति' (त० बो० १।४।९०)।

ग्रन्थकाराः स्वविषये कालविषये च किमपि न लिलिखुः। प्रातिशाख्यग्रन्थकृद्भिरपि स्वविषये किमपि न संकेतितम्। तैत्तिरीयप्रातिशाख्यकर्तुर्नाम एव इदानीं यावत् न ज्ञातमस्ति। येषां नामानि उपलभ्यन्ते तेषां विषयेऽपि सन्देह एव जायते यत् ते प्रातिशाख्यग्रन्थस्य कर्त्तारः सन्ति उत वा उपदेशका इति। अतः प्रातिशाख्यग्रन्थकालविषये नास्ति किमपि सुनिश्चितं मतम्।

बहुभिः पाश्चात्यैर्विद्वद्भिः भारतीयमनीषिभिश्च कालनिर्धारणविषये बहुप्रयतितमथापि मतभेदाः सन्ति। विचारचर्चायाः आधारभूतं तथ्यमिदमस्ति यत् प्रातिशाख्यग्रन्थानां रचना पाणिनिकालात् पूर्वं जाता उत वा पश्चात्। प्रश्नस्यास्य समाधाने विचारकैः प्रातिशाख्येषु पाणिनिकृताष्टाध्यायीग्रन्थे च प्रयुक्तानां पारिभाषिकपदानां, ग्रन्थरचनाशैल्याः, तत्र तत्रोल्लिखिताचार्यनाम्नां च तुलनात्मकमध्ययनं सम्पादितम्। लाइबिज—मैक्समूलर—वेबर—राथप्रभृतयो विद्वांसः प्रातिशाख्यानां रचनाकालः पाणिनिकालात् प्राक् मन्यन्ते। परं गोल्डस्टकरमहोदयस्याभिमतं वर्तते यत् समेऽपि प्रातिशाख्यग्रन्थाः पाणिनिकालादर्वाचीनाः सन्ति। पाणिनिमहोदयस्य कालः ५०० ई० पू० ऐतिहासिकैः सामान्यतः स्वीक्रियते।

पाणिनिकृताष्टाध्यायीग्रन्थेन सह प्रातिशाख्यसूत्रतुलनाधारेण केषाञ्चन विचारकाणामभिमतं वर्तते यत् ऋग्वेदप्रातिशाख्यम्, वाजसनेयिप्रातिशाख्यम्, तैत्तिरीयप्रातिशाख्यम्, चतुराध्यायिका, ऋकतन्त्रमित्येते ग्रन्थाः पाणिनिपूर्वकालिकाः सन्ति। अथर्ववेदप्रातिशाख्यं तु निश्शंकं पाणिनिमहोदयस्याविर्भावादनन्तरं विरचितमस्ति। एवं च सति अथर्ववेदप्रातिशाख्यं विहाय सर्वेषां प्रातिशाख्यग्रन्थानां कालस्य अर्वाक्तना सीमा पाणिनिमहोदयस्याविर्भावकालो वर्तते।[1] प्रातिशाख्यग्रन्थरचनायाः उच्चतमा सीमा यास्काचार्यस्य कालो विद्यते, यतोहि ऋग्वेदप्रातिशाख्ये (१७४२) यास्काचार्यस्य नामोल्लेखः वर्त्तते। एतेनेदं ज्ञायते यत् ऋग्वेदप्रातिशाख्यस्य रचना यास्काविर्भावकालादनन्तरं जाता। प्रायशो विद्वांसः यास्काचार्यस्य कालं ७०० ई० पू० मन्यन्ते। श्रीयुधिष्ठिरमीमांसकमहोदयस्तु पार्षद-( = प्रातिशाख्य-) ग्रन्थानां प्रवचनकालं विक्रमतः त्रिसहस्रवर्षपूर्वमपिसम्भावयति।[2]

**प्रातिशाख्यशास्त्रस्य पर्यायवाचिसंज्ञाः**

प्रातिशाख्यशास्त्रस्य कृते पार्षदानि, पारिषदसूत्रम् इति पदस्य वा व्यवहारः दृश्यते। निरुक्तकृता यास्केन प्रातिशाख्यशास्त्रस्य कृते पार्षदमिति संज्ञायाः व्यवहारः कृतः। ऋग्वेदप्रातिशाख्यस्य प्रत्यध्यायान्तपुष्पिकायां भाष्यकृता उवटेन पार्षदमिति संज्ञाया एव प्रयोगः कृतः। वर्गद्वयवृत्तिकारेण विष्णुमित्रेणापि पार्षदमिति संज्ञाया एव व्यवहारः कृतः। पर्षत्, परिषच्चेत्येतौ समानार्थकौ शब्दौ स्तः। उभयोरपि लोक-

---

१. द्र० डा० रामगोपाल : वैदिक व्याकरण पृ० ७।
डा० सूर्यकान्त : अथर्वप्रातिशाख्यम् पृ० ६४।

२. द्र० संस्कृत व्याकरणशास्त्र का इतिहास, भाग : २ पृ० २९०।

प्रसिद्धोऽर्थः 'सभा' 'गोष्ठी' वेति। प्राक्तनकाले एतादृश्यः परिषदः संगठिता आसन् यासु ध्वनिविज्ञानव्याकरणादि विषयकाः विचाराः नियमेन चर्च्यन्तेस्म। अत्र समान-चरणाः विभिन्नशाखाध्येतारः सम्मिलिताः सन्तः विचारयन्ति स्म। एवमादि परिषत्स-म्बद्धतया प्रातिशाख्यानि 'पार्षदानि' 'पारिषदसूत्रं' वेत्याख्यां भजन्ते। निरुक्तभाष्यकर्त्रा दुर्गेण पार्षदपदविषये उक्तम्—'स्वचरणपरिषदेव यैः प्रतिशाखानियतमेव पदावग्रह-प्रगृह्य-क्रमसंहिता-स्वरलक्षणमुच्यते तानीमानि पार्षदानि प्रातिशाख्यानीत्यर्थः।'[1]

## प्रातिशाख्यग्रन्थानां संख्या

कति प्रातिशाख्यग्रन्थाः आसन्नित्यस्मिन् विषयेऽप्यस्ति विचारभेदः। कतिपये ग्रन्थाः एतादृशाः सन्ति येषां गणना केचित् प्रातिशाख्ये कुर्वते, केचित्तु न। समुपलब्ध-ग्रन्थेषु पञ्चप्रातिशाख्यग्रन्थाः सविशेषं महत्त्वं धारयन्ति। ते च सन्ति—

(१) ऋग्वेदप्रातिशाख्यम् (ऋग्वेदस्य)।

(२) तैत्तिरीयप्रातिशाख्यम् (कृष्णयजुर्वेदस्य)।

(३) वाजसनेयप्रातिशाख्यम् (शुक्लयजुर्वेदस्य)।

(४) चतुरध्यायिका (अथर्ववेदस्य)।

(५) अथर्वप्रातिशाख्यञ्च ( अथर्वस्यैव)।

तत्र प्रथमस्य सम्बन्धः ऋग्वेदेन सह, द्वितीयस्य कृष्णयजुर्वेदेन, तृतीयस्य शुक्लयजुर्वेदेन, चतुर्थपञ्चमयोः सम्बन्धः अथर्ववेदेन सह वर्तते। सामसम्बद्धाः ऋक्तन्त्र-सामतन्त्र-अक्षरतन्त्र—पुष्पसूत्रञ्चेति चत्वारः प्रातिशाख्यग्रन्थाः सन्तीति पं० ए.एम. रामनाथदीक्षितमहोदया अभिप्रयन्ति।[2] पं० युधिष्ठिरमीमांसकमहोदयेन सूचीपत्राधारेण प्रकीर्णलेखसंकेताधारेण च बाष्कलप्रातिशाख्य—शांखायनप्रातिशाख्य-चारायणीयप्रातिशाख्यग्रन्थानामुपलब्धिसंभावना कृता।[3] मैत्रायणीयचरणस्य कश्चित् प्रातिशाख्यग्रन्थः आसीदिति सातवलेकरसम्पादितमैत्रायणीयसंहितायाः प्रस्तावनायां श्रीधरअण्णाशास्त्रीवारे महोदयाः संभावयन्ति।

## प्रातिशाख्यानामङ्गत्वविचारः

प्रातिशाख्यशास्त्रस्य वैदिकवाङ्मये समस्ति महत्त्वपूर्णं स्थानम्। परं प्राति-शाख्यशास्त्रस्याङ्गत्वविषये मतभेदाः समुपलभ्यन्ते। पाणिनीयशिक्षाप्रतिपादितेषु षडङ्गेषु प्रातिशाख्यशास्त्रस्य समावेशो नास्ति।[4] वेदानामध्ययनाध्यापने तत्संरक्षणे च

---

१. नि० १।१७ दुर्गवृत्तिः।

२. 'सन्ति सामवेदे चत्वारि प्रातिशाख्यानि—ऋक्तन्त्रम्, सामतन्त्रम्, अक्षरतन्त्रम्, पुष्पसूत्रञ्चेति'। (सामतन्त्रभूमिका पृ० ३)।

३. संस्कृत व्याकरणशास्त्र का इतिहास, भाग—२ पृ० २८४।

४. द्र० पा० शि० ४१-४२।
'शिक्षा कल्पोव्याकरण निरुक्तं छन्दोज्योतिषमिति षडङ्गानि'। च०व्यू० २ खं०।

महदुपकृतवतां प्रातिशाख्यग्रन्थानां षडङ्गानन्तर्गतत्वं वैचित्र्यमावहति। केश्चित्तु प्रातिशाख्यशास्त्रमुपाङ्गतया परिगृह्यते।[1] आधुनिकास्तु विचारकाः विषयेऽस्मिन्नौदासीन्यं भजमानाः—शास्त्रस्यास्य भूयान् सम्बन्धः शिक्षाशास्त्रेण सह वर्तत—इति प्रतिपादयन्ति।[2] तेषामभिमतं विद्यते यत् शिक्षाशास्त्रप्रतिपाद्याः विषयाः तैत्तिरीयशिक्षाध्यायोक्ताः प्रातिशाख्यग्रन्थेषु विवेचिताः सन्ति। ते च षट् यथा[3]—

वर्णः—उच्चारणीयाः अकारादिस्वराः व्यञ्जनानि च।
स्वरः—अकारादिस्वरवर्णधर्मा उदात्तादयः स्वराः।
मात्रा—उच्चारणकालः तदनुगता संज्ञा च।
बलम्—उच्चारणापेक्षितबाह्याभ्यन्तरप्रयत्नौ।
साम—अक्षराणां द्रुतादिवृत्तयः उत वा साम्येनोच्चारणम्।
सन्तानम्—प्रयोगे अध्ययनकाले वा समपेक्षितसन्धयः।

एते शिक्षाप्रतिपाद्यविषयाः प्रातिशाख्यग्रन्थेषु संगता भवन्तीत्येतस्मात्कारणात्प्रातिशाख्यशास्त्रं शिक्षान्तर्गतमिति विचारकाणामभिमतम्।

अत्र केचिदेवमाशेरते—

(क) प्रातिशाख्यानि वैदिकसंहितागतानि ऋक्पदान्याधारीकृत्य स्वविधानं प्रतिपादयन्ति। अतएव निरुक्तग्रन्थेऽप्यभिहितम्—"पदप्रकृतीनि सर्वचरणानां पार्षदानीति।"[4] शिक्षाग्रन्थेषु पदान्याधारीकृत्य नानुशासनं विद्यते, अपितु शास्त्रीयवर्णानां उदात्तादिस्वरधर्माणां तदीयोच्चारणपरम्परासम्बद्धान्यनुशासनानि मुख्यरूपेण निरूपितानि सन्ति।

(ख) आचार्यवर्यो दुर्गः प्रातिशाख्यशास्त्रस्य मुख्य प्रतिपाद्यविषये वक्ति यत्—पदज्ञापनं, पदेषु अवग्रहविधानम्, प्रगृह्या-प्रगृह्यविचारः, क्रमपाठचिन्तनम्, पदपाठस्य-संहितापाठनिष्पादनम्,—इत्येवमादयो विषयाः मुख्यतया सन्ति।[5] शिक्षाग्रन्थेषु एतेषां विषयाणां समावेशो नास्ति, न चैतद्विषयकं किञ्चिदुपलभ्यते च।

---

१. 'प्रतिपदं चानुपदं छन्दोभाषासमन्वितम्।
मीमांसा न्यायतर्कश्च उपाङ्गानि विदुर्बुधाः'॥ तै० प्रा० पृ० ५२९।
छन्दोभाषा = प्रातिशाख्यम्।

२. "ततः प्रातिशाख्यं शिक्षाभवितुमर्हतीति निश्चिनोमि।" पं० ए० एम० रामनाथदीक्षितः, सामतन्त्रम् भूमिका पृ० २।

३. 'शीक्षां व्याख्यास्यामः। वर्णः, स्वरः, मात्रा, बलं, साम, सन्तानः। इत्युक्तः शीक्षाध्यायः। तै० उ० १।२।

४. नि० १।१७।

५. "पार्षदानि स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पद-अवग्रह-प्रगृह्य-अप्रगृह्य-क्रमसंहितास्वरलक्षणमुच्यते तानीमानि पार्षदानि प्रातिशाख्यानीत्यर्थः"। नि० १।१७ दुर्गः।

(ग) शिक्षाशास्त्रात् पृथक्तया प्रातिशाख्यशास्त्रं स्वतन्त्रप्रस्थानतया विराजते। एतदुपोद्बलकं भाष्यकर्तुः उवटस्येदं कथनं महत्त्वपूर्णमस्ति—

"वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य। शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते।"[1]

(घ) तैत्तिरीयप्रातिशाख्यस्य भाष्यकारः गोपालयज्वमहोदयः प्रातिशाख्यं स्वतन्त्रशास्त्रं मन्वानः इदं शिक्षाव्याकरणयोः विवरणात्मकग्रन्थरूपं स्वीचक्रे।[2]

(ङ) ननु शास्त्रद्वयस्य विवरणात्मकत्वात् प्रातिशाख्यशास्त्रेण कस्याप्येकस्य शास्त्रस्यान्तर्गतेन भाव्यमिति चेत्, मैवम्। पदार्थद्वयसम्मिश्रणेन विजातीयगुणधर्मानुगतस्य कस्य चनापूर्वस्य स्वतन्त्रसिद्धस्य विशिष्टपदार्थस्य जन्यमानत्वात्। यथा वाजसनेयिप्राति-शाख्ये स्वतन्त्रसत्तायुक्तस्य स्वरितस्वरस्य निष्पत्तिप्रसङ्गे उवटाचार्यो निरूपयति— "यथा त्रपुताम्रयोः संयोगे धात्वन्तरस्य कांस्यस्योत्पत्तिः यथा वा गुडदध्नोरेकीभावे मार्जिकोत्पत्तिः, एवमुदात्तानुदात्तसंयोगे स्वरितोत्पत्तिः"। उदाहरणेनानेन यथाऽऽचार्येण स्वरितस्वरस्य पृथक् सत्ता स्थिरीकृता,[3] एवमेव शास्त्रद्वयस्य विवरणात्मकत्वेऽपि प्रातिशाख्यानि स्वतन्त्रशास्त्रतया स्वीकरणीयानि।

(च) किञ्च तैत्तिरीयशिक्षाध्याये शिक्षायाः सामान्यप्रतिपाद्यविषयाः वर्णिताः सन्ति।[4] शिक्षाग्रन्थलक्षणपर्यालोचनेनेदं स्पष्टं भवति यत् शिक्षाशास्त्रेषु वर्णस्वराद्युच्चा-रणविषयकाः मौलिकनिर्देशाः विचाराश्च सन्ति।[5] परं प्रातिशाख्यानां मुख्यं प्रतिपाद्यं भिन्नमस्ति। तत्र पदपाठेन संहितापाठस्य निष्पादनम्, सांहितिकसन्धीनामुदात्तादिस्वर-धर्माणाञ्च विवेचनम्, क्रमपाठनिरूपणमित्येवमादयो विषयाः सन्ति। अतश्च एकत्र शिक्षा-शास्त्रं वेदोच्चारणपरम्परायाः प्रज्ञापकमङ्गमस्ति अपरत्र प्रातिशाख्यं वैदिकपदस्वरूप-बोधकं तद्वाच्यापादकं तद्विवेचकं च शास्त्रमस्ति।

(छ) यद्यपि शिक्षायाः प्रतिपाद्यविषयः सन्तानम् (संस्कारः) अपि वर्तते, परं विषयस्यास्य सर्वाङ्गतया विवरणं कस्मिन्नपि शिक्षाग्रन्थे नास्ति। एतद्विपरीततया सन्तानविषयकः समग्रोपदेशः व्याकरणशास्त्रे वर्णितोऽस्ति। अतएव सायणाचार्यैः

---

१. वा० प्रा० १।१६९ उवटभाष्यम्।
२. 'शिक्षाव्याकरणानां यदयं विवरणात्मकः।
ग्रन्थस्ततोऽत्र नातीव शब्दसंकोच इष्यते'॥ तै० प्रा० १।२१ भाष्ये।
३. वा० प्रा० १।१२६ उ० भा०।
४. तै० उ० १।२।
५. 'वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा'। ऋ० भा० भू० पृ० ४९।
'शिक्षा स्वरवर्णोच्चारणं शास्त्रम्। शिक्षाणां यथोदितस्वरं वर्णोच्चारणम्'।
शि० सं० पृ० ३८५।
द्र० आचार्य दुर्गवृत्तिः नि० पृ० २।

सन्तानविषये—"एतच्च व्याकरणेऽभिहितत्वात् शिक्षायामुपेक्षितम्" इत्यभिहितम्[1]। एतेन स्पष्टं भवति यत् शिक्षाप्रतिपाद्याः षड् विषयाः सर्वाङ्गीणतया शिक्षाग्रन्थेषु न सन्ति। एते विषयाः यदि प्रातिशाख्यादिषु निरूपिताः प्राप्यन्ते चेत् ते अवश्यं ग्राह्या भवन्ति एवञ्च तेषां प्रतिपादकग्रन्थाः स्वतन्त्रशास्त्रतया मन्तव्याः भवन्ति, न तु शिक्षाङ्गतया। अतश्च प्रातिशाख्यं स्वतन्त्रशास्त्रं सिद्ध्यति, यन्न शिक्षाङ्गमपितु स्वतन्त्रतया उपाङ्गमस्ति।

**प्रातिशाख्यानां प्रयोजनम्**

वेदोच्चारणपरम्परायाः संरक्षणं तद्गतवैशिष्ट्यञ्च कथं सुरक्षितं भवेत् इत्यासीत् काचिच्चिन्ता तदानीन्तनानार्यवर्याणाम्। एतत्परिहारार्थं आचार्यवर्यैः प्रातिशाख्य-शास्त्रं प्रवर्तितम्। अतएव उवटाचार्येण स्वकीयभाष्यप्रारम्भे प्रातिशाख्यप्रयोजनमनु-लक्ष्योक्तम्—

"जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः।
प्रातिशाख्यमतो ज्ञेयम् सम्यक्पाठस्य सिद्धये" ॥[2]

तात्पर्यमिदं वर्तते यद् वेदानां सम्यक्पाठसिद्धिः प्रातिशाख्यमन्तरा न भवितु-मर्हति। अस्माद्धेतोः सम्यक्पाठसिद्धिः प्रातिशाख्यशास्त्रस्य परमं प्रयोजनम् अस्ति। प्रातिशाख्यकारेण भगवता कात्यायनेनापि सूत्रे कथितं यद्, वर्णानां ये दोषाः तेषां विवेकार्थं प्रातिशाख्यशास्त्रमध्येतव्यम्।[3] यावता पदानां साधुस्वरूपं तदुच्चारणया-थार्थ्यञ्च परिज्ञातं न भवति तावता शुद्धप्रयोगः कर्तुं न पार्यते। प्रातिशाख्यशास्त्रेण वैदिकपदानां वर्णानाञ्च साधुस्वरूपज्ञानं भवति, तज्ज्ञानेन च दोषाणां पृथक्करणं सम्भवति। अतश्च वैदिकपदानां वर्णानाञ्च शुद्धस्वरूपरक्षा प्रातिशाख्यस्य प्रथमं प्रयोजनमस्ति। वैदिकाभरणकारस्तु-गुरुत्व-लघुता-साम्यमिति प्रयोजनानि मनुते।[4] तैत्तिरीयप्रतिशाख्यग्रन्थे वर्णितमस्ति यत् वेदाध्यायिभिः गुरुत्व-लघुता-साम्य-ह्रस्व-दीर्घ-प्लुत-लोपागम-विकार-प्रकृतिभाव-विक्रम-क्रम-स्वरितोदात्त-श्वास-नादाङ्गादीनि प्रत्येतव्यानि।[5] अपरत्र च तैत्तिरीयप्रतिशाख्ये उक्तम्—यः पदपाठक्रमपाठयोर्भेदं

---

१. 'सन्तानः संहिता। वायवायाहि (ऋ० १।२।१) इत्यत्रावादेशः, इन्द्राग्नी आगतम् (ऋ० ३।१२।१) इत्यत्र प्रकृतिभावः, इत्यादि। एतच्च व्याकरणेऽभिहितत्वात् शिक्षायामुपेक्षितम्'। ऋ० भा० भू० पृ० ५०।

२. वा० प्रा० १।१ प्रारम्भिकश्लोकः।

३. 'वर्णदोषविवेकार्थम्'। वा० प्रा० १।२६।

४. 'अथ किमर्थं प्रतिशाख्यं नाम लक्षणं प्रणीयते? तदुच्यते—गुरुत्वं लघुता साम्य-मित्यादि सर्वं तु विज्ञेयं इति वक्ष्यति। तै० प्रा० १।१ भाष्यम्।

५. 'गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च।
लोपागमविकारांश्च प्रकृतिविक्रमः क्रमः।
स्वरितोदात्तनीचत्वं श्वासोनादोऽङ्गमेव च।
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता॥ तै० प्रा० २४।५।

जानाति यश्च स्वरमात्राविभागज्ञः स आचार्यत्वं प्राप्नोति।[1] एभिर्विधानैरिदं ज्ञातं भवति यदाचार्यत्वं गुरुत्वलघुतादिज्ञानसापेक्षम्। एतेषां ज्ञानं प्रातिशाख्यशास्त्रेण भवति। यद्यपि गुरुत्वादिविषयाणां प्रतिपादनं शिक्षाव्याकरणादि ग्रन्थेष्वपि विद्यते तथापि विप्रकीर्णत्वात्, विषयविभागज्ञानाभावात्, प्रतिशाखं विशेषनिरूपणाभावाच्च तत्र गुरुत्वादिविषयाणां सुगमावबोधो न भवति। परं प्रातिशाख्यग्रन्थेषु तु समेषामेतेषां विषयाणां सुसम्बद्धक्रमेण प्रतिशाखमनुलक्ष्यप्रतिपादनात् सारल्येन बोधः भवति। अतश्च प्रतिवेदशाखाविशेषस्वरूपपरिज्ञानार्थं प्रातिशाख्यग्रन्थाः निर्मिताऽभूवन्। ऋग्वेदप्रातिशाख्यभाष्यारम्भे उवटाचार्येण प्रयोजनं प्रतिपादयता समुक्तम्—

शिक्षाच्छन्दोव्याकरणैः सामान्येनोक्तलक्षणम्।
तदेवमिह शाखायामिति शास्त्रप्रयोजनम्॥[2]

**प्रातिशाख्यशास्त्रस्य प्रतिपाद्यम्**

प्रातिशाख्यग्रन्थानां सम्बन्धः मुख्यतया वेदचरणान्तर्गतशाखाविशेषैः सह वर्तते। अतः स्व-स्व शाखाविहितसंहिता-पदक्रमादिपाठानां संरक्षणं प्रातिशाख्यानां मुख्यं लक्ष्यमस्ति। प्रातिशाख्यग्रन्थेषु वैदिकसन्धीनां विस्तृतं विवेचनम्, पदपाठनियमाः, क्रमपाठस्वरूपम्, क्रमहेतवः, अवग्रहविधानम्—इत्येवमादयो विषयाः प्रतिपादिताः सन्ति, येषां विवरणमन्यत्र दुर्लभमेव। एतदतिरिक्तं वर्णानां स्थानकरणे वर्णोपत्तिविचारः, उदात्तादिस्वरधर्माणां सामान्यनियमाः, विशिष्टपदेषु स्वरविधानम्, विशिष्टपदेषु दीर्घत्वविधानम्, दीर्घपदेषु ह्रस्वविधानम्, नतिसन्धयः, विसर्जनीयविकारादीनां च सुविशदं वर्णनमस्ति। पदपाठात् संहितापाठनिर्माणम्, क्रमपाठनियमाः, अवग्रहस्थलानि, परिग्रहप्रकारः, वेदाध्ययनविधिः इति विषयाणां सुसम्बद्धं वैज्ञानिकदृशा च निरुपणं विहितमस्ति। एवं प्रातिशाख्यग्रन्थाः शिक्षाविहितानां व्याकरणविहितानां च गूढविषयाणां गहनमध्ययनं प्रस्तुवन्ति यत्खलु दुर्लभमन्यत्र। वैदिकग्रन्थानाम् अर्थज्ञानाय यथा निरुक्तशास्त्रमुपकारकमस्ति तथैव वेदमन्त्राणां बाह्यस्वरूपपरिज्ञानार्थं प्रातिशाख्यानि महदुपकुर्वन्तीति स्फुटम्।[3]

**प्रातिशाख्यानां पौर्वापर्यविचारः**

अत्र विषये विदुषां बहवो मतभेदाः सन्ति। प्रायशः सर्वैरपि विद्वद्भिः ऋग्वेदप्रातिशाख्यस्य प्रातिशाख्यान्तराण्यपेक्ष्य प्राचीनत्वं प्रामाणिकत्वञ्च स्वीक्रियते।

---

१. पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसम्पदम्॥ तै० प्रा० २४।६।

२. ऋ० प्रा० १।१ भाष्यारम्भे उवटाचार्यः।

३. 'वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य। शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते। अतएव हेतोः शिष्याणामेतच्छास्त्रश्राविणां वृद्धिर्भवति'। वा० प्रा० १।१९६ भाष्ये।

ऋक्प्रतिशाख्यानन्तरं तैत्तिरीयप्रतिशाख्यस्य स्थानं समङ्गीकृतं मनीषिभिः। डा० सिद्धेश्वरवर्ममहोदयानुसारं 'तैत्तिरीयप्रातिशाख्यस्य' कतिपये अंशाः प्राचीनतराः तथा कतिपये अर्वाचीनाः सन्ति। 'वाजसनेयप्रतिशाख्यम्' चतुरध्यायिकाग्रन्थात् प्राक्तनमस्तीति केचिदभिप्रयन्ति। अन्ये तु 'चतुरध्यायिकां' प्राचीनतरां मन्यन्ते। डा० सिद्धेश्वरवर्ममहोदयानामभिमतं विद्यते यत् वाजसनेयिप्रातिशाख्यस्य ४।१२० सूत्रे शौनकाचार्यस्य मतमुद्धृतमस्ति यत् खलु शौनकीयचतुरध्यायिकाग्रन्थसूत्रेण सह साम्यं धत्ते।[१] अतश्च तैः वाजसनेयिप्रतिशाख्यस्य चतुरध्यायिकातः अन्वग्भावित्वं स्वीकृतम्।[२] परं मैक्समूलर-बेबर गोल्डस्टकर-प्रभृतयो विद्वांसः वाजसनेयिप्रातिशाख्यं चतुरध्यायिकातः प्राक्तनमितिसाधितम्। विद्वद्वरेण्यानां डा० गोपालचन्द्रमिश्र महोदयानां मतन्तु विद्यते यद् वाजसनेयप्रातिशाख्यस्य आन्तरसाक्ष्याधारेणास्य प्राग्भावित्वं सर्वथा सुशकम्। तद्यथा—

(i) वाजसनेयप्रातिशाख्यस्य सूत्रविश्लेषणाधारेणास्य ग्रन्थस्य प्राचीनतरत्वं सिद्धयति। यतोहि भाष्यकारोव्वटाचार्याणां पुरतः सूत्रसंख्या विषये तदानुपूर्वीविषये चासीत् कश्चन विवादसंरम्भः। एतस्मादेवकारणाद् भाष्यकारैः क्वचिदुक्तम्—'एके एतत्सूत्रं पठन्ति सोऽपपाठः[३]", क्वचिच्च लिखितम्—'इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात् इति'।[४] अन्यत्र स्थलेषु भाष्यकारः अनन्तभट्टः कतिपयनवीनसूत्राणां पाठं योजयति अथ च तान्यधिकृत्य भाषतेऽपि।[५] एतेनेदं प्रतीयते यद् ग्रन्थस्य प्राचीनत्वात् भाष्यकाराणां समक्षं सूत्रपाठसंख्याविषये तदीयानुपूर्वीविषये च नासीत् कश्चनाधारः।

(ii) वाजसनेयप्रातिशाख्यग्रन्थस्योपसंहारे इदं लिखितमुपलभ्यते—"इत्याह स्वर-संस्कार-प्रतिष्ठापयिता भगवान् कात्यायनः"[६]। अस्मिन् वाक्ये भगवानिति विशेषणेन साकं स्वर-संस्कारप्रतिष्ठापयितृरूपेण आचार्यवर्यस्य कात्यायनस्य स्मरणं विद्यते। अपरत्र ऋक्प्रातिशाख्यग्रन्थस्योपसंहारे भाष्यकारः उवटाचार्यः एवं लिखति—"इत्याह भगवाञ्छौनकः।" अत्रेदं ध्यातव्यमस्ति यद् उवटाचार्यः वाजसनेयिप्रातिशाख्यप्रणेतारं सूत्रकारं कात्यायनं स्वर-संस्कारप्रतिष्ठापयितृविशेषणेन स्मरति। येन भाष्यकारस्य कश्चनविशिष्टः श्रद्धाभावः आचार्यं प्रति ध्वन्यते। स एव उवटाचार्यः ऋक् प्रातिशाख्यकर्तारं शौनकं केवलं भगवानितिपदेन बोधयति, न तु स्वर-संस्कारप्रतिष्ठा-

---

१. 'असस्थाने मुदि द्वितीयं शौनकस्य'। वा० प्रा० ४।१२०
'द्वितीयाः शषसेषु'। च० अ० २।६।

२. द्र० S. Varma : Critical studies in the phonetic observation of Indian Grammarians, p. 26.

३. वा० प्रा० ४।१२७ उवटभाष्ये।

४. वा० प्रा० ४।६० उवटभाष्ये।

५. वा० प्रा० ४।३३ (मद्राससंस्करणम्)।

६. वाजसनेयप्रातिशाख्यस्य मुद्रितसंस्करणेषु इदम् अष्टमाध्यायस्य उपान्त्यं सूत्रमस्ति। संभवतः इदं वाक्यं कालान्तरे योजितम् भवेत्।

पर्यितृरूपेण। अतः वाजसनेयप्रातिशाख्यस्य प्राचीनतरत्वं न सर्वथा निर्मूलमपि तु अनुसन्धानसापेक्षमस्ति।

सामवेदीयकौथुमशाखयासम्बद्धस्य ऋक्तन्त्राभिधेयस्य ग्रन्थस्य कृते बर्नेल-महोदयानामभिमतं विद्यते यदयं पाणिनेः पश्चात्कालिको विद्यते। परं डा० सूर्यकान्त-महोदयेन पुष्टप्रमाणैः ऋक्तन्त्रस्य पाणिनिपूर्वभावित्वं संसाधितम्।[१] अथर्ववेदप्राति-शाख्यं पाणिनितः पश्चात्कालिको रचना विद्यते।[२] अतः ग्रन्थोऽयं समस्तेषु प्राति-शाख्येषु अर्वाचीनो विद्यते।

**वाजसनेयिप्रातिशाख्यम्**

शुक्लयजुर्वेदसम्बद्धं वाजसनेयिप्रातिशाख्यं आचार्यवर्यस्य कात्यायनस्य कृति-र्विद्यते। ग्रन्थोऽयं परिमाणदृष्ट्या ऋक्प्रातिशाख्यतः लघीयान् अन्यप्रातिशाख्यग्रन्था-पेक्षया च ज्यायान् वर्तते। अष्टमाध्यायगतानि कानिचन सूत्राणि विहाय सम्पूर्णो ग्रन्थः सूत्रशैल्यामुपनिबद्धः। अष्टमाध्याये षट्सूत्राणि अनुष्टुप्छन्दसा प्रोक्तानि। अष्टा-ध्यायेषु विभक्तोऽयं ग्रन्थो विद्यते। समुपलब्धेषु संस्करणेषु सूत्रसंख्यायां सारूप्यं नास्ति। तत्रापि अष्टमाध्याये सूत्रव्यवस्था संख्या च नितान्तां अव्यवस्थितिं भजेते। अतः प्रतिशाख्यस्य कृत्स्नसूत्रसंख्यायाः निम्नतमा सीमा ७२५, उच्चतमा च सीमा ७४० विद्यते। अस्य प्रातिशाख्यस्य सूत्रपाठो विवादग्रस्तो विद्यते। यतो हि भाष्यकारः उवटः अनेकेषु स्थलेषु सूत्राणामपपाठतां[३] किंवा वैयर्थ्यतां[४] प्रकटयति। एवञ्च मुद्रितसंस्करणानां सूत्रपाठस्य तुलनात्मकेनाध्ययनेन इदं प्राप्तं भवति यत् सूत्रेषु अनेकपाठभेदा अपि विद्यन्ते।[५]

वैषयिकवस्तुदृष्ट्या वाजसनेयिप्रातिशाख्यं महत्त्वपूर्णमस्ति, परं विषयाणामनु-क्रमव्यवस्था ऋक्प्रातिशाख्यवत् सुप्रसन्ना नास्ति। अष्टाध्यायेषु प्रतिपादिताः मुख्याः विषयाः एवं सन्ति—

| अध्यायसंख्या | विषयाः |
|---|---|
| प्रथमः | शब्दोत्पत्तिचिन्तनम्, वेदाध्ययनविधिः, संज्ञाःपरिभाषाश्च, वर्णानामुच्चारणस्था-नानि, करणानि, पूर्वाङ्गपराङ्गचिन्ता। |
| द्वितीयः | स्वरसम्बन्धिनियमाः। |
| तृतीयः | सन्धिनियमाः। |

१. ऋक्तन्त्रम्, पृ० ४०।
२. Atharva Pratisakhya : p. 64.
३. वा० प्रा० ४।१२०, १२७।
४. वा० प्रा० ४।६०।
५. यथा—वा० प्रा० १।८, १।१४, ४।१९०।

| | |
|---|---|
| चतुर्थः | सन्धिनियमाः, पदपाठनियमाः, क्रमपाठनियमाश्च । |
| पञ्चमः | अवग्रहसम्बन्धिनियमाः । |
| षष्ठः | आख्यातोपसर्गपदानां स्वरनियमाः, पदस्वरूपनिरूपणञ्च । |
| सप्तमः | अवसानाक्षरपरिग्रहनियमाः । |
| अष्टमः | वर्णसमाम्नायः, वेदाध्ययनविधिः तत्फलञ्च, वर्णानां देवताः, चत्वारि पदजातानि, तेषां लक्षणानि दैवतनिरूपणञ्च । |

वाजसनेयप्रातिशाख्यग्रन्थे सूत्रकारेण तत्तत्स्थलेषु नवसंख्याकानामाचार्याणां नामानि निर्दिश्य तेषां मतानि प्रतिपादितानि। ते च यथा—काण्वः[1], शाकटायनः[2], शाकल्यः[3], औपशविः[4], काश्यपः[5], दाल्भ्यः[6], शौनकः[7], जातूकर्ण्यः[8], गार्ग्यश्च[9]। एतदतिरिक्तं—एके[10], एकेषाम्[11] माध्यन्दिनानाम्[12] इत्यादि शब्दैरपि मतानि परिगृहीतानि दृश्यन्ते। पारिभाषिकपदवृष्ट्याऽपि ग्रन्थोऽयं महत्त्वमादधति। अत्र द्विप्रकारकाः पारिभाषिकशब्दाः दृश्यन्ते। अन्वर्थाभिधानाः यौगिकाः शब्दाः, अतिपरोक्षवृत्तिरूपाः रूढ़ाः शब्दाः अपराः। एषु—जित्-मुत्-धि-सिम् इत्यादयः एवंविधाः पारिभाषिकशब्दाः सन्ति, येषां प्रातिशाख्यान्तरेषु प्रयोगाभावो विद्यते। अस्य प्रातिशाख्यस्य त्रिभिर्नामभिर्व्यवहारः समुपलभ्यते—

(१) वाजसनेयिप्रातिशाख्यम्।

(२) शुक्लयजुः प्रातिशाख्यम्।

(३) कात्यायनप्रातिशाख्यञ्चेति।

---

१. वा० प्रा० १।१२३, १।१४९।
२. वा० प्रा० ३।९, ३।१२, ३।८७, ४।५, १२९, १९१।
३. वा० प्रा० ३।१०, ११।
४. वा० प्रा० ३।१३१।
५. वा० प्रा० ४।५, ४।१६०।
६. वा० प्रा० ४।१६।
७. वा० प्रा० ४।१२०।
८. वा० प्रा० ४।१२५, ४।१६०, ५।२२।
९. वा० प्रा० ४।१६७।
१०. वा० प्रा० २।१२८, ३।९१, ४।८८, ५।२३, ७।७।
११. वा० प्रा० ४।५७, ४।१२८, ४।१४६।
१२. वा० प्रा० ८।३१।

**सूत्रकारः कात्यायनः तत्कृतित्वञ्च**

वाजसनेयिप्रातिशाख्यविरचयितुः कात्यायनस्य सम्बन्धे प्राच्यप्रतीच्यविद्वद्भिः बहु समालोचितमस्ति। अथापि तेषु मतभेदाः दृश्यन्ते। कात्यायनाचार्यविषये यानि तथ्यानि विचारकैः प्रस्तुतानि तान्येवं सन्ति—

'त्रिकाण्डशेषकोशः' इति ग्रन्थस्य कर्त्रा पुरुषोत्तमदेवेन कात्यायनस्य पञ्च-नामानि मेधाजित्, कात्यः-कात्यायनः-पुनर्वसुः वररुचिश्चेति प्रतिपादितानि।[1] महाभाष्यकारेण पतञ्जलिनाऽपि कात्य-कात्यायन—वररुचीत्यभिधानानामुल्लेखः कृतो वर्तते।[2] भाषावृत्तौ पुनर्वसु—वररुचिनामनी समानसंज्ञात्वेनोक्ते।[3] 'कथासरित्सागर' ग्रन्थे 'श्रुतधर' इत्याख्या वररुचिकात्यायनस्य कृते व्यवहृता वर्तते।[4] हेमचन्द्रकृते कोशग्रन्थे कात्यायननामसु मेधाजित्, वररुचिः, पुनर्वसुरितिनामानि पठितानि सन्ति।[5] अत्रेदमवधेयम्भवति यत् यथा आचार्यवर्यस्य कौटिल्यस्य कृते 'वात्स्यायन' इति संज्ञा व्यवह्रियते, यथा च भगवतः पाणिनेः कृते 'शालातुरीय' इति संज्ञा प्रयुज्यते, तथैव कात्यायनाचार्यस्य कृते उपर्युक्तानि नामानि ग्रन्थकृद्भिरुद्धृतानि सन्ति। श्रीपाददामोदरसातवलेकरमहोदयेन 'पारस्कर' इत्याख्यापि कात्यायनस्य कृते साधिता वर्तते।[6]

काश्मीराभिजनेन सोमदेवेन स्वकीयकथासरित्सागरग्रन्थे कात्यायनविषयिणी एका आख्यायिका उद्धृता वर्तते। तदनुसारं वररुचिर्कात्यायनः कुशाग्रबुद्धिः मेधावी बालकः आसीत्। तेन व्याडिसकाशात् प्रातिशाख्यशास्त्रमधीत्य सद्यएवानुपूर्वीक्रमेण तच्छास्त्रस्य श्रावणं विहितम्। गूढशास्त्रेषु गभीरविषयेषु च सपदि तेन अधिकारो लब्धः। एवञ्च एकदा शब्दशास्त्रचर्चायां पाणिनिं पराजितवान्। परं शिवस्यानुग्रहेणा-न्ततः पाणिनिना विजयश्रीर्लब्धा। तदनन्तरमुग्रतपःप्रभावेण कात्यायनः भगवन्त-माशुतोषं तोषयन् शब्दशास्त्रस्योपदेशं गृहीतवान्। स्वप्रतिभया कालान्तरे कात्यायनेन पाणिनिव्याकरणस्य पूर्णं परिष्कृतञ्चस्वरूपं प्रकाशितम्। एवञ्च महाराजस्य नन्दस्य, तदुत्तराधिकारिणः योगनन्दस्य च मन्त्रिता कृता। कथासरित्सागरग्रन्थानुसारं

---

१. 'मेधावी वाथ मेधाजित् कात्यः कात्यायनश्च सः।
पुनर्वसुर्वररुचिर्गोनर्दीयः पतञ्जलिः॥' त्रिकाण्डशेषकोषः २।२५।

२. प्रोवाच भगवान् कात्यः............। महाभाष्यम् ३।२।३।

३. पुनर्वसुर्वररुचिः ४।३।३४।

४. 'एष श्रुतधरो जातो विद्यां वर्षादवाप्स्यति।' १।२।६९-७०।

५. 'कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसुः।' अभिधानचिन्तामणिः ३।८५२।

६. 'याज्ञवल्क्यस्य पुत्रः कात्यायनीसजातः कात्यायनः परासां शाखानां ग्रन्थनिर्माण-करणात् पारस्कर इति नाम्ना प्रसिद्धः।' का० सं० भू० पृ० १६।

कात्यायनोऽयं शिवगणेषु प्रामुख्यं भजमानस्य पुष्पदन्तइत्यभिधेयस्यावतारभूतः आसीत्।[1]

ऋक्सर्वानुक्रमणीग्रन्थभाष्यकृता षड्गुरुशिष्येण स्वकीयपद्यभूमिकायां कात्यायनस्य शौनकाचार्यशिष्यत्वम् आश्वलायनसतीर्थ्यत्वञ्च उक्तम्। कात्यायनेन वाजिसूत्रम्, उपग्रन्थाः, स्मृतिः, भ्राजमानश्लोकाः, ब्राह्मकारिका, पाणिनीयव्याकरणे महावार्तिकम्, ऋक्सर्वानुक्रमणी प्रभृतयोग्रन्थाः व्यरचीत्यपि उल्लिखितम्।[2] श्रीकृष्णचरितकाव्य-प्रारम्भे स्कन्दगुप्तेन लिखितमस्ति यत् कात्यायनः स्वेरितवार्तिकैर्यथा व्याकरणशास्त्रं पुपोष, तथैव स्वर्गारोहणकाव्यं निर्माय तेन कविकर्मदक्षताऽपि प्रदर्शिता।[3] प्रतिज्ञापरि-शिष्टग्रन्थभाष्यकृता अनन्तदेवयाज्ञिकेन कात्यायनस्य स्मरणमष्टादशपरिशिष्टग्रन्थैस्सह-कल्पसूत्रकाररूपेण कृतम्।[4]

स्कन्दपुराणस्य नागरखण्डान्तर्गत-१३०-३१ अध्यायानुसारं कात्यायन्यां जातो महर्षिकात्यायनः याज्ञवल्क्यपुत्रः यज्ञविद्याविचक्षणः वैदिककल्पसूत्रग्रन्थकारश्चासीत्।

---

१. "ततः स मर्त्यवपुषा पुष्पदन्तः परिभ्रमन्। नाम्ना वररुचिः किञ्च कात्यायन इति श्रुतः।........जिज्ञासार्थम मे प्रातिशाख्यमपठ्यत। तथैव तन्मया सर्वं पठितं पश्यतोस्तयोः॥........एवं व्याडीन्द्रदत्ताभ्यां तत्र वसन्क्रमात्। प्राप्तोऽहं सर्व-विद्यानां पारमुत्क्रान्त शैशवः॥........अष्टमेऽह्नि मया तस्मान्जिते तत्समनन्तरम्। नभस्थेन महाघोरो हुंकारः शम्भुना कृतः। तेन प्रणष्टमैन्द्रन्तदस्मद् व्याकरणं भुवि। जिता पाणिनिना सर्वे मूर्खीभूता वयं पुनः॥........अत्रान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः। आराधितो मया देवो वरदः पार्वतीपतिः। तदैव तेन शास्त्रं मे पाणिनीयं प्रकाशितम्। तदिच्छानुग्रहादेव मया पूर्णीकृतं च तत्।........ पारं सम्प्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम्।........इत्युक्त्वैव गते व्याडौ दातुं तां गुरुदक्षिणाम्। तदैवानीय दत्ता मे योगनन्देन मन्त्रिणे"। कथासरित्सागरः १।२ एवं १।४।

२. "शौनकस्य तु शिष्योऽभूद् भगवानाश्वलायनः।........शौनकस्य प्रसादेन कर्मज्ञः समपद्यत। कात्यायनमुनिः........वाजिनां सूत्रकृत् साम्नामुपग्रन्थस्य कारकः। स्मृतेश्च कर्त्ता श्लोकानां भ्राजमानां च कारकः। अथर्वणां निर्ममे यः सम्बन्धे ब्राह्मकारिकाः। महावार्त्तिकनौकारः पाणिनीय महार्णवे। यत्प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः। व्याख्यञ्छान्तनवीयेन महाभाष्येण हर्षितः। तपोयोगा न्निर्ममे यः सर्वानुक्रमणीमिमाम्॥" ऋक्सर्वानुक्रमणी (षड्गुरुशिष्यकृतायां भूमिकायाम्)।

३. "यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान्भुवि। भाष्येण रुचिरेणैव ख्यातो वररुचिः कविः॥ न केवलं व्याकरणं पुपोष दाक्षीसुत स्वेरित वार्त्तिकैर्यः। काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः"॥

४. 'कल्पानष्टादशपरिशिष्टानि च प्रणीतवतो भगवतः कात्यायनस्य' प्र० परि० १।१॥

अस्य वररुचिर्नामा एकः पुत्रो बभूव ।[1]

वृत्तजातसमुच्चयनामकप्राकृतछन्दोग्रन्थस्य टीकाकारेण चक्रपालात्मजेन गोपालेन स्वकीयोपोद्‌घाते छन्दः शास्त्ररचयितृषु पिङ्गलादिवत् कात्यायनस्योल्लेखः सनमस्कृति कृतः। अमरकोषस्य एकस्मिन्हस्तलेखे अष्टादशकोशकारगणनाप्रसङ्गे वररुचिकात्यायनयोः पृथक्-पृथक् कोशकाररूपेण निर्देशः कृतो विद्यते। कातन्त्रव्याकरणवृत्तिकारदुर्गसिंहल्लेखेन ज्ञायते यत् षट्पादीयकृत्प्रकरणस्य रचयिता कात्यायनो वर्तते।

**पाश्चात्यविदुषां मतम्**

मैक्समूलर-वेबर-गोल्डस्टुकरप्रभृतिभिर्विद्वद्भिः कात्यायनविषये स्वकीयमतानि प्रतिपादितानि। परं त्रयोऽपि परस्परं विवदन्ते। कथासरित्सागरस्य सोमदेवलेखाधारेण मैक्समूलरमहोदयस्य मतमस्ति यत् शौनकाश्वलायन-कात्यायन-पतञ्जलि-व्यासरूपात्मिका पाञ्चपौरुषी गुरु-शिष्य-परम्परा काचिदासीत्।[2] तत्र कात्यायनापरपर्यायो वररुचिः पाणिनिसमकालिकः आसीत्।[3] परं समेऽपि प्रातिशाख्यग्रन्थाः पाणिनिअष्टाध्यायीतः पूर्वमेव विरचिताः।[4] मैक्समूलरानुसारं ग्रन्थरचनायाः क्रमः इत्थं विद्यते—

(अ) कात्यायनप्रातिशाख्यम्।

(ब) पाणिनीयव्याकरणम्।

(स) कात्यायनीयं वार्तिकम्।

कथासरित्सागराधारेण मैक्समूलरमहोदयेन कात्यायनस्य कालः ईशातः पूर्वं चतुर्थशताब्द्याः उत्तरार्द्धः (३५० ई० पू०) स्थिरीकृतः।[5]

आटोबोथलिङ्कमहोदयानुसारमपि कात्यायनस्य समयः ई० पूर्वचतुर्थशताब्द्याः मध्योऽस्ति। राजतरंगिणीग्रन्थस्य सन्दर्भानुसारेण अभिमन्युनामकेन केनापि राज्ञा

---

१. 'एवं सिद्धिसमापन्नो याज्ञवल्क्यो द्विजोत्तमः।''''''''जनकाय नरेन्द्राय व्याख्याय च ततः परम्। कात्यायनसुतं प्राप्य वेदसूत्रस्य कारकम्॥ स्क० पु० (ना० खं०) १३०।७०-७१; ''''''कात्यायनाभिधं च यज्ञविद्याविचक्षणम्। पुत्रो वररुचिर्यस्य बभूव गुणसागरः'। स्क० पु० (ना० खं०) १३१।४८-४९।

२. द्र० History of Ancient Sanskrit Literature, p. 125.

३. द्र० History of Ancient Sanskrit Literature, p. 71.

४. द्र० ,, ,, ,, ,, p. 62.

५. "Katyayana may be placed, according to the interpretation of the Somdeva's story, in the second half of the Fourth Century B. C.—
History of Ancient Sanskrit Literature, p. 127

चन्द्रप्रभृतयो वैयाकरणाः कश्मीरदेशेषु पातञ्जलमहाभाष्यपाठनार्थमादिष्टाः। ओटोबोथलिङ्गमहोदयः अभिमन्युराजस्य कालः ई० पूर्व १०० अनुमिनोति। एतेनाधारेण च तेन पाणिनेः कालः ई० पू० ३५० निर्धारितः।[१] एवमपि कात्यायनस्य कालः ई० पू० चतुर्थशतीमध्यः सिध्यति। 'लैसेन' महोदयः उपर्युक्तं कालनिर्धारणं खण्डयन् पाणिनिकालः ई० पू० द्वितीयशताब्दीति साधितवान्।[२]

वेबर-मैक्डानलमहोदयौ मैक्समूलरदृष्टिकोणविरुद्धौ द्वौ पृथक्-पृथक् कात्यायनौ मन्येते।[३] परमुभावपि वाजसनेयिप्रातिशाख्यस्य रचना पाणिनिकालात्प्राग् जातेत्यत्र मैक्समूलरेण साकं संवदतः। मैक्डानलमहोदयस्याभिमतं विद्यते यत् एकः कात्यायनः परिशिष्टादि ग्रन्थानां वाजसनेयप्रातिशाख्यस्य च निर्माताऽऽसीत्। अपरश्च कश्चन कात्यायनः पाणिनिव्याकरणस्य वार्त्तिककारः आसीत्। यतोहि वैदिकभाषायाः कानिचिद् विशिष्टरूपाणि यानि पाणिनिव्याकरणद्वारा न साधितुं शक्यन्ते तानि परिशिष्टादि-ग्रन्थेषु समुपलभ्यन्ते। तानि पाणिनीयव्याकरणेन साधितुमशक्यानीति मैक्डोनल-महोदयस्य तर्को विद्यते।

गोल्डस्टुकरमहोदयस्य मतमस्ति यद् वाजसनेयिप्रातिशाख्यस्य रचयिता, वार्तिककारश्च कात्यायनः समान एव। कात्यायनेन पूर्वं महावार्तिकस्य रचना कृता तदनन्तरं च वाजसनेयिप्रातिशाख्यस्येति असौ मन्यते। वैदिकभाषायां पाणिनिवर्यस्य नियमा' अपूर्णा आसन् इति कृत्वा कात्यायनः तन्न्यूनतापूर्त्यर्थं प्रातिशाख्यं व्यरचयत्।[४] एवं गोल्डस्टुकरमहोदयः एककात्यायनपक्षे मैक्समूलरेण साकं संवदति। परं समेऽपि प्रातिशाख्यग्रन्थाः पाणिनिपश्चात् कालिका इति उद्घोषयन् मैक्समूलर-वेबर-राथ-बर्नेल-लाइबिच प्रभृतिभिर्विद्वद्भिः पृथक्तया कश्चन तृतीयः पन्थाः समासादितः। राँथमहोदयेन पाणिनिव्याकरणस्य मार्गदर्शकतया अग्रगाम्यादर्शरूपेण प्रातिशाख्यानामवस्थितिः स्वीकृता वर्तते।[५] बर्नेलमहाशयोऽपि प्रातिशाख्यानि पाणिनिव्याकरणात्पूर्वकालिकानि मनुते। लाइबिचमहोदयोऽपि वाजसनेयिप्रातिशाख्यस्य पाणिनेः पूर्वभावित्वं स्वीकरोति।

## प्रातिशाख्यानां पाणिनिपूर्वभावित्वविचारः

प्रतिशाख्यसूत्रैस्सह पाणिनिसूत्राणां तुलनात्मकेनाध्ययनेनेदं स्पष्टं प्रतीयते यत् प्रातिशाख्यसूत्राणां रचनाशैली शिथिला विस्तृता च वर्तते। एतदपेक्षया पाणिनीय-व्याकरणस्य शैली सुसंगठिता, वैज्ञानिकी, लघीयसी, आदर्शभूता च विद्यते।

१. द्र० Commentary of Panini by Otto Bothtl'ngk p. 17-18.
२. Indische Alterthumskunde, vol. II p. 413.
३. द्र० Preface of Katyayana Pratisakhya Edited by A. weber.
४, द्र० Panini and his place in Sanskrit Literature p. 200, 205, 212, 217.
५. द्र० Preface of the Nirukta. P. XLIII Edited by Roth.

उदाहरणार्थं—वाजसनेयिप्रातिशाख्ये गुणविधानं सूत्रद्वये विद्यते[1], परं पाणिनीय-व्याकरणे एकस्मिन्नेवसूत्रे इदमस्ति।[2] यदि प्रातिशाख्यकाराणां समक्षं पाणिनि-व्याकरणस्य सूत्राणि आदर्शरूपेण अभविष्यँस्तर्हि ते प्रातिशाख्यग्रन्थानां निर्माणे श्लथ-शैल्याः अवलम्बनं कथमकरिष्यन्। अतश्चेदं निश्चीयते यत् प्रातिशाख्यानां रचना पाणिनिकालात् प्रागेव जाता। पाणिनिवर्यस्य कालं जी० आर० भण्डारकर-गोल्ड-स्टुकर महोदयौ ई० पू० सप्तमशताब्दीरूपं साधयतः। ग्रियर्सन-लसेन-बोथलिङ्ग-कीथ प्रभृतयो विद्वांसः पाणिनिमहोदयस्य ई० पू० चतुर्थशताब्दीकालं स्थिरी कुर्वन्ति। वासुदेवशरणअग्रवालमहाशयस्तु पाणिनिं ई० पू० पञ्चमशताब्द्यां स्थापयति। युधिष्ठिर-मीमांसकमहोदयानुसारं पाणिनेः समयः विक्रमतः पूर्वं २८०० वर्षाणि वर्तते। एवं प्रातिशाख्यकारस्य कात्यायनस्य निम्नतमकालसीमा ई० पू० चतुर्थशताब्दी वर्तते। आचार्यकात्यायनस्य रचनारूपेण वाजसनेयप्रातिशाख्येन साकम् अष्टादशपरिशिष्टानि, कात्यायनश्रौतसूत्रं, पारस्करगृह्यसूत्रं, सर्वानुक्रमणीग्रन्थः, क्रमसन्धानसूत्रं, प्रतिज्ञापरि-शिष्टसूत्रम्, गृह्यसूत्रस्यानेकपरिशिष्टसूत्राणि च सन्ति।

**वाजसनेयिप्रातिशाख्यस्य टीकाग्रन्थाः**

वाजसनेयिप्रातिशाख्यग्रन्थस्य षट्टीकाः दृष्टिपथमागताः सन्ति। तासु—

(१) उवटाचार्यस्य मातृमोदभाष्यम्।

(२) अनन्तभट्टस्य पदार्थप्रकाशभाष्यम्।

(३) श्रीरामशर्मणः ज्योत्स्ना विवृत्तिः।

(४) रामाग्निहोत्रिवर्यस्य प्रातिशाख्यदीपिका।

(५) अज्ञातकर्तृकं प्रातिशाख्यविवरणञ्च।

उपर्युक्तेषु व्याख्याग्रन्थेषु उवटाचार्यस्य भाष्यं सर्वथा प्राचीनतमं विद्वत्तापूर्णञ्च विद्यते।

**ज्योत्स्नाविवृतिः**

वाजसनेयिप्रातिशाख्यस्य ज्योत्स्नाविवृतेः कर्ता आचार्यः श्रीरामशर्मा विद्यते। व्याख्येयं सूत्रानुक्रमाधारेण नास्ति प्रत्युत सिद्धान्तकौमुदीप्रभृतिग्रन्थानुसारम् उदाहरण-प्रक्रियानुरोधेन प्रवृत्तेयं व्याख्यात्मिका रचना वर्तते। प्रकरणानुरोधवशात् व्याख्या-ग्रन्थेऽस्मिन् सूत्रक्रमे विपर्यासोऽवलोक्यते। व्याख्यानप्रसंगे विवृतिकर्त्रा स्पष्टार्थकसूत्राणां व्याख्या न कृता। एवञ्च सूत्रवृत्तिलेखनशैल्यनुरोधेन सूत्रस्य प्रत्येकपदानां व्याख्यानमपि नास्ति। 'हि' इति कालबोधकं सूत्रं, माध्यन्दिनशाखेतर (काण्वादिशाखासम्बद्धानां) सूत्राणाम्, अनुपलब्धोदाहरणसूत्राणाञ्च सर्वथा परित्याग अस्यां कृतो वर्तते। सूत्रपरि-त्यागे ग्रहणे च हेतुनिर्देशः व्याख्याकृता सर्वान्त्ये विहितः। अन्यच्चेदं वैशिष्ट्यं विद्यते

१. 'कण्ठ्यादिवर्णं एकारम्। उवर्णं ओकारम्'। वा० प्रा० ४।५४-५५।

२. आद्गुणः। ६।१।८७।

यत् प्रतिज्ञासूत्रम्, जटाद्यष्टविकृतिलक्षणञ्च ग्रन्थान्तर्गतमेव स्तः। ज्योस्नावृत्तौ वाजसनेयिप्रातिशाख्यस्य केवलं ५४४ सूत्राणां संकलनं कृतमस्ति। सेयं ज्योत्स्नावृत्तिः इदम्प्रथमतया प्राकाश्यमानीयत इति मन्ये सुधीजनानामानन्दसन्दोहाय कल्पेत।

**ज्योत्स्नावृत्तिकारस्य परिचयः**

ज्योत्स्नावृत्तेः अन्त्ये श्लोकत्रये पुष्पिकायाञ्च श्रीरामशर्मणा स्वीयः परिचयो दत्तः। तदनुसारमयं वैराजक्षेत्रवास्तव्यस्य ज्योतिर्विदां मुकुटायमानस्य श्रीसिद्धेश्वरयोगिनः पुत्रः आसीत्। ग्रन्थारम्भे गुरोर्नाम 'श्रीरामः' इत्यभिहितम्। ग्रन्थस्यान्तिमे श्लोके अयमाचार्यः स्वपितरं श्रीसिद्धेश्वरयोगिनमपि गुरुकल्पतया स्मरति। अन्ते च लिखति यत् 'रघुनाथस्य कृते मयेयं ज्योत्स्नावृत्तिः विरचितेति।' रचनायाः पूर्णताकालः, शकसम्वत्सर १७२७ ईश्वरनामकस्य 'बार्हस्पत्य' संवत्सरस्य आश्विनशुक्लदशमी (विजया दशमी) इति निर्दिष्टो वर्त्तते।

ग्रन्थारम्भेऽपि 'रामशर्मणा' इत्युक्त्या ग्रन्थस्यास्य कर्ता रामशर्मा वर्तत इति ज्ञायते। तस्य गुरुरपि 'श्रीरामं सद्गुरुं नत्वा' इत्येवं स्मरणात् श्रीरामः इति फलति। ग्रन्थनामापि तेनैव प्रतिपदमुक्तम्—'ज्योत्स्नाख्या विवृतिर्लघु' इतिना। सोऽयं ग्रन्थो ग्रन्थकृच्च माध्यन्दिनशाखामनुसरत इति 'माध्यन्दिनानुसारेण' इत्येवं वचनादवसीयते। ग्रन्थप्रयोजनमपि 'मन्दानां सुखबोधार्थं क्रियते' इति तत्रैवोक्तम्।

**ग्रन्थमातृकाविवरणम्**

## 'क'—संज्ञकपुस्तकविवरणम्

इदं वाराणसेयसरस्वतीभवनग्रन्थालयस्थं पुस्तकमस्ति। अस्य ग्रन्थालये प्रवेशसंख्या ४९००५ क्रमसंख्या च वेद-२४ वर्तते। अस्य नाम प्रातिशाख्यसूत्रमित्युल्लिखितम्। अत्र पत्रसंख्या १ तः २३ पर्यन्तमस्ति। आकारस्तु ८.६" × ३.९" वर्तते। प्रतिपत्रं पंक्तिसंख्या सप्त, प्रतिपंक्त्यक्षरसंख्या च एकोनत्रिंशदस्ति। अन्ते—"इति कात्यायन (कृते) प्रातिशाख्यसूत्रे प्रथमोऽध्यायः" इत्येवं पुष्पिका दृश्यते। कृते इति लिखितं हरितालेन विलोपितम्।

अस्य पुस्तकस्य काश्चन विशेषताः एवं सन्ति—

१. प्रतिविंशति सूत्रे १,२ इत्येवं विभागनिर्देशो वर्तते। स वर्गरूपः स्यादिति सम्भाव्यते। अध्यायान्तिमे विंशतिके यावती संख्यावशिष्यते तत्रैव पूर्णविंशतिकासंकेत इति विशेषः।

२. अत्र सूत्रविभागो पूर्णविरामरेखया '।' इत्येवमङ्कितः, परं संख्या नास्ति।

३. क्वचित् क्वचिद विवृत्तिसूचनं '६' इत्येवं कृतम्। यथा-चमू '६' अस्मे इत्यादौ।

४. अत्र द्वित्वाक्षरसङ्केतो नास्ति। छकारात् पूर्वं चापि न निर्दिश्यते।

५. दीर्घह्रस्व ॐ कारचिह्नं यथार्हं पृथक्पृथग् दत्तम् ।

६. बहुषु स्थलेषु अनुस्वारचिह्नेनापि परसवर्णनिर्देशः । यथा—नीचौंतो० इत्यादौ ।

७; बहुपदग्राहिषूदाहरणेषु प्रत्युदाहरणं रक्तमस्या ऊर्ध्वरेखाङ्कनेन विभाग-निर्देशः । यथा—२।२० इत्यादौ द्रष्टव्यम् ।

८. सूत्रान्त्यो 'म्'कारोऽनुस्वारेण लिख्यते ।

९. क्वचित् सूत्रेषु जकारोच्चारणीययकारे उदररेखा वर्तते ।

१०. यदि लेखने अक्षरक्रमविपर्यासो जातस्तस्य शोधनं शीर्षस्थया १,२ संख्यया समीकृतम् । यथा—व²ह¹ (३।३०) इत्यादौ द्रष्टव्यम् ।

## 'ख'—संज्ञकपुस्तकविवरणम्

इदं पुस्तकं श्रीकाशीनाथगोडशेमहोदयेभ्यो वैदिकेभ्यः प्राप्तम् । पुस्तके पत्रसंख्या ५४ वर्तते । प्रतिपृष्ठं द्वादश पंक्तयः । प्रतिपंक्ति च द्वात्रिंशदक्षराणि सन्ति । पुस्तकमिदमतिजीर्णं स्पष्टं शुद्धं च सदपि धूमिलाक्षरमेव । एतस्य लिपिकालः अन्तिमपंक्तिद्वये एवमुपलभ्यते—

॥१॥ शके १७९९ ईश्वरनामाब्दे फाल्गुनशुक्लपद्यां (षष्ठ्यां ?) भौमवासरे तद्दिने गोडशेत्युपाभिधेयेन सदाशिवभट्टाङ्गजेन बालकृष्णेन स्वार्थं परार्थमिदं पुस्तकं लिखितं । शुभं (भ) वतु ॥ इति प्रतिशाख्यज्योत्स्ना समाप्ता पत्राणि ॥ ५४ ॥

प्राचीनपरम्परया श्लोकगणनाक्रमेणात्र पुस्तके १२९६ श्लोका भवन्ति । यतो हि प्रतिपृष्ठं द्वादशश्लोकाः, अतः प्रतिपत्रं चतुर्विंशतिः श्लोकाः सन्त्यत्र । चतुःपञ्चाशत्पत्राणां सङ्कलनया ५४ × २४ = १२९६ श्लोकाः (द्वात्रिंशदक्षरात्मकाः) सम्पूर्णे ग्रन्थे सन्ति ।

पुस्तकस्यास्य केचन विशेषाः अधस्तात् प्रस्तूयन्ते—

१. अत्र लेखने विपर्यस्ते अक्षरे सति १,२ संख्यया समीकरणं कृतम् । यथा 'कात्यायन' इति शुद्धपाठार्थं 'कात्यानय' इति लेखे 'कात्यान²य¹' इत्येवं संकेतः (पृ० १ पं० १) ।

२. वाक्यावसाने, पदावसाने मान्तपदस्य सानुस्वारलेखनमस्ति ।

३. सूत्राणां रक्तवर्णेन रंजनं कृतम् ।

४. पाण्डुग्रन्थेऽस्मिन् मस्यास्तीक्ष्णतया पत्राणां नाशोऽपि जातः ।

५. 'अभींधतां' स्थले (पृ० सं० १०८) नकारस्याप्यनुस्वारलेखनम् । 'अभीन्धताम्' इति तु शुद्धं रूपम् । एवमन्यत्रापि दृश्यते ।

(६) व्यंजने उकारस्य निर्देशः ( ॖ ) संकेतेनास्ति। यथा स्र॒ (स्रु) पृ० १०।८, स्र॒ (सु) पृ० १३।३ इत्यादौ।

(७) स्वरश्छकारे (५०) इत्यादौ कुत्रचिदस्माभिः सन्धिर्विच्छिन्नः स्पष्टबोधनाय। लेखपुस्तके तु सन्धिसहितः पाठः। अनावश्यकस्थाने स्थितस्य पूर्णविरामचिह्नस्य (।) त्यागोऽस्माभिर्विहितः। यथा—सिचतौ परे। परश्च मूर्धन्यम् (१७।४), अत्र अर्धविरामस्थाने पूर्णोविरामः। एवमेव द्वित्वेन जातं। व्यंजनं क्रमजं। तच्च पूर्वस्यांगं इत्यत्र (२६।१०) अस्माभिर्विरामविरहितः पाठः—'द्वित्वेन जातं व्यंजनं क्रमजं, तच्च पूर्वस्यांगम्' इत्ययं विलिखितः। अन्यत्र च 'मुद्रः मासाम्' (२६।४) इदमस्माभिः 'मुद्रो मासाम्' इत्येवं नियाकमिति' (२७।१) इदमस्माभिः 'नियाकम्' इति, इत्येवं, 'पदं अस्मदर्थे' (२७।२) इदमस्माभिः 'पदमस्मदर्थे' इत्येवं, 'सर्वं उदात्तम्' (३०।९) इदमस्माभिः 'सर्वमुदात्त' इत्येवं, बहुत्र संशोधनं विहितम्।

(८) यत्र स्वरस्य वर्णस्य वा शोधनं तत्र हरतालकया लेपनं पुस्तकेऽत्र वर्तते। यत्स्थाने अक्षरान्तरलेखनमिष्टं तत्र = इति लक्ष्म कृत्वा पार्श्वे अन्यदक्षरं लिख्यते। १८ पृष्ठस्य ९ पंक्तौ औ =, पार्श्वे उ = इत्यस्ति। अत्र उ इष्टम्, ओ चानिष्टमस्ति।

(९) अत्र पुस्तके उदाहरणे स्वरनिर्देशो द्वित्वादिलेखश्च नास्ति। कदाचित्तु द्वित्वलेखो दृश्यते, यथा—शर्म च स्थो व्वर्म (३३।७) इत्यादौ (सू० ४३७)।

## 'ग'—संज्ञकपुस्तकविवरणम्

इदं पुस्तकं श्रीगणपतिदीक्षित जावजी भट्ट इत्येतेषामस्ति। इदं हस्तलिखितं शुद्धं प्र त्राकृति वर्तते।

## 'घ'—संज्ञकपुस्तकविवरणम्

इदं पुस्तकं काशीहिन्दूविश्वविद्यालयस्य पं० नारायणमहोदयानामस्ति। अत्र सर्वादौ प्रथमपृष्ठे एवं लिखितम्—

"शुक्लयजुःप्रातिशाख्यज्योत्स्नावृत्तिः प्रारभ्यते" इति। आरम्भिकश्लोकेषु चतुर्षु १,२,३,४ संख्या कुत्रापि नास्ति। अत्र पवर्गीयबकारस्थाने प्रायशो वकार एव लिखितः। लेखकप्रमादोऽप्यधिकः। अस्मिन् पुस्तके "ष्क" इत्येवं जिह्वामूलीयनिर्देशः, "ष्प" इत्येवञ्चोपध्मानीयस्य निर्देशः।

अन्ते तु—"संवत् १८२३ वर्षे चैत्रकृष्ण ३० रवौ दिने या०देवकृष्णसूनुना करुणाकृष्णेन लिखितं शुभं ॥ श्रीः ॥ इत्थं लेखककालादिनिर्देशः।

## 'ङ'—संज्ञकपुस्तकविवरणम्

इदं शुक्लयजुर्वेदप्रातिशाख्यस्य पुस्तकं वाराणसीतो बनारससंस्कृतग्रन्थमालायां मुद्रितं पण्डितयुगलकिशोरमहोदयेन सम्पादितमुवटभाष्ययुतमस्ति। अष्टादशशताब्द्याः अन्तिमे भागे प्रकाशितेऽस्मिन् ग्रन्थे उदाहरणस्थलसङ्केताः दत्ताः। अन्ते च प्रतिज्ञासूत्रमपि संयोजितमस्ति।

## 'च'—संज्ञकपुस्तकविवरणम्

इदं वाजसनेयिप्रातिशाख्यस्य पुस्तकं मद्रासतः प्रकाशितं उवटानन्तभाष्यद्वययुतमस्ति। मद्रासविश्वविद्यालयसंस्कृतसिरीजग्रन्थेषु पञ्चमसंख्यायां प्रकाशितोऽयं ग्रन्थः १९३४ ईसवीयवत्सरे वी० वेंकटरामशर्ममहोदयद्वारा सम्पादितो विद्यते। ग्रन्थेऽस्मिन्नुदाहरणस्थलसङ्केता न दत्ताः।

## 'छ'—संज्ञकपुस्तकविवरणम्

इदं शुक्लयजुःप्रातिशाख्य पुस्तकं कलिकत्तंननगरात् प्रकाशितं जीवानन्दविद्यासागरभट्टाचार्येण सम्पादितं सोवटभाष्यं वर्तते। ग्रन्थोऽयं सरस्वतीयन्त्रे १८९३ ईसवीयवत्सरे मुद्रितः।

## 'ज'—संज्ञकपुस्तकविवरणम्

इयं मातृका काशीहिन्दूविश्वविद्यालयीयवेदविभागप्राध्यापकचराणां पण्डित श्रीकाशीप्रसादमिश्रमहोदयानां वाराणसीवास्तव्यानामस्ति। तेषां विद्वद्वराणां स्नेहसौजन्यातिशयेनेयं पाण्डुलिपिर्लब्धा।

इयं पाण्डुलिपिर्न पत्राकृतिरस्ति, अपितु वर्तते पुस्तकाकृतिः। अत्र पुस्तके काशीमुद्रितपुस्तकानुसारमेव केवलमध्यायसूत्राङ्काः प्रदत्ताः। कतिचनपृष्ठानन्तरं सूत्राणां लेखो नास्ति। बहुत्र सूत्राणामङ्कः एव सूत्रस्थाने प्रदत्तः। तेषामत्र निर्देशोऽस्माभिष्टिप्पण्यां कृतः। परं मूलपुस्तके पूर्णानि सूत्राण्यासन्निति तेभ्यो ज्ञात्वा ते संकेताः ४।१३ इत्यादयो न पाठान्तरे समादृताः। अक्षराण्यस्य यद्यपि असुष्ठूनि, तथापि वाचनार्हाणि। अत्र ग्रन्थे जटादिविकृतिलक्षणभागो न विद्यते।

अथास्य पुस्तकस्य काश्चन विशेषताः सङ्गृह्यन्ते—

१. कुत्रचिदुद्देश्यविधेयादिशब्दानां स्पष्ट प्रतिपत्तये सन्धिर्न लिख्यते। यथा—३१७(३।९९) सूत्रे "वदित्येतस्मिन्" इति ससन्धिपाठे "वत् इत्येतस्मिन्" एवं 'ज'पुस्तकपाठोऽस्ति। एवमेव ३१८ (३।११२) सूत्रे "रथीत्ययम्" इति ससन्धिपाठे "रथि इत्ययम्" एवं 'ज'ग्रन्थपाठः। सोऽयं क्रमोऽस्माभिः तत्रान्यत्र चानुक्तावपि स्पष्टप्रतिपादकत्वात् सर्वत्र समादृतः। एतस्मिन् हि आद्रियमाणे विभाजने ' ' इत्यूर्ध्वार्धविरामचिह्नानां प्रदर्शनम्, मुद्रणाक्षराणां भेदनम्, रेखादिदानं वाध्येतॄणां स्पष्टप्रतिपत्तिविधायि सुदर्शनञ्च सम्पद्यते।

२. अत्र पुस्तके प्रायशो महान्ति सूत्राणि प्रतीकत उपादीयन्ते, "०" इति शून्यमपि पूर्णत्वनिर्देशकमङ्कितम्। अथवा "इति" 'इत्यादि' शब्दलेखनेन पूर्णत्वप्रतिपादनम्। यथा—मतिसुमतीति (३१६; ३।९६) सूत्रे वर्तते। एवमेव ३११ (३।९३) इत्यादिसूत्रेष्वपि द्रष्टव्यम्।

३. महतां सूत्राणामुदाहरणानि प्रत्युदाहरणानि च विस्तरभिया एकं द्वे वा लक्ष्ये समुदाहृत्य 'इत्यादि' पदेन पूर्यन्ते। यथा—३१६ (३।९६) सूत्रे। सोऽयं लेखस्तत्र तत्रास्माभिः सूचितः।

**मातृकान्वेषणविषये विशेषः**

उपर्युक्तोपयुक्तपुस्तकाष्टकातिरिक्तमेकमन्यत् ज्योत्स्नावृत्तिपुस्तकं पण्डितमाधवलालगोस्वामिवर्यस्य लिखितसङ्ग्रहे आसीदित्यवधार्य तद्वंशजो विश्वम्भरगोस्वामी राधारमणप्राकारान्तर्वर्त्ती वृन्दावनस्थः ग्रन्थप्रदर्शनायास्माभिर्निवेदितः। परं स ग्रन्थगौरवं प्रलपन्न प्रादर्शयदिति तस्योपयोगं नाहं कर्तुमशकम्।

अथ चैकोऽपरो हस्तलेखः श्रीश्रीधरवारे महोदयेन निर्दिष्टस्तद्गुरूणां नासिकवास्तव्यानां श्रीनारायणकेशवदेवशास्त्रिणां वर्त्तत इति ज्ञातम्। परं स हस्तलेखः पत्राद्याचरणेनापि नाधिगतोऽस्माभिः।

**सम्पादने परिगृहीताः नियमाः**

अथात्रास्मदीयसम्पादने ये केचन नियमाः साधारणतया समादृताः, याश्च काश्चन विशेषताः अस्माभिर्यथाशक्ति समुपकल्पितास्तत्सर्वं सुधीजनालोचनाय समुपस्थाप्यते—

१. स्पष्टप्रतिपत्तये सन्धिविच्छेदो विहितः। यथा—"एकवर्णमा इत्यादि पदमपृक्तसंज्ञं स्यात्" इत्यत्र (८४ सूत्रे) "एकवर्णम् आ इत्यादिपदम् 'अपृक्तं संज्ञं स्यात्" इत्येवं विच्छेदः।

२. प्रायः सर्वेषु पुस्तकेषु पदान्ते पदमध्ये वा (यथा—अंतस्था ज०११८ इत्यादौ) वर्तमानयोर्मन्वर्णयोः क्वचिद् हलन्तस्वरूपेण क्वचिच्चानुनासिकरूपेण लेखः। सोऽत्रास्माभिर्यथार्हं सम्पादनानुकूलतया अनुस्वारः, हलन्तः, परसवर्णो वा प्रदर्शितः। पंचम-पञ्चमादावपि निरर्थकाः पाठाः न समादृताः।

३. कार्य (सू० ९४) इत्यादौ "कार्य्यं" (ज०) इत्यादयः पाठभेदा नादृताः। आर्षसूत्रपाठ एव द्वित्वादिकं समुल्लिखितं, न सर्वत्र।

४. विरामबोधकस्य "।" इत्येवमृजुरेखाचिह्नस्य सर्वेषु पुस्तकेष्वयथात्वं दृश्यते। तद्भेदोऽस्माभिर्न प्रदर्शितः, अयथात्वान्निरर्थकविस्तारभयाच्च।

५. 'क' 'घ' संज्ञकपुस्तकवर्जं सर्वेषु पुस्तकेषु पदविभागो न विद्यत इति तयोरपि पदविभागे भेदः विशेषोपकाराभावान्न समादृतः।

६. पुस्तकलिपिकर्तृप्रमादकृतो विसर्गाभावः, अनुस्वाराभावः, ॐकारस्य वर्णानां ह्रस्वदीर्घादीनां विपर्ययश्च बहुत्र दृश्यते। सोऽस्माभिरनुट्टङ्कयित्वैव यथार्हं सम्पादितः।

७. यत्र उदाहरणे पदपाठाङ्काः पूर्वं ततश्च संहिताङ्काः, तत्र पदपाठं स्वीकृत्य संहितापाठे कश्चन विशेषविधिर्ज्ञेय इति सूचना। यथा—११९ सूत्रादौ द्रष्टव्यम्।

८. यत्रोदाहरणे पूर्वं संहितापाठाङ्काः ततः पदपाठाङ्कास्तत्र संहितापाठं स्वीकृत्य पदपाठे कश्चन विशेषविधिरिति ज्ञेयम् ।

९. यत्र च नैरपेक्ष्येण विधिनिर्देशस्तत्र संहितापाठाङ्केषु "संहि०" इति संकेतः ।

१०. अत्र पुस्तके शुक्लयजुःप्रातिशाख्यस्याध्यायसूत्राङ्काः अत्र संयोजित-सूत्रपाठानुसारेण प्रत्येतव्याः । शुक्लयजुःसंहितादिपाठस्तु निर्णयसागरीयः ।

११. अर्धाकारचिह्नस्य 'ऽ' इत्यस्य सम्पादनकलायां पूर्वरूपे उल्लेखः पूर्वशिष्ट-समादृतोऽस्ति । परमत्रास्माभिर्मन्त्रांशेषु उदाहरणेषु पूर्वरूपसन्धौ नेदं चिह्नं प्रयुक्तम्, किन्तु तत्स्थले उपरि(')इत्येवं सङ्केतः कृतः । मूलवेदपुस्तकेषु एतस्य(ऽ)चिह्नस्य स्वर-सन्ध्यभावबोधिकायां विवृत्तौ प्रयुक्तत्वादियं पद्धतिरस्माभिरङ्गीकृता । अतः उदाहरणेषु विवृत्तावेवेदं चिह्नमुपयुक्तम् । यथा—१३२ सूत्रे—'अग्नेदब्धायो'इत्यत्र, १३३ सूत्रे च 'गर्भेऽअन्तः' इत्यत्र द्रष्टव्यम् ।

सम्पादनेऽस्मत्कृतो विशेषः एवमस्ति—

१. सूत्राणां सान्तत्येन अनुक्रमाङ्काः पूर्वं [ ] इत्यस्मिन् कोष्ठे प्रदत्ताः ।

२. प्रातिशाख्यार्षपाठक्रमेण अध्यायसूत्राङ्कनिर्देशः सूत्रान्ते कृतः । प्रतिसूत्र-मध्यायाङ्काः वैशिष्ट्यं कथयन्त्यत्र ।

३. वृत्त्युल्लिखिते सूत्रनिर्देशे सूत्राङ्काः निर्दिष्टाः ।

४. वृत्त्युल्लिखितप्रमाणवाक्यानां यथार्हमङ्का लिखिताः ।

५. परिभाषाणां मुद्रणाक्षरभेदेन प्रदर्शनं कृतम् ।

६. सूत्राणां स्थूलाक्षरेण लेखनं स्पष्टप्रतिपत्तये कृतम् ।

७. स्वरविधायकसूत्रेषु वृत्तावुदाहरणानां सस्वरतया निर्देशो विहितः ।

८. पदपाठाध्ययनतः स्पष्टप्रतिपत्तव्यस्थलेषु पदपाठीयपदलक्ष्येषु पदपाठाङ्काः संहिताङ्काश्च प्रदर्शिताः ।

९. सूत्रेषु प्रतिपाद्यविषयबोधकशीर्षकविधानं सम्पादितम् ।

१०. पूर्वोत्तरशब्दाभ्यामुक्तवक्ष्यतिशब्दाभ्यामेवंजातीयकान्यनिर्देशकपदानामुक्तौ तत्तत्स्थलबोधकाङ्काः निर्दिष्टाः ।

११. मूले उपयुक्तपाठस्य संस्थापनं विहितम् ।

१२. विधेयस्य मुद्रणाक्षरपरिवर्तनेन स्पष्टप्रतिपत्तिः प्रदर्शिता ।

१३. अवधातव्यस्य विशिष्टांशस्य ' ' इत्येवं चिह्नान्तःकरणेन वैशिष्ट्यं निरूपितम् ।

१४. सान्तत्येनैव पुस्तकहस्तलेखा आसन्, तत्र वृत्तौ पदच्छेदोऽस्माभिरुपपा-दितः ।

१५. उदाहरणाङ्काः प्रत्युदाहरणाङ्काश्च यथायथं प्रकाशिताः ।

१६. दृष्टान्ते (उदाहरणप्रत्युदाहरणयोः) सम्प्रदायविधया निर्देष्टव्य-स्योच्चारणीयस्य च द्वित्वङ्कारादेर्निवेशो यथार्हं कृतः।

१७. आदर्शवृत्तिपुस्तकेषु पदान्ते वाक्यान्ते वा सावसानस्थले प्रयुज्य-मानस्यानुस्वारस्यासन्धितत्वान्मकारनिर्देश उपकल्पितः।

१८. महाप्रकरणम् ❀ ❀ एतच्चिह्नान्तर्वर्तित्वेन, अवान्तरप्रकरणञ्च 卐卐 एतच्चिह्नान्तर्वर्तित्वेनास्माभिः स्फुटीकृतं प्रणीतञ्च।

१९. [ ] इत्येवं कोष्ठान्तःपाती पाठोऽस्मत्कृतः। स च [ परिभाषेयम् ११९ ] इत्यादौ द्रष्टव्यः।

२०. पुनरुक्तानामर्थसमानानां पदानां = इत्येवं सम्बन्धसङ्केतः स्पष्टप्रत्याय-नार्थमस्माभिर्विहितः। स च "इति वच्चर्चायाम्" इत्यादौ द्रष्टव्यः।

**शुक्लयजुर्वेदप्रातिशाख्ये विशेषाः**

अत्र ज्योत्स्नावृत्तिसम्पादनक्रमेऽस्माभिः ग्रन्थस्यास्य काश्चन शास्त्रीया विशिष्टताः संन्दृष्टाः। यथा ग्रन्थेऽस्मिन्नध्यायमुद्दिश्यापि विधानमुपदिश्यते। 'अश्वादौ चाध्याये' (३।१४७) इत्यादि स्थलेष्विदं द्रष्टव्यम्।

अथ च 'अपृक्त एकाल् प्रत्ययः' इत्यत्र प्रत्ययशब्देन अक्षरमेवोच्यते। तदेवात्र भाष्यादिषु सूत्रे चोक्तम्।

भाष्ये प्राचीनोक्तयोऽपि यत्र तत्रोल्लिखिताः। यथा चतुर्थाध्याये (४।१)—'आह च—अनितावध्याय इति कृतं' (२ कारिका) इत्यादौ द्रष्टव्यम्।

**सङ्केतबोधनम्**

ग्रन्थस्यास्य सम्पादनेऽस्माभिर्ये केचन सङ्केताः समुपयुक्तास्तेषां स्पष्टबोध-नायात्र तत्तद्वैशिष्ट्यान्युपस्थाप्यन्ते—

| | |
|---|---|
| १. न | —इत्यत्र तदक्षरं नास्तीति सङ्केतः। |
| २. X न | —यत्रेदं लिखितं तत्र इदं पदं नास्तीत्यभिप्रायः। |
| ३. XX न | —तत्र इदं वाक्यं नास्तीति सङ्केतो ज्ञातव्यः। |
| ४. W | —इति पदव्यत्ययसङ्केतः। |
| ५. क, ख, ज | —इत्यादिः पुस्तकसङ्केतः। |
| ६. शु०— शु० सं० | —शुक्लयजुर्वेदसंहिता माध्यन्दिनशाखीया, तत्र चाध्याय-कण्डिकाङ्काः। |
| ७. शु० प्रा० | —शुक्लयजुःप्रातिशाख्यम्, अत्र ज्योत्स्नापाठस्यानुक्रमाङ्काः, अध्यायसूत्राङ्काः उभये वा अङ्काः ज्ञातव्याः। |

८. या० शि० —याज्ञवल्क्यशिक्षा।

९. S —सूत्रेषु चिह्नमिदं पूर्वरूपसन्धिनिर्देशकम्।

S —वेदमन्त्रेषु तु चिह्नमिदं विवृत्तिप्रदर्शननिर्देशकम्। विवृत्तिर्नाम स्वरद्वयसत्त्वे सन्धिप्राप्तावपि अपवादशास्त्रात् उदाहरणेषु द्वयोः स्वरयोः सन्ध्यभावबोधको मात्राकालिकविरामसङ्केतो वैदिकसम्प्रदायसिद्धः। तत्र चैकमात्रायाः सोद्ग्राहप्रदर्शनायायं संकेतो, न सूत्रेषु ( यथा—त्व ईम् २।२६ इत्यादौ )।

१०. ' ' —विशिष्टपदस्य वाक्यस्य निर्देशस्य वा स्पष्टप्रतिपत्तिफलकः सङ्केतः।

११. ( ) —मूलपाठस्य सुबोधनाय मूलतः पृथक् पठनीयस्य ज्ञातव्यस्य वा अस्माभिः सङ्कलितस्यांशस्य सङ्केतः।

१२. [ ] —पुष्पिकायां तत्प्रकरणीयपूर्वसूत्रसंख्या सङ्केतो विद्यते। सूत्राणां सन्निधाने अनुक्रमाङ्कबोधनसङ्केतः। सूत्राणामुपरि तु विभिन्नैः [दीर्घविधानम्] एवंविधैर्मुद्रणैः विषयबोधनसंकेतः। अग्रे च सूत्रसंख्या।

१३. पूर्वम् —विषयोऽयं पूर्वमङ्कतो निर्दिष्टम्, सूत्रेषु समायातोऽयं विषय इत्यवगमाय सङ्केतः।

१४. अग्रे —विषयोऽयमग्रे सूत्रेषु समायातः इत्यवगमाय सङ्केतः।

१५. – —इत उत्तरमयं विशेषपाठ इति संकेतः।

१६. × —अयं वर्णः (सव्यञ्जनमक्षरं) नास्तीति सङ्केतः।

१७. १, २, ३, —मूलपाठे प्रदत्ता इमाः संख्याः, अत्र पाठान्तरविषयिणी टिप्पणी नीचैरेतत्संख्यिका अवलोकनीयेति बोधनाय। टिप्पण्यामपि मूलपाठस्य कृते सङ्केतः संख्यानन्तरं यदि अक्षरस्योल्लेखस्तर्हि स मूलपाठाक्षरस्य स्थानीय इति सङ्केतः।

१८. V —इदं पदमधिकमिति सूचनासङ्केतः।

१९. VV —इदं वाक्यमधिकमिति सङ्केतः।

२०. ........ —मध्यस्थवर्णानां सङ्केतः।

२१. द्र० —द्रष्टव्यमित्यर्थः।

२२. तु० —तुलनीयमित्यर्थः।

२३. + —ससन्धितपाठसङ्केतः, ततः सन्धिपाठः प्रदर्शितः।

२४. – —पदस्थापरिपूर्त्तौ द्वितीयपंक्तौ पादपूर्तिबोधनाय प्रचलितः सङ्केतः ।

२५. = —पूर्वसङ्केतात् किंचिद्दीर्घः लक्ष्यस्वरूपबोधनार्थः सूत्रे सङ्केतः स्पष्टप्रत्यायनाय । दीर्घसूत्रेषु यथा—२।१९ इत्यादौ ।

---

श्रीः

श्रीश्यामदेवाय नमः

श्रीगुरुचरणकमलेभ्यो नमः

# ज्योत्स्ना

## (शुक्लयजुःप्रातिशाख्यवृत्तिः)

[ मङ्गलाचरणम् ]

यस्य[1] भृङ्गावलिः कण्ठे स्रुतदानाम्बुपूरिते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥ १ ॥

[ प्रतिज्ञा ]

श्रीरामं सद्गुरुं नत्वा याज्ञवल्क्यमुनिं तथा ।
कात्यायनकृते प्रातिशाख्ये वाजसनेयके ॥ २ ॥

माध्यन्दिनानुसारेण ज्योत्स्नाख्या विवृतिर्लघु ।
क्रियते सुखबोधार्थं मन्दानां रामशर्मणा ॥ ३ ॥

[ शास्त्रप्रयोजनम् ]

जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ।
प्रातिशाख्यमतो ज्ञेयं सम्यक् पाठस्य सिद्धये ॥ ४ ॥

### [१] स्वरसंस्कारयोश्छन्दसि नियमः ।१।१॥

प्रतिज्ञासूत्रमेतत् । स्वराणामुदात्तादीनां, संस्काराणां लोपाऽऽगम-वर्णविकाराणां[2] च नियमो वक्ष्यमाणसूत्रैर्विहितानां नियतपठनं, छन्दसि माध्यन्दिनीये स्यात् ।

### [२] लौकिकानामर्थपूर्वकत्वात् ।१।२॥

लौकिकानां शब्दानामर्थबोधनार्थं प्रयोगात्, तदनुसारि-प्रकृति-प्रत्यय-कल्पनया[3] व्याकरणानुसारेण स्वर-संस्कार-निर्णयः[4] । छन्दसस्तु अपौरुषेयत्वाद् यथोच्चारणं[5] तस्यैव स्वरस्य वर्णस्य वा[6] साधुत्वं कल्पनीयम् । तदर्थमिदं प्रातिशाख्यम् ।

१. ख पुस्तके अयं श्लोको नास्ति । आदौ "श्रीगणेशाय नमः" इत्यस्ति ।
२. 'लोपागमवर्णविकाराणां' नास्ति क.
३. "या" इत्यस्य स्थाने "मतो" क.
४. स्वर-वर्ण-निर्णयः ख.
५. यथायथोच्चारितम ख; यथोच्चरितं क. ग.
६. स्वर-वर्णस्य च, क.

[ वेदाध्ययनविधिः ]

**[३] ॐ कारं वेदेषु ।१।१८॥**

ॐ कारं वेदस्यारम्भे अन्ते च पठेत् । उक्तं च--

"ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
क्षरत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते" ॥ इति[१] ।

**[४] शुचिना ।८।२८॥**

**[५] शुचौ देशे ।८।२९॥**

**[६] शूद्रपतितयोरस ँ श्राव ँ स्वाध्यायोऽध्येतव्यः ।८।३०॥**

स्नानाचमनादिना शुद्धेन पुरुषेण शूद्राद्यनुपहते प्रदेशे शूद्रपतितयोः श्रवणं यथा न भवति तथा वेदः पठितव्यः ।

**[७] त्रीणि स्थानानि ।१।१०॥**

**[८] सवनक्रमेणोरः-कण्ठ-भ्रूमध्यानि ।१।३०॥**

प्रातःसवन-मध्यसवनोत्तमसवनस्थानानि[२] क्रमेणैतानि स्युः । यथा—प्रातः सवनस्योरः, मध्यमसवनस्य[३] कण्ठः, उत्तमसवनस्य[४] भ्रूमध्यमिति ज्ञेयम् ।

## ❀ वर्णसमाम्नायप्रकरणम् ❀

**[९] अथातो वर्णसमाम्नायं व्याख्यास्यामः ।८।१॥**

**[१०] तत्र स्वराः[५] प्रथमम् ।८।२॥**

व्याख्यायन्त इति शेषः ।

**[११] अ इति, आ इति, आ ३इति, इ इति, ई इति, ई ३इति, उ इति, ऊ इति, ऊ ३इति; ऋ इति, ॠ इति, ॠ ३इति; ऌ इति, ॡ इति, ॡ ३ इति ।८।३॥**

---

१. "इति" नास्ति ख. ग. घ.

२. अत्र = इत्यङ्कयित्वा "तारं तु विद्यात् सवनं तृतीयमिति शिक्षोक्तेः" इति ख. पुस्तके उपलभ्यते । परमिदं न ज्योत्स्नापाठोऽनन्वितत्वात् । टिप्पणं तु लेखकीयं भवितुमर्हति ।

३. मध्यन्दिनसवनस्य क.

४. 'तारसवनस्य' इत्यधिकः पाठः ख. ग.

५. "तत्र स्वराः" इत्यन्ते पूर्णो विरामः ख पुस्तके । ततश्च "प्रथमम्" इति वृत्तिपाठः प्रतिभाति ख. पुस्तके ।

[ सन्ध्यक्षरसंज्ञा ]

**[१२] अथ सन्ध्यक्षराणि ।८।४।।**

एतदुत्तरे स्वरसमाप्तिपर्यन्ता वर्णाः "सन्ध्यक्षर" संज्ञकाः[१] स्युः ।

**[१३] ए इति, ए ३ इति; ऐ इति[२], ऐ ३ इति; ओ इति, ओ ३ इति; औ इति, औ ३ इति ।८।५।।**

[ स्वरसंज्ञा ]

**[१४] इति स्वराः ।८।६।।**

अकारादयः पूर्वोक्ता वर्णाः स्वरसंज्ञकाः स्युः ।

[ सिम् संज्ञा ]

**[१५] सिमादितोऽष्टौ स्वराणाम् ।१।४४।।**

पूर्वोक्तानां स्वराणां मध्ये प्रथमाः अ आ इ ई उ ऊ ऋ ॠ[३] एतेऽष्टौ "सिम्" संज्ञकाः[४] स्युः । प्लुतानां नियतानां वक्ष्यमाणत्वात् संज्ञायाः कार्यार्थत्वाद् अग्रहणम् ।

[ भाविसंज्ञा ]

**[१६] अकण्ठ्यो भावी ।१।४६।।**

कण्ठ्यो अवर्णस्तद्वर्जिता इकारादयः स्वरा "भावि" संज्ञकाः स्युः ।

[ ह्रस्वसंज्ञा ]

**[१७] अमात्रस्वरो ह्रस्वः ।१।५५।।**

एकमात्रकः स्वरो "ह्रस्व" संज्ञः स्यात् ।

[ मात्रासंज्ञा ]

**[१८] मात्रा च ।१।५६।।**

ह्रस्वो "मात्रा" संज्ञकश्च स्यात् ।

[ दीर्घसंज्ञा ]

**[१९] द्विस्तावान् दीर्घः ।१।५७।।**

द्विमात्रः स्वरो "दीर्घ" संज्ञः स्यात् ।

[ प्लुतसंज्ञा ]

**[२०] प्लुतस्त्रिः ।१।५८।।**

त्रिमात्रः स्वरः "प्लुत" संज्ञः स्यात् ।

---

१. सन्ध्यक्षराणि क.

२. ख पुस्तके 'ऐ इति ऐ ३ इति' इत्यनयोः 'ओ इति ओ ३ इति' इत्यनन्तरं पाठः ।

३. 'ऌ ॡ' इत्यधिकः पाठः क.

४. संज्ञाः क.

[२१] अथ व्यञ्जनानि ।८।७।।

[२२] किति खिति गिति घिति ङिति इति[1] कवर्गः ।८।८।।

[२३] चिति छिति जिति झिति ञिति इति[1] चवर्गः ।८।९।।

[२४] टिति ठिति डिति ढिति णिति इति[1] टवर्गः ।८।१०।।

[२५] तिति थिति दिति धिति निति इति[1] तवर्गः ।८।११।।

[२६] पिति फिति बिति भिति मिति इति[1] पवर्गः ।८।१२।।

[ स्पर्शसंज्ञा ]

[२७] इति स्पर्शाः ।८।१३।

कादयो वर्णाः "स्पर्श" संज्ञकाः स्युः ।

[ अन्तस्थासंज्ञा ]

[२८] अथान्तस्थाः ।८।१४।।

[२९] यिति रिति लिति विति[2] ।८।१५।।

एते यादयो वर्णा "अन्तस्थ" संज्ञकाः स्युः ।

[ ऊष्मसंज्ञा ]

[३०] अथोष्माणः ।८।१६।।

[३१] शिति षिति सिति हिति[3] ।८।१७।।

शादयो वर्णाः "ऊष्म" संज्ञकाः स्युः ।

[ अयोगवाहसंज्ञा ]

[३२] अथायोगवाहाः ।८।१८।।

[ विसर्जनीयसंज्ञा ]

[३३] अः इति विसर्जनीयः ।८।२२।।

अत्र स्वरात्परो वर्णो "विसर्जनीयः" स्यात् ।

[ जिह्वामूलीयसंज्ञा ]

[३४] ≍ क इति जिह्वामूलीयः ।८।१९।।

अत्र कात्पूर्वो वर्णो "जिह्वामूलीयः" स्यात् ।

---

१. "इति" नास्ति. ख. ङ. च. छ. ज. । ग. ज. पुस्तके तु "कवर्गः" इतोऽग्रे २३-२६ सूत्राणि न सन्ति, किन्तु "एवं चितीत्यादि, टितीत्यादि, तितीत्यादि, पितीत्यादि", इति पाठः ।

२. सूत्रस्थाने "यितीत्यादि" इति पाठः ग. ज.

३. सूत्रस्थाने "शितीत्यादि" इति पाठः ग. ज.

[ उपध्मानीयसंज्ञा ]

**[३५] ⌣⌢ प इत्युपध्मानीयः ।८।२०।।**

अत्र पात्पूर्वो वर्णं "उपध्मानीयः" स्यात् ।

[ अनुस्वारसंज्ञा ]

**[३६] अं इत्यनुस्वारः ।८।२१।।**

अत्र स्वरात्परो वर्णोः "अनुस्वारः" स्यात् ।

[ नासिक्यसंज्ञा ]

**[३७] हुं इति नासिक्यः ।८।२३।।**

अयमवसाने ऋक्शाखायां प्रसिद्धः ।

[ यमसंज्ञा ]

**[३८] कुं खुं गुं घुं इति चत्वारो यमाः ।८।२४।।**

विसर्गादयो वर्णा "अयोगवाह" संज्ञकाः स्युः ।

[ व्यञ्जनसंज्ञा ]

**[३९] इति व्यञ्जनानि ।८।२५।।**

एते कादयो वर्णा "व्यञ्जन" संज्ञकाः स्युः ।

[ व्यञ्जनानामर्धमात्रिकता ]

**[४०] व्यञ्जनमर्धमात्रा ।१।५९।।**

पूर्वोक्तं व्यञ्जनम् अर्धमात्राकालिकं स्यात् ।

[ संयोगसंज्ञा ]

**[४१] अनन्तरॱ संयोगः ।१।४८।।**

स्वरैरव्यवहितानि व्यञ्जनानि "संयोग" संज्ञानि स्युः ।

[ अमाध्यन्दिनीया वर्णाः ]

**[४२] तस्मिन्-ळ-ळ्ह-जिह्वामूलीयो-पध्मानीय-नासिक्या न सन्ति माध्यन्दिनानाम् ।८।३९।।**

**[४३] लृकारो[१] दीर्घः प्लुताश्चोक्तवर्जम्[२] ।८।४०।।**

पूर्वोक्तवर्णसमाम्नाये[३] ळ-ळ्हौ[४] ड-ढस्थानीयौ काण्वादिषु प्रसिद्धौ, जिह्वामूलीयादित्रयं, दीर्घ लृकार, अग्ना ३ ई इत्यादयोऽष्टौ प्लुता वक्ष्यन्ते (शु० प्रा० २।५०-५४), तेभ्योऽन्ये प्लुता, इत्येते वर्णा[५] माध्यन्दिनशाखिनां संहितायां न सन्ति ।

---

१. लृदीर्घः प्लुता ख. लृदीर्घप्लु घ. ज.

२. सूत्रमिदं पृथङ् नास्ति च.

३. म्नायो ख.

४. ळ-ळ्ह क; ल्हल ज.

५. 'इत्येते वर्णा' नास्ति क. घ.

[ वर्णसंज्ञा ]

**[४४] उपदिष्टा वर्णाः ।१।३४।।**

माध्यन्दिनीय[1]शाखोपयुक्ता वर्णाः [सू० ९-३९] प्रदर्शिताः ।

[ वर्णनिर्देशविधिः ]

**[४५] निर्देश इतिना ।।१।३६।।**

पूर्वोक्तानां वर्णानां निर्देश इतिना स्यात् । अ इति (शु० प्रा० ८।३) किति[2] (शु० प्रा० ८।८) ।

**[४६] कारेण च ।१।३७।।**

वर्णानां निर्देशः कारेण च[3] स्यात् चादितिना । अकारः (शु० प्रा० १।११४) ।

**[४७] अव्यवहितेन व्यञ्जनस्य ।१।३८।।**

व्यञ्जनस्य कादेर्निर्देश अकारव्यवहितेन कारेण स्यात् । ककारः (शु० प्रा० ३।११) ।

**[४८] स्वरैरपि ।।१।४०।।**

स्वरैरकारादिभिश्च व्यञ्जनानां निर्देशः स्यात् । नुः (शु० प्रा० ३।१३४), सिः[4] । "अपि" शब्दाद् इतिना कारेण च ।

**[४९] र एफेन च ।१।३९।।**

रस्य निर्देशः एफेन[5] च[6] स्यात्[7] । चाद् इतिना स्वरैश्च । रेफः (शु० प्रा० ४।१०२) ।

**[५०] नानुस्वार-विसर्ग-जिह्वामूलीयो-पध्मानीय-यमाः ।१।४१।।**

एते इतिना, कारेण स्वरैश्च न निर्देष्टव्याः[8] ।

॥ इति वर्णसमाम्नायप्रकरणम् ॥



---

१. न्दिनशा क. घ.
२. विति ज.
३. "च" नास्ति ख. ज,
४. सि ख. ज.
५. ण ख. ज.
६. "च" नास्ति ख. ज.
७. "अत्र 'रादिफः' इत्यनेन 'वर्णात्कारः' इत्यस्य बाधः कृतः" इत्यधिकः पाठः क.
८. व्यः ख. ।

## ❁ स्थानप्रकरणम् ❁

### [५१] स्थाने ।१।६२।।

अधिकारोऽयम् । स्थानं = वर्णानामुत्पत्तिस्थानम् । इत उत्तरेषु स्थान इत्युपतिष्ठते ।

[ स्थानप्रकरणीयह्रस्वपरिभाषा ]

### [५२] ह्रस्वग्रहणे दीर्घ-प्लुतौ प्रतीयात् ।१।६३।।

अकारादीनां ह्रस्वानां स्वराणां ग्रहणे कृते सति दीर्घप्लुतयोर्ग्रहणं स्यात् । ह्रस्वग्रहण इत्युपलक्षणम् । सन्ध्यक्षराणां ह्रस्वाभावाद्दीर्घाणां ग्रहणेऽपि प्लुतानां ग्रहणं स्यात् ।

[ स्थानप्रकरणीयवर्गपरिभाषा ]

### [५५] प्रथमग्रहणे वर्गम् ।१।६४।।

कवर्गादीनां प्रथमाः क-च-ट-त-पास्तेषां ग्रहणे यस्य वर्णस्य ग्रहणं तदादिवर्गं गृह्णीयात् ।

[ तालुस्थानीया वर्णाः ]

### [५४] इ-च-शै[१]-यास्तालौ ।१।६६।।

ह्रस्व-दीर्घ-प्लुता[२] इकाराश्चवर्गः शकार एकारो यकारश्च[३] एते वर्णास्तालुस्थानाः स्युः ।

[ जिह्वामूलस्थानीयौ वर्णौ ]

### [५५] ऋ ⌣ क्कौ[४] जिह्वामूले ।१।६५।।

ऋकारत्रयं जिह्वामूलीयः कवर्गश्च एते जिह्वामूलस्थानाः स्युः ।

[ मूर्धस्थानीयो वर्णः ]

### [५६] ष-टौ मूर्धनि ।१।६७।।

षकारः टवर्गः एतौ मूर्धस्थानौ[५] स्याताम् ।

[ दन्तमूलस्थानीयो वर्णः ]

### [५७] रो दन्तमूले ।१।६८।।

रेफो दन्तमूलस्थानः स्यात् ।

[ दन्तस्थानीया वर्णाः ]

### [५८] लृ-ल-स[६]-ता दन्ते ।१।६९।।

लृकारत्रयं, लकारः, सकारस्तवर्गश्च दन्तस्थानाः स्युः ।

---

१. शेया ग. घ. ज. ङ. च. छ.
२. प्लुत क. घ.
३. श्चैते ग. ज.
४. ऋ ⌣ कौ ग. च. ज.
५. मूर्धस्थानौ ख. ग. ज.
६. सि च. छ. ज.

[ ओष्ठस्थानीया वर्णाः ]

**[५९] उ-वौ[1]-पो-पध्मा ओष्ठे ।१।७०।।**

उकारत्रयं, वकार, ओकारः, पवर्गः, उपध्मानीयश्च एते ओष्ठस्थानाः स्युः ।

[ कण्ठस्थानीया वर्णाः ]

**[६०] अ-ह-विसर्जनीयाः कण्ठे ।१।७१।।**

अकारत्रयं, हकारो, विसर्जनीयश्च एते वर्णाः कण्ठस्थानाः स्युः ।

[ कण्ठतालुस्थानीयः कण्ठोष्ठस्थानीयश्च वर्णौ ]

**[६१] ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा ।१।७३।।**

ऐकारस्य पूर्वभागः[2] कण्ठस्थानीयः, उत्तरभागश्च तालुस्थानः स्यात् । औकारस्य पूर्वः कण्ठस्थानः, उत्तर ओष्ठस्थानः स्यात् । एवं च कण्ठतालुस्थान ऐकारः कण्ठौष्ठस्थान औकार इति बोध्यम् ।

[ नासिकास्थानीया वर्णाः ]

**[६२] यमा-नुस्वार-नासिक्यानां नासिके ।१।७४।।**

यमाश्चत्वारोऽनुस्वारो नासिक्यश्च एते वर्णा नासिकास्थानाः स्युः ।

इति स्थानानि

॥ इति स्थानप्रकरणम् ॥

## ❋ करणप्रकरणम् ❋

अथ करणानि । करणमुत्पत्तिसाधनम् ।

[ जिह्वाग्रकरणा वर्णाः ]

**[६३] दन्त्या जिह्वाग्रकरणाः ।१।७६।।**

लृ-ल-स-ता जिह्वाग्रं करणं[3] येषामेवंभूताः स्युः ।

**[६४] रश्च ।१।७७।।**

रेफश्च जिह्वाग्रकरणः स्यात् ।

---

१. वो ग. घ. ङ. च. छ. ज.

२. पूर्वो भागः ख.

३. णमेषा क. घ.

[ प्रतिवेष्टितजिह्वाग्रकरणा वर्णाः ]

**[६५] मूर्धन्याः प्रतिवेष्टचाग्रम् ।१।७८।।**

षकारः टकारादिपञ्च च[१] प्रतिवेष्टितजिह्वाग्रकरणाः स्युः ।

[ जिह्वामध्यकरणा वर्णाः[२] ]

**[६६] तालुस्थाना मध्येन ।१।७९।।**

इ-च-श[३]-या जिह्वामध्यकरणाः स्युः ।

[ नासिकाकरणा ओष्ठकरणाश्च वर्णाः ]

**[६७] समानस्थानकरणा नासिक्यौष्ठ्याः ।१।८०।।**

नासिक्यो नासिकाकरणः,[४] उ-वौ-पो[५]-पध्मानीया ओष्ठकरणाः स्युः ।

[ दन्ताग्रकरणो वर्णः ]

**[६८] वो दन्ताग्रैः ।१।८१।।**

वकार ओष्ठस्थानोऽपि दन्ताग्रकरणः स्यात् । पूर्वसूत्रापवादः ।

[ नासिकामूलकरणा वर्णाः ]

**[६९] नासिकामूलेन यमाः ।१।८२।।**

यमा नासिकामूलकरणाः स्युः ।

[ हनुमूलकरणा वर्णाः ]

**[७०] जिह्वामूलीयानुस्वारा हनुमूलेन ।१।८३।।**

ऋ ≍ क्का[६] अनुस्वारश्च एते हनुमूलकरणाः स्युः ।

[ पुनः जिह्वामध्यकरणा वर्णाः[७] ]

**[७१] कण्ठ्या मध्येन ।१।८४।।**

अ-ह-विसर्गा जिह्वामध्यकरणाः स्युः । इति करणानि ।

॥ इति करणप्रकरणम् ॥

---

१. 'च' नास्ति क. घ.
२. अग्रेऽपि ७१ सूत्रे
३. शो ग. घ. ज.
४. नासिक्यकरणः ख.
५. वोपौ ग. घ. ज.
६. ऋ ≍ क्कौ क. घ.
७. पूर्वमपि ६६ सूत्रे

## ❋ आस्यप्रयत्नप्रकरणम् ❋

अथास्यप्रयत्नः । स चतुर्द्धा-स्पृष्टे-षत्स्पृष्टे-षद्विवृत-विवृतभेदात् ।
स्पृष्टप्रयत्नाः स्पर्शाः ।
ईषत्स्पृष्टप्रयत्नाः अन्तस्थाः ।
ईषद्विवृतप्रयत्ना ऊष्माणः ।
विवृतप्रयत्नाः स्वराः ।[1]

॥ इति आस्यप्रयत्नप्रकरणम् ॥

## ❋ संज्ञाप्रकरणम् ❋

[सवर्णसंज्ञा]

**[७२] समानस्थान-करणा-स्यप्रयत्नः सवर्णः ।१।४३।।**

ताल्वादिस्थानं जिह्वाग्रादिकरणमाभ्यन्तरप्रयत्नश्चेत्येतत् त्रयं यस्य वर्णस्य येन वर्णेन तुल्यं तस्य सवर्णः स्यात् ।

[शास्त्रोपयोगिपरिभाषासु संख्यासूत्रम्]

**[७३] स्पर्शेष्वेव संख्या ।१।४९।।**

प्रथमादिसंख्या स्पर्शेष्वेव स्यात् ।

[शास्त्रोपयोगिसंज्ञासु वर्णसंज्ञाप्रकरणम्]

**[७४] द्वौ द्वौ प्रथमौ जित् ।१।५०।।**

पञ्चसु वर्गेषु प्रथमौ[2] द्वौ द्वौ—क-खौ, च-छौ, ट-ठौ, त-थौ, प-फौ, एते वर्णा 'जित्' संज्ञकाः स्युः ।

**[७५] ऊष्माणश्च हं[3]वर्जम् ।१।५१।।**

हकारवर्जिताः ऊष्माणः = श-ष-साश्च 'जित्' संज्ञकाः स्युः ।

[मुत्संज्ञा]

**[७६] मुच्च ।१।५२।।**

श-ष-सा 'मुत्'[4] संज्ञकाः स्युः, चाज्[5] 'जित्' संज्ञकाः ।

---

१. क. ग. घ. ज. पुस्तकेषु पूर्वं 'विवृतप्रयत्नाः स्वराः' ततः 'इषद्विवृतप्रयत्ना ऊष्माणः' इतिपाठः ।
२. 'प्रथमौ' नास्ति क. घ.
३. हि ख. ज.
४. नुस्सं ख.
५. वा क. घ.

[धिसंज्ञा]

**[७७] धि शेषः ।१।५३।।**

पूर्वोक्तेभ्योऽन्ये ग-ज-ड-द-बा, घ-झ-ढ-ध-भा, ङ-ञ-ण-न-मा, य-र-ल-वा, हकारश्च, एते 'धि' संज्ञकाः स्युः ।

[ सोष्मसंज्ञा ]

**[७८] द्वितीय-चतुर्थाः सोष्माणः ।१।५४।।**

द्वितीयाः-ख-छ-ठ-थ-फाः, चतुर्थाः—घ-झ-ढ-ध-भाश्च 'सोष्म' संज्ञाः स्युः ।

[ अनुनासिकसंज्ञा ]

**[७९] मुख-नासिका-करणोऽनुनासिकः ।१।७५।।**

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ।

**[८०] अनुनासिकाश्चोत्तमाः ।१।८९।।**

ङ-ञ-ण-न-मा, 'अनुनासिकाः' स्युः, चात् स्व[१]-स्ववर्गस्थानाः[२] । नासिका-स्थानं[३] द्वितीयमेषामित्यर्थः ।

तदित्थम्—वर्गेषु प्रथमा 'जित्' संज्ञकाः ।

द्वितीया 'जित्' संज्ञकाः 'सोष्माण'श्च ।

तृतीया 'धि' संज्ञकाः ।

चतुर्थाः 'सोष्माणो' 'धि' संज्ञकाश्च ।

पञ्चमा 'धि' संज्ञका 'अनुनासिका' श्चेति ।

**इति शास्त्रीयसंज्ञासु सन्धिप्रकरणोपयोगिवर्णसंज्ञाः**

[ उपधासंज्ञा ]

**[८१] अन्त्याद् वर्णात् पूर्वं उपधा ।१।३५।।**

अन्तिमाद् वर्णात् पूर्वो वर्ण 'उपधा' संज्ञकः स्यात् ।

[ लोपसंज्ञा ]

**[८२] वर्णस्यादर्शनं लोपः ।१।१४१।।**

उच्चारणयोग्यस्य वर्णस्यानुच्चारणं 'लोप' संज्ञः स्यात् ।

---

१. स्ववर्ग ख. ग. ज.

२. नम् क. घ.

३. स्थाने ख.

[ नतिसंज्ञा ]

**[८३] दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः ।१।४२।।**[1]

दन्त्यस्य स[2]कारादेः षकारादि[3]मूर्द्धन्यभावो 'नति' संज्ञकः स्यात् ।

[ अपृक्तसंज्ञा ]

**[८४] एकवर्णं[4] पदमपृक्तम् ।१।१५१।।**

एकवर्णम् 'आ' इत्यादिपदम् 'अपृक्त'संज्ञं स्यात् ।

[ अपृक्तस्य आद्यन्तवद्भावपरिभाषा ]

**[८५] स एवादिरन्तश्च ।१।१५२।।**

एकवर्णं[5] पदमेव 'आदिरन्तश्च' स्यात् । आदिवदन्तवच्च कार्यं लभत इत्यर्थः ।

[ पदसंज्ञा ]

**[८६] द्विरुक्तमाम्रेडितं पदम्[6] ।१।१४६।।**

द्विरुच्चारितं पदम् 'आम्रेडित' संज्ञं स्यात् ।

[ स्थितोपस्थितसंज्ञा ]

**[८७] स ँ हित[7] ँ स्थितोपस्थितम् ।१।१४७।।**

मध्यस्थेन[8] इतिना सह द्विरुच्चारितं पदं 'स्थितोपस्थित' संज्ञं स्यात् । उक्तं च—

"उपस्थितं सेतिकारं केवलं तु पदं स्थितम् ।
तत् स्थितोपस्थितं नाम यत्रोभे आह संहिते ।।"

[ संहितासंज्ञा ]

**[८८] वर्णानामेकप्राणयोगः संहिता ।१।१५८।।**

वर्णानामविरामेणोच्चारणं 'संहिता' संज्ञं[9] स्यात् ।

---

१. मूर्धन्या क. ग. घ. च., मूर्धन्यापति ज.
२. वका ग.
३. मूर्धन्या इति ज.
४. वर्णः घ. ङ. च. छ.
५. वर्ण ज.
६. पदं नास्ति ख.
७. त ँ क .घ. ज.
८. स्थने घ.
९. संज्ञा ग. ज.

## ❋ शास्त्रीयपरिभाषाप्रकरणम् ❋

[ शास्त्रीयपरिभाषासु ८९—९९ ]

[ द्वितीयापरिभाषा ]

**[८९] तमिति विकारः ।१।१३३।।**

द्वितीयया[1] निर्दिष्टो विकारः स्यात् ।

[ सप्तमीपरिभाषा ]

**[९०] तस्मिन्निति निर्दिष्टे पूर्वस्य ।१।१३४।।**

परिभाषेयम्—अनियमे नियमकारिणी[2] । वर्णस्य सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तराव्यवहितस्य[3] पूर्वस्य स्यात् ।

[ पञ्चमीपरिभाष। ]

**[९१] तस्मादित्युत्तरस्यादेः ।१।१३५।।**

पञ्चमी निर्देशेन[4] क्रियमाणो विधिः वर्णान्तराव्यवहितस्य[5] परस्यादेः स्यात् ।

[ षष्ठीपरिभाषा ]

**[९२] षष्ठी स्थानेयोगा ।१।१३६।।**

अनिर्धारितसम्बन्धा[6] षष्ठी स्थानसम्बन्धवती स्यात् । स्थानम् = उच्चारणप्रसङ्गः ।

[ तृतीयापरिभाषा ]

**[९३] तेनेत्यागमः ।१।१३७।।**

तृतीयानिर्दिष्ट आगमः स्यात् ।

स्थाने जायमानो 'विकारः', समीपे जायमान 'आगम' इति भेदः ।

[ सन्निकृष्टपरिभाषा ]

**[९४] सन्निकृष्ट-विप्रकृष्टयोः सन्निकृष्टस्य ।१।१४४।।**

---

१. तीयानिर्दि ग. ज.
२. रिणो ज., रिणि ख.
३. स्यापू क.
४. निर्द्देशे ग. ज.
५. तपरस्या क.
६. संवधा ज.

सन्निहितासन्निहितयोः कार्यप्राप्तौ सत्यां सन्निहितस्यैव कार्यं स्यात्। अथ च [परिभाषा]—'सहचरितासहचरितयोर्मध्ये सहचरितस्यैव कार्यहेतुत्वं[1] स्यात्।'

[ यथासन्नपरिभाषा ]

**[ ९५ ] विकारी यथासन्नम् ।१।१४२।।**

यस्य वर्णस्य विकारः क्रियते, स वर्णः स्था[2]नादिना स्वसदृशं विकारमापद्यते।

[ यथासङ्ख्यपरिभाषा ]

**[ ९६ ] सङ्ख्यातानामनुनिर्देशे[3] यथासङ्ख्यम् ।१।१४३।।**

समसङ्ख्यानां विधीयमानं[4] कार्यं यथाक्रमं स्यात्।

[ पदान्तवत्परिभाषा प्राथमिकी ]

**[ ९७ ] अवग्रहः पदान्तवत् ।१।१५३।।**

अवग्रहोऽस्ति यस्मिँन्त्सोऽवग्रहः[5] = अवगृह्यस्य पूर्वभागः पदान्तवत् कार्यं लभते। अर्थादुत्तरस्यापि पदत्वम्।

[ पदान्तवति इतिकरणनिषेधः ]

**[ ९८ ] न त्वितिकरणम्[6] ।१।१५४।।**

अवग्रहः एकमात्राकालिकव्यवधानेनोच्चारणम्[7]। अवग्रहः[8] इतिकरणं न लभते।

[ विप्रतिषेधपरिभाषा ]

**[ ९९ ] विप्रतिषेध उत्तरं बलवदलोपे ।१।१५९।।**

द्वयोः शास्त्रयोरन्यत्र चरितार्थयोरेकत्र युगपत्प्राप्तौ सत्याम् उत्तरं बलवत् स्यात्, लोपं वर्जयित्वा।

॥ इति शास्त्रीयपरिभाषाप्रकरणम् ॥

---

१. कार्यं हेतुत्वं क. घ., हेतुत्व ग.
२. वर्णस्थाना ख. घ.
३. मनुदेशो ख. घ. ज. ग., मनूदेशो ङ. छ., मनूद्देशो च.
४. विवीयमानं ज.
५. ग्रहयोग्यः ख. ग. ज. घ.
६. सूत्रे 'अवग्रहः' इत्यपि घ.
७. एतद्वाक्यं क. घ. पुस्तकयोरेवास्ति। द्र. ज्यो. ४६७, शु. प्रा. ५।१
८. 'अवग्रहः' नास्ति क. घ.

# ❀ प्रगृह्यसंज्ञाप्रकरणम् ❀

[ सू० १००–१०६ ]

[ प्रगृह्याधिकारसूत्रम् ]

**[१००] प्रगृह्यम् ।१।९२॥**

संज्ञाधिकारोऽयम् ।

[ केषुचिद् द्विवचनान्तेषु प्रगृह्यत्वम् ]

**[१०१] एकारे-कारो[1]-कारा द्विवचनान्ताः ।१।९३॥**

एकारान्तमीकारान्तमूकारान्तं च द्विवचनान्तं 'प्रगृह्य'[2] संज्ञं स्यात् ।

[ पदान्तीयौकारस्य प्रगृह्यत्वम् ]

**[१०२] ओकारश्च पदान्तेऽन[3]वग्रहः ।१।९४॥**

पदान्ते वर्तमान 'ओकारः' 'प्रगृह्य'संज्ञः[4] स्यात्, अवग्रहं (सू ९७ शु. प्रा. १।१५३) वर्जयित्वा ।

[ अपृक्तेषु उकारस्य प्रगृह्यत्वम् ]

**[१०३] उकारोऽपृक्तः ।१।९५॥**

अपृक्त 'उकारः' 'प्रगृह्य' संज्ञः[4] स्यात् ।

[ केषुचित् सप्तम्यर्थपदेषु प्रगृह्यत्वम् ]

**[१०४] चमू अस्मे त्वे ।१।९६॥**

एतानि पदानि 'प्रगृह्य' संज्ञा[5]नि भवन्ति[6] ।

[ स्वरविशेषेण प्रगृह्यं पदम् ]

**[१०५] मे उदात्तम् ।१।९७॥**

'मे' पदमुदात्तस्वरयुक्तं 'प्रगृह्य' संज्ञं स्यात् ।

[ अमीपदस्य प्रगृह्यत्वम् ]

**[१०६] अमी पदम् ।१।९८॥**

अमी इत्येतत् पदं 'प्रगृह्य' संज्ञं स्यात् ।

॥ इति प्रगृह्यसंज्ञाप्रकरणम् ॥

---

१. रो घ.

२. ह्यं ख.

३. ना ज.

४. संज्ञं क. ख.

५. संज्ञकानि क.

६. भवन्ति स्थाने स्यात् ख.

## ❁ रिफतसंज्ञाप्रकरणम् ❁

[ सू. १०७–११५ ]

[ रिफितसंज्ञाधिकारसूत्रम् ]

**[१०७] विसर्जनीयो रिफितः ।१।१६०।।**

विसर्गो 'रिफित' संज्ञः स्यात् ।

अधिकारोऽयम् ।

[ रिफितपदानां परिगणनम् सू० १०८-११५ ]

**[१०८] कर[1]नुदात्तम् ।१।१६१।।**

'कर्' इत्येत[2]स्य पदस्य विसर्गो 'रिफित' संज्ञः स्यात्, यदि तत्[3] पदमनुदात्तम् ।

**[१०९] अन्तरनाद्युदात्तम् ।१।१६२।।**

'अन्तर्' इत्येतस्य[4] विसर्गो 'रिफित' संज्ञः स्यात्, यदि तदाद्युदात्तं न ।

**[११०] अहरभकारपरम् ।।१।१६३।।**

अहर्—इत्यस्य विसर्गो 'रिफितः' स्यात्, भकारः[5] परो न चेत् ।

**[१११] आवर्-व-रिति समानर्चि ।।१।१६४।।**

आवर्-वर्[6]-इत्यनयोः पदयोर्विसर्गो 'रिफित' संज्ञः[7] स्यात्, तत्पदद्वयमेकस्यामृचि विद्यमानं चेत् ।

**[११२] स्तोतर्-वस्तः-सनुतर[8]-भार्-वार्-द्वाः ।।१।१६५।।**

एषां पदानां विसर्गो 'रिफितः' स्यात् ।

**[११३] स्वः पदमनरणे ।।१।१६६।।**

स्वर्—इत्ये[9]तस्य विसर्गो रिफितः स्यात्, अरणशब्दे[10] परे तु न भवति । इदमुत्तरार्थम्[11] ।

---

१. करमनु ज. ग. ङ. च. छ.
२. त्ये तत्पदस्य क.
३. तत्''''इत्यारभ्य अग्रिमसूत्रीय''''यदि पर्यन्तं पाठो नास्ति घ.
४. इत्येतस्य स्थाने इत्यस्य क. ग. ज़.
५. कारपरो ख.
६. आवर वर ज.
७. संज्ञ नास्ति ख. ग. ज.
८. सनुतरे क.
९. तस्य स्थाने तत्पदस्य ज.
१०. शब्द ज.
११. रार्थम् ख.

**[११४] पदादिश्चाजित्परः ।१।१६७।।**

पदादिभूतस्य स्वर्—इत्ये तस्य विसर्गो 'रिफित' संज्ञः[२] स्यात्,[३] जित्संज्ञको वर्णः परो न चेत् ।

**[११५] ह्वाः—सवितः—पुनस्—त्वष्टर्—नेष्ट-रकर्-होतर्-मातः-प्रातर्-जामात-रजीगः[४]-प्रणेतरिति च ।१।१६८।।**

एषां पदानां विसर्गो 'रिफित' संज्ञः स्यात् ।।

।। इति संज्ञा-परिभाषा प्रकरणम् ।।

## ❀ अथ स्वर (अच्) सन्धिप्रकरणम् ❀

सू० ११६—

[ स्वरसन्ध्यवसरसूत्रम् ]

**[११६] स[५]ंहितायाम् ।३।१।।**

अधिकारोऽयम् ।

[ स्वरसन्धिस्थलसूत्रम् ]

**[११७] पदान्त-पदाद्योः सन्धिः ।३।३।।**

**परिभाषेयम्** । यदत्र[६] सन्धिकार्यमुच्यते तत् पदान्त-पदाद्योः स्यात् । अवग्रह-योग्ये पदे सन्धिकार्याणि 'अवग्रहः पदान्तवत्' (सू० ९७ शु० प्रा० १।१५३) इत्यतिदेशाद् भवन्ति । यानि पदद्वयसम्बन्धीनि कार्याणि तत्रैतस्योपस्थितेः व्यस्ते न भवन्ति । एकपदस्थानि तु अवग्रहे न भवन्ति ।

[ अन्तस्था (यण्) सन्धिः ]

**[११८] स्वरे भाव्यन्तस्था[७]म् ।४।४६।।**

भाविसंज्ञकः स्वरः स्वरे परे 'अन्तस्थाम्' आपद्यते । 'विकारी यथासन्नम्'

---

१. त्वे नास्ति ज.
२. संज्ञ नास्ति जं.
३. स्यात् नास्ति ख.
४. जीभः क.
५. सं. ख. ग. ज; सँ. च.
६. यदत्र स्थाने यच्च ख.
७. स्थायाम् क.

(सू० ९५ शु० प्रा० १।१४२) इति स्थानेन सदृशो भवति[1]। 'तस्मिन्निति निर्दिष्ट' (सू० ९० शु० प्रा० १।१३४) इत्यव्यवहितस्य।

पु॑नाम्यच्छि॑द्रेण (पद १।१२, सं० १।१२) व्वाज्ज्युर्व्वा[2] (पद ११।१९ सं० ११।-२२) व्वे[3]त्वाज्ज्यस्य (पद २८।११, सं० २८।११)

[ अन्तस्थान्तसन्धिः ]

## [११९] सन्ध्यक्षरमयवायावम् ।४।४७।।

सू[4]त्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र [—परिभाषेयम् ]।

'स्वर' (सू० ११८ शु० प्रा० ४।४७) इत्यनुवर्तते। सन्ध्यक्षरसंज्ञकः स्वरः स्वरे[5] परे—अय्, अव्, आय्, आव्—एतानादेशानापद्यते[6]। 'संख्यातानामनुनिर्देशो[7] यथा-संख्यम्' (सू० ९६ शु० प्रा० १।१४३) इति यथाक्रमं भवन्ति। ते+आ (पद १९।५५ सं० १९।५७) इति स्थिते अयादेशे[8] जाते[9]—

[ यवलोपसन्धिः ]

## [१२०] य-वयोः पदान्तयोः स्वरमध्ये लोपः ।४।१२६।।

उभयोः स्वरयोर्मध्ये विद्यमानयोः पदान्त[10]योर्यकारवकारयोर्लोपः स्यात्। 'षष्ठी स्थानेयोगा' (सू० ९२ शु० प्रा० १।१३६) इति स्थाने।

तऽ आग॑मन्तु (पद १९।५५ सं० १९।५७)।

सर॑स्वत्याऽ इन्द्रा॑य (पद २१।५५ सं० २१।५९)।

विष्णो+एते (पद ५।१६ सं० ५।१६) इति[11] स्थिते अवादेशे (सू० ११९ शु० प्रा० ४।४८) कृते, लोपे पूर्वसूत्रेण (सू० १२० शु० प्रा० ४।१२६) प्राप्ते—

---

१. ख पुस्तके इत उत्तरम्—'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र। स्वर इत्यनुवर्तते।' इति पाठः। अन्येषु उत्तरसूत्र अयं पाठ उपलभ्यते।

२. वाज्यर्वन् ख.

३. त्वेत्वाज्यस्य घ.

४. 'सूत्रे....वर्तते' अत्रायं पाठो नास्ति ख.

५. स्वरे नास्ति घ.

६. द्यन्ते ख.

७. मनुद्देशो ख. मनुदेशो क. घ. ज.

८. देशो ख.

९. जायते ख.

१०. पदोत्तरयो ख.

११. इति नास्ति ग, ज.

[ वलोपसन्ध्यपवादः ]

## [१२१] न वकारस्यासस्थान एकेषाम् ।४।१२७।।

एकशब्दः प्रधानवाची । स्वरयोर्मध्ये विद्यमानस्य वकारस्य पदान्तस्य लोपो न स्याद् भिन्नस्थाने स्वरे परे ।

विष्णवे_ते (पद ५।१६ सं० ५।१६) ।

आनन्दनन्दावाण्डौ मे_[1]भगः (पद २०८ सं० २०९) ।

असस्थान इति किम्—

विष्णंऽ उरुगाय (पद ८।१ सं० ८।१) ।

ऊरू पादांऽ उच्च्येते[2] (पद ३१।१० सं० ३१।१० ) ।

[ ह्रस्वसन्धिः ]

## [१२२] क[3]ण्ठ्य ऋकारे ह्रस्वम् ।४।४९।।

कण्ठ्यः[4] स्वर ऋकारे[5] परे ह्रस्वं[6] स्वरमापद्यते ।

त्वंऽ ऋ_भुमते (पद ३८।५ सं० ३८।८) ।

# ❀ एकादेशसन्धिप्रकरणम् ❀

[ एकादेशसन्धिस्वरूपम् ]

## [१२३] अथैक[7]मुत्तरश्च ।४।५०।।

'अथ' इत्य[8]धिकारे । उत्तरः, चकारात् पूर्वः[9] = द्वौ वर्णौ एकमादेशमापद्येते ।

---

१. मे भगः नास्ति क. ख. घ.
२. उच्यते ख.
३. कण्ठ्य ख. कण्ठ ज.
४. कण्ठ्यस्वर क. घ. कण्ठ्यस्वरं ग. ज.
५. ऋकारपरे क. घ.
६. ह्रस्वस्वर ग. ज.
७. थैक उत्त. क.
८. इति नास्ति ख.
९. पूर्वौ ख.

**[ दीर्घसन्धिः ]**

## [१२४] सिꣳ सवर्णे दीर्घम् ।४।५२।।

'सिम्' संज्ञकः स्वरः स[1]वर्णे स्वरे[2] परे पूर्वः परश्च एकं दीर्घमापद्यते।

भू ता॑य[3] त्वा नारा॑तये (सं० १।११; पद० १।११)।

स्वाह् ा॒ग्नये॑[4] यु॒ज्ञिया॑यु॒ (सं० ३८।११; पद० ३८।८)।

स्वाह् ा॒पये॑[5] (सं० ९।२०; पद० ९।१९)।

यौमी॒दम् (सं० १।२२; पद० १।२२)।

वीद्ध्र्या॑य (सं० १६।३८; पद० १६।३८ )।

पचन्तू॒ खे[6] (सं० ११।६१; पद० ११।५८)—अत्र 'स्वरे भाव्यन्तस्थाम्' (शु० प्रा० ४।४७ सू० ११८) इति प्राप्ते[7] 'विप्रतिषेध०' (शु० प्रा० १।१५९ सू० ९९) इत्यनेन[8] परत्वादिदमेव (शु० प्रा० ४।५२ सू० १२४) भवति।

**[ गुणसन्धिः ]**

## [१२५] कण्ठ्यादिवर्णं एकारम् ।४।५३।।

**'वर्णग्रहणे सवर्णग्रहणम्'** । [—परिभाषेयम् ]

कण्ठ्यात् पर इवर्णः[9] पूर्वः परश्च एकम्[10] **एकार—**मापद्यते।

ज॒येन्द्रा॑य (सं० ९।११; पद ९।११)।

एदम् (सं० ४।१; पद० ४।१)[11]।

## [१२६] उवर्णं ओकारम् ।४।५६।।

---

१. स्व ख.

२. स्वरे नास्ति क.

३. भूताय नास्ति ख.

४. इदमुदाहरणं खातिरिक्तपुस्तकेषु।

५. इदमुदाहरणं ख पुस्तके एव वर्तते परं नैतन्माध्यन्दिनीयसंहितायामुपलभ्यते। जटायां व्युत्क्रमे तु भवति।

६. षे ज. क.

७. प्तं ग. ज. ख.

८. इत्यनेन नास्ति घ.

९. र्ण क. घ.

१०. एकम् नास्ति घ. क.

११. एकम् इत्यधिकम् घ.

कण्ठ्यात् पर उवर्णः पूर्वश्च एकम् ओकारम्[1] आपद्यते ।

वरु॑णस्यो॒त्तम्भ॑नम् (सं० ४।३६; पद० ४।३६) ।

प्रोहा॑मि (सं० २।१५; पद० २।१५ ) ।

सम्॒वे॑तत्[2] (सं० ८।६१; पद० ८।५५)

इन्द्राया॑हि (सं० २०।८७; पद० २०।७८)

इन्द्रेहि॑[3] (सं० ३३।२५ पद ३३।२२)—इत्यादौ अन्तस्था[4]—दीर्घ[5] एकारादीनि 'स एवादिरन्तश्च[6]' (शु० प्रा० १।१५२ सू० ८५) इत्यतिदेशाद् भवन्ति ।

[ वृद्धिसन्धिः ]

## [१२७] सन्ध्यक्षरमेकारौकारौ ।४।५७।।

कण्ठ्यात् स्वरात् परं सन्ध्यक्षरं पूर्वश्च[7] एतौ ऐकारौ-कारौ आपद्ये[8]ते। स्थानतः सादृश्याद् (शु० प्रा० १।१४२ ज्यो० ९५) एकारैकारयोः[9] ऐकारः, ओकारौकारयोः औकारः ।

भ्रा॒जायै॒ष ते॒ (सं० ८।४० पद ८।३५)

इन्द्रे॑णै॒न्द्रम् (सं० १९।२६ पद १९।२४)

ओजि॒ष्ठौजि॑ष्ठ॒ꣳ (सं० ८।३९ पद ८।३४)

प्रौ[10]क्षन् (सं० ३१।९ पद ३१।९) ।

[ वृद्धिसन्ध्यपवादः, पररूपसन्धिनिपातनम् ]

## [१२८] समुद्रस्येमँस्त्वेमँ[11]-स्त्वोद्म[12]न्निति च ।४।५५।।

एते निपात्यन्ते ।

---

१. 'म् आ' न. घ.
२. सन्वेतत् ज. ग; —सम्वेतत् ख.
३. 'एहि' ख. ग. ज. क.
४. —द् क.
५. र्घोका क. र्घेका. ग.
६. च. न. ग.
७. च. न. घ.
८. द्य. घ.
९. एकारैकारयोः न. घ.
१०. प्रो क. मौ. घ.
११. स्त्वेमें न. घ. ग.
१२. द्य. घ.

'अन्यथा प्राप्तस्य अन्यथोच्चारणं निपातनम् ।' [—परिभाषा]

अपाम्पृष्ठे[1] समु द्रस्येमंन् (सं० १३।१७ पद १३।१५) ।

अपा[2]न्त्वेमंन् (सं० १३।५३ पद १३।४८) ।

अपान्त्वोद्म'न्त्सा[3]दयामि (सं० १३।५३ पद १३।४८) ।

[ शास्त्रीयपरिभाषासु कालपरिभाषा ]

**[१२९] ह्यन्तराः कालाः ।३।५।।**

'हेः[4]' (शु० प्रा० ४।११ ज्यो० ×, ४।१२४ ज्यो० ×) पूर्वा विधयः **पूर्वकालाः** पराः[5] **परकालाः** स्युः ।

[ कालसिद्धिपरिभाषा शास्त्रीया ]

**[१३०] न परकालः[6] पूर्वकाले पुनः ।३।४।।**

जातः परकालो विधिः पूर्वकाले विधौ प्राप्ते सति असिद्धः स्यात् ।

तऽ इह श्रु[7]वन्तु (सं० १९।५७ पद० १९।५५) ।

पादाऽ उच्येते (सं० ३१।१० पद ३१।१०) ।

अराध्या एदिधुषुं पुतिम् (सं० ३०।९ पद ३०।७) ।

रात्र्या[8] ऋक्षं÷[9] (सं० २४।३६ पद २४।३६) ।

तऽ आगमन्तु (सं० १९।५७ पद १९।५५)—अत्र 'यवयोः पदान्तयोः' (शु० प्रा० ४।१२७ ज्यो० १२०) इत्यस्य 'हेः' (शु० प्रा० ४।१२४ ज्यो० ×) परकालत्वात् तस्मि[10]ञ्जाते पूर्वकालं यथायथं प्राप्तं सन्धिकार्यं (ज्यो० १२४ शु०प्रा० ४।५२) न भवति

[ ह्रस्वसन्ध्यपवादभूतो वृद्धिसन्धिः ]

**[१३१] आरमृकारोऽपृक्तात् ।२।५८।।**

---

१. ष्ठे ज.
२. पां त्वे ज.
३. न्सा क. घ.
४. हेः नास्ति घ.
५. पराः न. क.
६. लाः क. घ.
७. स्रु घ. क. श्व ज.
८. ध्या घ.
९. ऋक्षः स्थाने ऋतुः ज.
१०. तस्मिन् न. ख.

अपृक्तात् पर ऋकारः पूर्वश्च एकम् **आरम्** आपद्यते। 'कण्ठ्य ऋकार' (शु० प्रा० ४।५० ज्यो० १२२) इत्यस्यापवादः।

**यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः।** [—परिभाषा] स्वपुनमार्त्त्यं' (सं० ३०।१७ पद ३०।१५)।

## ❀ पूर्वरूपसन्धिप्रकरणम् ❀

**[ उत्सर्गसूत्रम् ]**

### [१३२] एदोद्भ्यां पूर्वमकारः ।४।६१।।

एदोद्भ्यां परो[1] अकारः पूर्वश्च एकम् **एकारम् ओकारं** वापद्यते। एतत्प्रकरणे (शु० प्रा० ४।६१—८०, ज्यो० १३८-१५३) यानि विसर्गान्तानि पदानि तेषां 'सर्वो अ[2]कार ओकारम्' (शु० प्रा० ४।४३ ज्यो० २३०) इत्यनुवर्तमाने 'अकारे च[3]' (शु० प्रा० ४।४४ ज्यो० २३१) इत्यनेन[4] ओकारान्तत्वम्।

**[5]कारग्रहणे तत्कालग्रहणम्।** [—परिभाषा]

अग्नयेनी'कवते (सं० २४।१६ पद २४।१६)।

अग्ने'[6]दब्धायोशीतम (सं० २।२० पद २।२०)।

नमोश्वे'भ्यह्ं (सं० १६।२४ पद १६।२४)।

## ❀ प्रकृतिभावप्रकरणम् ❀

### [१३३] प्रकृतिभाव ऋक्षु ।४।८१।।

ऋक्षु = नियमिताक्षरच्छ[7]न्दःसु मन्त्रेषु एदोद्भ्यां परो अकारः **प्रकृत्या भवति।**
'एदोद्भ्याम्' (शु० प्रा० ४।६१ ज्यो० १३२) इत्यस्यापवादः।
गर्भे'[8]अन्तः। (सं० ३१।१९, पद ३१।१९)।
वा[9]यो'ऽअस्मिन् (सं० २७।२८ पद २७।२७)।

---

१. रो + अ = रोऽ ख.
२. अः ख. ज. अकारः घ.
३. च इ नास्ति घ.
४. 'न च' घ
५. इकार घ.
६. ग्ने नास्ति ख. ज. ग.
७. इछ ख. छ ज.
८. र्मे क.
९. त्वा क,

**[१३४] जुषाणश्चानध्वनि ।४।८२।।**

'जुषाण' शब्दौकारः अकारे प्रत्यये[1] **प्रकृत्या** भवति अध्व[2]भिन्ने परे। अनध्वनी[3]ति शाखान्तरविषयम्।

जुषाणोऽप्तुराज्य[4]स्य (सं० ५।३५ पद ५।३५)।

चकारस्यानुक्तसमुच्चयार्थत्वाच्छु[5]क्रः—

वायो शुक्रोऽ[6] अयामि ते (सं० २७।३० पद २७।२९)।

**[१३५] ते चानुदात्तमनुदात्ते ।४।८३।।**

ते इत्येत्पदमनुदात्तं चेदनुदात्ते अकारे परे[7] **प्रकृत्या** भवति[8]।

या तेऽ अग्नेयहंशया (सं० ५।८ पद ५।८)।

अनुदात्तं किम्—ते प्सरसाम् (सं० २४।३७ पद २४।३७)।

**[१३६] हेड-आपो-ऽग्रे[9]गुवो-ऽपाग्ने[10]-धीरासो-देवास-उरो-रक्षा णो-मो-वैश्वनरो-वृषभो-वचः-प्राण[11]-उदानो-अङ्ग-इमा मे-वृष्णो-दशमास्यो-ऽन्ध-आवित्तो-ऽरिष्टो अर्जुनः-प्रत्याश्रावः-स्विष्टो घासे-प्रणीतस्-तेभ्यो नमो अस्तु-दूरे-नो अद्य-यज्ञे-सधस्थे-सो अध्वराये-न्द्रे-हिरण्यपर्णो-द्वारो-देवो-ऽब्दो-रथिभ्यो[12]-महद्भ्यः-स[13]ँसदः ।४।८४।।**

---

१. प्रत्यये क. घ. एव
२. अध्वनि क. घ.
३. मीति ग.
४. श्य भ.
५. त् शु. ग. ज. त् छु. ख.
६. क्रः ज.
७. परे न क. घ.
८. भवति नास्ति ख. ज.
९. ऽग्रे नास्ति ङ. च. छ. आपो अग्रेगुवो क. घ.
१०. 'पाग्ने० इत्यादि अ. ४।८४' इति ज. पूर्णं सूत्रं नास्ति।
११. प्राणः घ.
१२ भ्यो घ.
१३. सँ क. घ.

एतेषां पदानां यथायथमेकारौकारौ[1] अकारे परे प्रकृत्या[2] भवतः। यत्रानेकपदपाठस्तत्र यथोक्ते प्रकृत्या[3] भवतः, अन्यत्र तु अकारमात्रे।

हेडोऽ अवं (सं० २१।३; पद २१।२)।
देवीरापोऽ अपान्नपात् (सं० ६।२७; पद० ६।२५)
अग्रे गु वोऽ अग्रे पु वहं (सं० १।१२; पद० १।१२)।
अपांग्नेऽ अग्निम् (सं० १।१७; पद० १।१७)
धीरासोऽ अनु दिश्यं[4] (सं० १।२८; पद० १।२८)
देवासोऽ अ[5]जुषन्त (सं० ४।१; पद० ४।१)
उरोऽ अन्तरिक्ष (सं० ४।७; पद० ४।७)
रक्षा णोऽ अप्र[6]युच्छन् (सं० ४।१४; पद० ४।१४)
हिꣳसीर्मोऽ अहन्त्वाम् (सं० ४।१५; पद० ४।१५)
वैश्वानरोऽ अदब्धहं (सं० ४।१५; पद० ४।१५)
वृषभोऽ अन्तरिक्षम् (सं० ४।३०; पद० ४।३०)
वचोऽ अपावधीत् (सं० ५।८; पद० ५।८)
प्राणोऽ अङ्गे[7] (सं० ६।२०; पद० ६।१८)
उदानोऽ अङ्गे[8] (सं० ६।२०; पद० ६।१८)
अङ्गेऽ अङ्गे (सं० ६।२०; पद० ६।१८)
इमा मेऽ अग्ने (सं० १७।२; पद० १७।२)
वृ[9]ष्णोऽ अꣳशुभ्याम् (सं० ७।१; पद० ७।१)
दशमास्योऽ अस्र्त् (सं० ८।२८; पद० ८।२३)
अन्धोऽअच्छेतहं (सं० ८।५४; पद० ८।४८)
आवित्तो[10]ऽ अग्निः (सं० १०।९; पद० १०।९)
अरिष्टोऽ अर्जुनहं (सं० १०।२१; पद० १०।१९)
प्रत्याश्रावोऽ अनुरूपहं (सं० १९।२४; पद० १९।२२)
स्विष्टोऽ अग्निः (सं० २१।५८; पद० २१।५४)
घासेऽ अज्राणाम् (सं० २१।४४; पद० २१।४१)

---

१. रो क.
२. त्या भवतः इत्यस्य स्थाने तिभावः ग. त्या भावः ख.
३. प्रकृतिभावः ज.
४. श्या ज.
५. अनु ज.
६. प. घ.
७. 'अङ्गे' द्विरावृत्तम् ख.
८. अङ्गे नास्ति ख.
९. वि ज.
१०. ज्ञो घ.

प्रणी॑तोऽ अ॒ग्निः (सं० १९।१७; पद० १९।१५)

तेभ्यो॒ नमो॑ऽ अस्तु॒ (सं० १५।१५; पद० १५।१५)

दू॒रेऽ अ॑मित्रश्च ग॒णः (सं० १७।८३; पद० १७)

सम्मि॑तासो नोऽ अ॒द्य[1] (सं० १७।८४; पद० १७।७७)

य॒ज्ञेऽ अ॒स्मिन् (सं० १७।८४; पद० १७।७७)

स॒धस्थे॑ऽ अङ्गि॒र॒स्वत् (सं० ११।६१; पद० ११।५८)

सोऽ अ॑ध्व॒राय॒ (सं० ३३।७५; पद० ३३।६६)

इन्द्रे॑ऽ[2] अ॒श्विना॑ (सं० २१।४८; पद० २१।४४)

हि॒र॑ण्यपर्णोऽ अ॒श्विभ्या॒म् (सं० २१।५६; पद० २१।५२)

द्वारो॑ऽ अ॒श्विना॑ (सं० २१।४९; पद० २१।४५)

दे॒वोऽ अ॒ग्निः (सं० २१।५८; पद० २१।५४)

अब्दो॒ऽ अयं॑वोभि॑ः[3] (सं० १२।७४; पद० १२।६५)

रथि॒भ्यो॑ऽ अर॒थेभ्यं॑÷ (सं० १६।२६; पद० १६।२६)

म॒हद्भ्यो॑ऽ अर्भ॒केभ्यं॑÷ (सं० १६।२६; पद० १६।२६)

स॒ꣳसदो॑ऽ अष्ट॒मी (सं० २६।१; पद० २६।१)

[१३७] छन्दो[6] अङ्कुप-मङ्काङ्क-मस्त्रीवयः ।४।८५।।

'छन्द'[5] इत्येतत्पदौकारः एतेषु प्रकृत्या ।

छन्दो॑ऽ अङ्कु॒पम् (सं० १५।४ पद० १५।४)

छन्दो॑ऽ अङ्का॒ङ्कम् (सं० १५।५; पद० १५।५) ।

छन्दो॑[6]ऽ अस्त्री॒[7]वय॒ः (सं० १४।१८; पद० १४।१४) ।

---

१. घ. घ.

२. इन्द्रो खातिरिक्तेपु

३. अवयोभिः ज.

४. 'छन्दो ४।८५' इत्येव ज.

५. सरसेतत्प क.

६. छेदो ज.

७. स्त्री क.

## ❀ प्रकृतिभावापवादात्मकं पूर्वरूपप्रकरणम् ❀

[सू० १३८-१५३]

**[१३८] गाहमानः[1]-शिवो-भरन्तो-द्वेषोभ्यो-जम्भयन्तो-वाजे[2]वाजे वाजजितो[3]-मदन्तः-शोचे-ऽवसे-सुषुवे-ज्योते-सुपर्णो-वीरुधः-सुवीरो-धातवे-सूनवे-द्रूणान[4]-आशवो-वहतः-सङ्क्रन्दनो-बाहवो-ऽयुध्यो-ऽद्रुहः ।४।६४।।**

एतेषामे[5]कारौकाराभ्यां[6] परो अकारः पूर्वश्च एकं पूर्वमापद्यते। 'प्रकृतिभाव ऋक्षु' (शु० प्रा० ४।८१ ज्यो० १३३) इत्यस्याप[7]वादः।

ह्गामानोद्यो[8] वीरः(सं० १७।३८; पद० १७।३६)
अहिंऽ[9]सन्न[9] शिवोतीहि (सं० ३।६१ पद० ३।६०)
भरन्तो'श्वायेव तिष्ठते[9] (सं० ११।७५; पद० ११।७०)
द्वेषो'भ्यो' न्यंकृतेभ्यः[10] (सं० ५।३५; पद० ५।३५)
जम्भयन्तो' हिं वृकम्[9] (सं० ९।१६; पद० ९।१५)
वाजे' वाजे' वत (सं० ९।१८; पद. ९।१७)
वाजजितो' ध्वंनस्कम्भनु व[9]न्तो[11] (सं० ९।१३; पद० ९।१२)
मदन्तो' ग्ने मा ते[12] (सं० ११।७५; पद० ११।७०)
भंद्र[9] शोचे, पू पम्[13] (सं० १२।२६; पद० १२।२३)
अवंसे' ग्निमन्वारंभामहे[9] (सं० ९।२६; पद० ९।२५)
सुषुवे' ग्रे[14] सोम[9]म्[15] (सं० ९।२३; पद० ९।२२)
ज्योते' दिति सरंस्व[9]ति (सं० ८।४३; पद० ८।३७)

---

१. 'नो ४।६४' इत्येव सूत्रसङ्केतः ज. नो घ.
२. वाजे नास्ति क.
३. त. क.
४. नो क.
५. मै ज.
६. का ख.
७. म्प ज.
८. यः, 'वीरः' नास्ति ख.
९. पदमिदं नास्ति ख.
१०. भ्य ज.
११. न्तः ज. क.
१२. ने घ.
१३. थ. घ. य. ज.
१४. ग्ने
१५. इत उत्तरं ज पुस्तके एतत्सूत्रोदाहरणानि न सन्ति 'इत्यादि' इति च लिखितम्

सुपर्णो' सि गरुत्मा'न्' (सं० १२।४; पद० १२।४)
वी'रुधो' स्यै सन्द'त्त' (सं० १२।९४; पद० १२।८५)
सुवीरो' वी'रहा (सं० ४।३७; पद० ४।३७)
सरस्वति' तमि'ह' धातवे' कः (सं० ३८।५; पद० ३८।३)
सूनवे' ग्ने' सूपायनो' भव' (सं० ३।२४; पद० ३।२४)
द्रू'णानो' स्तांसि (सं० १३।९; पद० १३।८)
आशवो' स्तम् (सं० १५।४१; पद० १५।३७)
वहतो' प्रतिधृष्टशवसम् (सं० ८।३५; पद० ८।३०)
सङ्क्रन्दनो' निमिषः (सं० १७।३३; पद० १७।३०)
बाहवो' नाधृष्याः (सं० १७।४६; पद० १७।४३)
अयुध्यो' स्माकम् (सं० १७।३९; पद० १७।३६)
अद्रुहो'' नमीवाऽ इषं ÷' (सं० १२।५०; पद० १२।४३)

**[१३९] वोऽहं, सोऽहं, सोऽस्माकं, तेऽभिगरो, वोऽर्वाची[३] ।४।६५।।**

एतानि पञ्च कृतैकादेशानि निपात्यन्ते ।
विशिं प्रियाणां[४] वो' हम् (सं० ९।४; पद० ९।४)
सो' हं वाजम्[५] (सं० १८।३५; पद० १८।३४)
सो' स्माकं[६] योऽ अस्मान् (सं० १२।१०१; पद० १२।९२)
अनुष्टुप्ते'' भिगरः (सं० ८।४७; पद० ८।४१)
आ वो' र्वाची' सुमतिः (सं० ८।४; पद० ८।३)

**[१४०] येऽन्ना-त्रयोः ।४।६६।।**

ये-शब्दस्य एकारः अन्न-अत्र-सम्बन्धिनि अकारे परे परश्च एकं पूर्वमापद्यते ।
ये' न्नेषु विविध्यन्ति (पद० १६।६१ सं० १६।६२) ।
ये' त्र स्थ पुराणाः (पद० १२।३८ सं० १२।४५) ।

**[१४१] अ[७]विद्या-सम्भूत्योश्च ।४।६७।।**

एतयोश्च ये-शब्दस्य[८] एकारः परश्च एकमेकारमापद्यते ।

१. पदमिदं नास्ति ख.
२. 'वोहं ४ ६५' इत्येव सूत्रसंकेतः ज.
३. चि घ.
४. णि ज.
५. इत उत्तरमेतत्सूत्रोदाहरणानि न सन्ति ज.
६. यः । इत्यधिकम् घ.
७. ज पुस्तके सूत्रस्य 'सू० ४।६७' इति संकेतः
८. शब्दैकारः क. ज.

ये' विंद्यामु पासंते' (पद० ४०।१२ सं० ४०।१२)।

ये संम्भूतिमु पासंते' (पद० ४०।९ सं० ४०।९)।

**[१४२] उ[१]पस्थेऽन्तस्-तेभ्योऽकरम् ।४।६८।।**

एतौ निपात्येते।

यथोपस्थे' न्तरंस्याम् (पद० १२।३४ सं० १२।३९)।

अहं तेभ्यो' ' करं नमं[३] ÷ (पद १६।८ सं० १६।८)।

**[१४३] नमोऽस्त्वसौत्रा[४]मण्याम्[५] ।४।६९।।**

एतन्निपात्यते सौत्रामणी[६]मन्त्रान् वर्जयित्वा।

नमो ' स्तु सुर्पेभ्यः (पद १३।५ सं० १३।६)।

'स्वाद्वीत्वा' (सं० १९।१ पद १९।१) इत्यध्यायत्रयं (१९-२१) सौत्रामणीसंज्ञकम्।

असौत्रा[७]मण्यां किम्-नमो'ऽ अ[८]स्त्वद्य ये[९] (पद० १९।६८ सं० १९।६८)।

**[१४४] विश्वे-ऽग्रे-विशो-रायो-ऽनग्नौ[१०] ।४।७०।।**

एतच्छब्दैकारौकाराभ्यां परो अकारः पूर्वश्च एकं पूर्वमापद्यते अग्नि[११]मन्त्रान् वर्जयित्वा। 'युञ्जान' (सं०११।१ पद ११।१) इत्यष्टाध्यायी (सं० ११-१८ अ०) अग्नि[११]-संज्ञका मन्त्राः[१२] इति।

विश्वे' सुं' घर्मम्[१३] (पद ८।१६ सं० ८।१९)।

अग्रे[१४]' श्वंमयुञ्जन् (पद ९।७ सं० ९।७)।

इन्द्रऽ[१५] इद्विशो' सपत्नाः (पद ७।२४ सं० ७।२५)

व्विदंधातु [१५] रायो' नुंमार्ष्टु (पद० २।२४ सं० २।२४ ८।१४) अनग्नौ किम्[१६]—

विश्वें'ऽ अद्य मरुतः (पद १८।३० सं० १८।३१)

---

१. एतत्पदं नास्ति ख.
२. सूत्रं न. ज., ४।६८ इत्येव
३. नमः नास्ति ख. ज.
४. त्रा नास्ति ख.
५. सूत्र स्थाने ४।६९ इत्येव
६. त्रामणि ज.
७. त्रा नास्ति ख.
८. अ नास्ति ज. घ.
९. एतत्पदं नास्ति ख.
१०. सूत्रस्थाने ४।७० ज.
११. अग्नि घ.
१२. मन्त्राः इति नास्ति घ. क. इति नास्ति ख. ज.
१३. पदमिदं नास्ति ख.
१४. अग्ने ज.
१५. पदमिदं नास्ति ख.
१६. एतदुत्तरं मयि गृह्णाम्यग्रे अग्निम् इत्यग्रिममुदाहरणम् क. ग. घ. ज.

मयि[1]गृह्णाम्यग्रे'ऽ अग्निम् (पद १३।१ सं० १३।१)
भवा[2] पायु[2]र्विशोऽ अस्याः (पद १३।१० सं० १३।११)
अस्मे[3] रायो'ऽ अ[4]मर्त्यं (पद १२।१०० सं० १२।१०९)

## [१४५] सूर्ये-ऽग्ने-ऽभौ[5] ।४।७१।।

एतच्छब्दसंबन्धी पूर्वः अभिशब्दसंबन्धी उत्तरश्च पूर्वम् **एकम्**[6] आपद्यते।
सूर्यो' भितोप्सीत् (पद १३।२८, सं० १३।३०)
अग्ने' भ्यावर्तिन् (पद १२।७, सं० १२।७)
अभौ किम्—जात[7]श्चक्षो[8]सूर्यो'ऽ अजायत (सं० ३१।१२ पद ३१।१२)।
अच्छा [9]व्वदामसि[10] (सं० १६।४ पद १६।४)।
अग्ने ऽ अच्छा' वदे ह नः[11] (सं० ९।२८ पद ९।२७)।

## [१४६] रिषो-यवसे-पुरुप्रियो[12]-ऽन्नपते-ऽर्णवे[13] ।४।७२।।

एतच्छब्दसंबन्धी पूर्वः परः अकारश्च[14] एकं पूर्वमापद्यते।
मा[15] सु[15] रिषो' म्बं (पद ११।६३ सं० ११।६८)
प्रोथदश्वो[15] न[15] यवसे' विष्यन् (पद १५।५३ सं० १५।६२)
पुरीष्य[15] पुरुप्रि[16]यो' ग्ने (पद ११।६७, सं० ११।७२)
अन्नपते' न्नस्य (पद ११।७८ सं० ११।८३)
अस्मिन्महत्यर्णवे' न्तरिक्षे (पद १६।५५ सं० १६।५५)

## [१४७] व्यपरे च[17] ।४।७३।।

एदोद्भ्यां परो अ[18]कारः पूर्वश्चैकमापद्यते, [19]वकार-यकारपरश्चेत्। 'प्रकृतिभाव

---

१. मयि गृह्णामि नास्ति ख. घ.
२. पदमिदं नास्ति ख.
३. अस्मे स्थाने एषो क. घ. अस्मे नास्ति ख.
४. अ नास्ति ज.
५. सूत्रस्थाने ४।७१ ज.
६. एकम् स्थाने एकारम् घ.
७. पदमिदं नास्ति ख.
८. चक्षोः घ.
९. एतदुदाहरणं नास्ति ग. ज.
१०. पदमिदं नास्ति ख.
११. एतदुदाहरणं ग. ज. एव.
१२. पुरुप्रियो घ. क.
१३. सूत्रस्थाने ४।७२ ज.
१४. च नास्ति क. घ.
१५. पदमिदं नास्ति ख.
१६. पियो ज.
१७. सूत्रस्थाने ४।७३ ज.
१८. अ नास्ति ग. ज. १९. यकार ज.

ऋक्षु'[1] (सू० १३२ शु० प्रा० ४।६२) इत्यस्यापवादः।

अधिंब्रुवन्तु[2] त्' वन्त्वस्मान् (पद १९।५५ सं० १९।५७)
निर्ऋतिे[2] तिग्मतेजो' युस्मयुम्[3] (पद १२।५४ सं० १२।६३)

**[१४८] गवे-मे-मनसो-वाजयन्तः-सोम्यासःपाशिनो विदानो-ऽनृते मूज-वतो[4] वृष्णो-ऽपाको दीदिवस्-त्रयस्त्रिंशे ब्रह्मणो यको रथो विश्वतः पादो वसन्तः[5] ।४।७४।।**

एतेषामेकारौकाराभ्यां परो अकारः पूर्वश्च **एकम् पूर्वम्** आपद्यते।
भेषुजं[6] गवे श्वाय (पद ३।५८, सं० ३।५९)
व्वि शो[6] मे' ङ्गानि सर्वतः[7] ÷ (पद २०।७, सं० २०।८)
मनसो' सि व्विलायुकः[8] (पद २०।२७, सं० २०।३४)
वाजयन्तो' श्यामं[8] (पद १८।६७, सं० १८।७४)
पितरं ÷ सोम्यासो'' ग्निष्वात्ताः[9] (पद १९।५६ सं० १९।५८)
पितरं ÷ सोम्यासो'' तूहिरे[10] (पद १९।४९, सं० १९।५१)
न पाशिनो[11]' ति (पद २०।४६ सं० २०।५३)
संविदानो' नु द्यावापृथिवी (पद १९।५२, सं० १९।५४)
अश्रद्धा[6]मनृते' दधात् (पद १९।७५, सं० १९।७७)
परो[8] मूजवतो' तीहि (पद ३।६०, सं० ३।६१)
शुष्म[6]मिन्द्रा'य[6] वृष्णे'' पाको' चिंष्टुः[12] (पद २०।३७ सं० २०।४४)
स[6] नं ÷ [6] पावक[6] दीदिवो'ग्ने' (पद १७।८ सं० १७।९)
देवा[6]स्त्रंयस्त्रिंशे' मृताहं (पद २१।२५, सं० २१।२८)
अस्मै[6] ब्रह्मणे'स्मै क्षत्राया[6] (पद ७।२०, सं० ७।२१)
यको' सकौ शकुन्तकः[6] (पद २३।२१, सं० २३।२३)

---

१. ऋक्षु नास्ति ज. घ. क.
२. पदमिदं नास्ति ख.
३. स्मायम् क.
४. वते वृष्णो क.
५. सूत्रस्थाने 'गवे मे ४।७४' ज.
६. पदमिदं नास्ति ख.
७. सर्वतः इति ग. ज. एव
८. एतदनन्तरम् इत्यादि० इत्येव नोदाहरणानि ज.
९. खातिरिक्तेषु एतदुदाहरणम्
१०. एतदुदाहरणं ख एव
११. नेति घ.
१२. विष्णुः घ. पदमिदं नास्ति ख.

परि'[१] ते[१] दू डभो[१] रथो' स्मान् (पद ३।३६, सं० ३।३६)

आ नो' भद्राः क्रतवो यन्तु[२] विश्वतो' दब्धासः (पद २५।१२, सं० २५।१४)

पादो''स्य विश्वा[१]' (पद ३१।३, सं० ३१।३)

वसन्तो' स्यासीत्[१] (पद ३१।१४, सं० ३१।१४)

[१४९] अवोऽस्त्व-ग्रे गृहपतेऽभि-सत्वानोऽहं-नोऽजस्रया-विमानोऽजस्रः सुतेऽशिवना-नमोऽग्नये-तेऽग्रं-तेऽग्रेवृक्षस्य-प्रथमोऽन्तस्तेऽन्येन[३] ।४।७५।।

एतानि एकादश कृतैकादेशानि निपात्यन्ते[४] ।

महि[५]' त्रीणामवो'' स्तु[६] (पद ३।३१, सं० ३।३१)

अग्ने' गृहपते' भिद्युम्नम् (पद ३।३९, सं० ३।३९)

अंस्य सत्व'नो' हम् (पद १६।८ सं० १६।८)

पुरो नो' जस्रया (पद १७।७०, सं० १७।७६)

विमानो' जस्रो घर्मः (पद १८।६०, सं० १८।६६)

भिषजा सु ते' शिवना (पद २०।४९, सं० २०।५६)

च नोवतु[७] नमो' ग्नये' (पद २३।११, सं० २३।१३)

पिता च ते' ग्र'म् (पद २३।२२, सं० २३।२४)

ते' ग्रे' वृक्षस्य क्रीड'तः (पद २३।२३, सं० २३।२५)

वृक्षस्येति किम्[९]—

तेऽ[१०]अग्रेश्वंमयुञ्जन् (पद ९।७, सं० ९।७)

स्वयुम्भूः प्रथमो' न्तः (पद २३।५६ सं० २३।६३)

महिमा ते' न्येन (पद २३।१३, सं० २३।१५)

---

१. पदमिदं नास्ति ख.

२. आ नो''''यन्तु नास्ति ख.

३. सूत्रस्थाने ४.७५ इत्येव ज.

४. निपात्यते ज.

५. मही ज.

६. 'इत्यादि'। इत उत्तरमुदाहरणाभावः ज.

७. वक्तु क.

८. पदमिदं नास्ति क.

९. वृक्ष''''किम् इत्यस्ति परमुदाहरणाभावः ज.

१०. ते ग्रेश्व क. घ.

[१५०] पणयो-जहीमो-ऽम्बिके[1] ।४।७६।।

एतेषामेकारौकाराभ्यां परो अकारः पूर्वश्च एकं पूर्वम् आपद्यते ।
पणयो' सु॑म्ना देवपीयवं॑÷[2] (पद ३५।१ सं० ३५।१)
अत्रा॑[2] जहीमो' शिवा[3] (पद ३५।९ सं० ३५।१०)
अम्बिके' म्वालिके (पद २३।१६ सं० २३।१८)

[१५१] नोऽनुमोऽदुग्धा इव, प्रचेतसोऽश्वा[4]न्, नरोऽस्माकं, वृषपाणयोऽश्वाः, प्रदिशोऽनू-दितेऽनागा, अन्धसोऽच्चर्ा, पनस्य तेऽद्धा, यज्ञियेभ्यो[5]ऽमृतत्वं, विपश्चितोऽभि, जनोऽनमीव, आय[6]वोऽनु, नोऽद्य, देशेऽभवद्, वयुनेऽजनिष्ट, विद्मनापसोऽजायन्त, पूर्व्यासोऽरेणवो, नोऽश्मा, नोऽदिति-र्नोऽहिः[7] ।४।७७।।

एतानि विंशतिरूपाणि कृतैकादेशानि निपात्यन्ते ।
अभि त्वा'[8] शूर नोनु मो' दु॑ग्धा इव[9] (पद २७।३५ सं० २७।३५)
अश्वाजनि प्रचे॑तसो' श्वा॑न् (पद २९।५० सं० २९।५०)
नो[10] नरो' स्माकमिन्द्र (पद २९।५७, सं० २९।५७)
वृषपाणयो' श्वा रथे॑भिः (पद २९।४४, सं० २९।४४)
प्रदिशो' नु सर्वाः (पद ३२।४, सं० ३२।४)
यदद्य सूर[11] उदिते' ना॑गाः (पद ३३।१७ सं० ३३।२०)
अन्धसो' च्चर्ा[12] विश्वानराय (पद ३३।२० सं० ३३।२३)
पंनस्य[13] ते' द्धा (पद ३३।३५ सं० ३३।३९)

---

१. सूत्र स्थाने ४।७६ इत्येव ज.
२. पदमिदं नास्ति ख.
३. शिवाः ज.
४. स्मान् क.
५. स्वो घ.
६. आ युवो क. घ.
७. नो नुमो दुग्धा० ४।७७ इत्येव ज.
८. वा घ.
९. इत उत्तरम्—'इत्यादि' लिखित्वा नोदाहरणानि ज.
१०. पदमिदं नास्ति ख.
११. यदद्य शूर नास्ति ख. शूर घ.
१२. अन्धसोर्च्च इत्येव ख.
१३. स्प क.

यज्ञियेभ्यो मृतत्वम् (पद ३३।४९ सं० ३३।५४)
विपश्चितो भि स्तोमैः (पद ३३।७२ सं० ३३।८१)
सर्व[1] इ[1]ज्जनो नमीवः (पद ३३।७६ सं० ३३।८६)
आयवो नुष्टुवन्ति[2] (पद ३३।८७ सं० ३३।९७)
अनु नो द्य (पद ३४।९ सं० ३४।९)
सो[3] दे शो भवत्सुरित् (पद ३४।११ सं० ३४।११)
इडाया[3]स्पुत्रो[3] वयुने जनिष्ट (पद ३४।१४ सं० ३४।१४)
विद्मनापसो जायन्त (पद ३४।१२ सं० ३४।१२)
पूर्व्यासो रेणवं सुकृताः[3] (पद ३४।२७ सं० ३४।२७)
नो श्मा भवतु[4] न[5]ः (पद २९।४९ सं० २९।४९)
अधि[5] ब्रवीतु[5] नो दिति शर्म (पद २९।४९ सं० २९।४९)
उत नो हिर्बुध्न्य ÷ (पद ३४।५२ सं० ३४।५३)

## [१५२] ब्राह्मणः ।४।७८।।

एतत्सम्बन्धिन ओकारात् परः अकारः पूर्वश्च एकं पूर्वम् आपद्यते ।
ब्राह्मणो स्य मुखम्[5] (पद ३१।११ सं० ३१।११)

## [१५३] यजुष्षु च ।४।७९।।

अनियताक्षरेषु मन्त्रेषु अविशेषेण एकारौकाराभ्यां[6] परः अ[7]कारः पूर्वश्च एकमेकारम् ओकारं वापद्यते ।
अग्रेपु वोग्रे (पद १।१२ सं० १।१२)
च मे प्रानः (पद १८।२ सं० १८।२)
चाद्-[8]ऋक्ष्वपि क्वचित्[9]—
य ो सावादित्ये पुरुषः सो सावहम् (पद ४०।१४ सं० ४०।१७)

॥ इति पूर्वरूपप्रकरणम् ॥

---

१. पदमिदं नास्ति ख.
२. क पुस्तके पुनरपि अनुष्टुवन्ति
३. पदमिदं नास्ति ख.
४. न्तु क. घ.
५. पदमिदं नास्ति ख.
६. भ्या ज.
७. परःश्च का ज.
८. चादक्ष्वपि ज.
९. त. घ.

# ❀ प्रकृतिभावप्रकरणम् ❀

## [ १५४ ] का ध्रुवोती सदना[1] होतारा ज्या स्वधा-पृथिवी[2] प्रतिमे-म-सदन्न-श्यामा-कर्मो-र्ध्वमि-यम[3]वस्तादु[4]-ता-स्तिषु।४।८६॥

कादीनि नव पदानि यथासङ्ख्यम् ईमादिषु नवसु परेषु प्रकृत्या भवन्ति।

काऽ ईम्[5] (पद २३।४८ सं० २३।५५)

ध्रु वाऽ अंसदन् (पद २।६ सं० २।६)

ऊतीऽ अश्यामं (पद १८।६७ सं० १८।७४)

सदनाऽ अकर्म् (पद ८।१५ सं० ८।१८)

होताराऽ ऊर्ध्वम् (पद २७।१७ सं० २७।१८)

ज्या[6]ऽ इयम् (पद २९।४० सं० २९।४०)

स्वधाऽ अवस्तात् (पद ३३।६५ सं० ३३।७४)

पृथिवीऽ उत द्यौ?[7] (पद ३३।३८ सं० ३३।४२)

प्रतिमाऽ अस्ति[8] (पद ३२।३ सं० ३२।३)

## [ १५५ ] प्रगृह्यं स्वरे[9] ।४।८७॥

प्रगृह्यसंज्ञकं पदं स्वरे परे प्रकृत्या भवति[10]।

इन्द्राग्नीऽ अपात्[11] (पद ३३।८३ सं० ३३।९३)

इन्द्रवायूऽ इमे (पद ७।८ सं० ७।८)

---

१. सदना द्विरावृत्तं ज.

२. इत उत्तरं ४।८६ इति सूत्रसङ्केतः।

३. म नास्ति क.

४. वस्तायु घ.

५. 'ईमादि नवोदाहरणम्' ज.
अग्रेतनानि उदाहरणानि न सन्ति ज

६. ऽ या घ.

७. पदमिदं नास्ति ख.

८. अ नास्ति घ.

९. सू० ४।८७ इत्येव सूत्रस्थाने।

१०. भवन्ति ज.

११. नातः परं सन्ति सूत्रोदाहरणानि ज.

शिप्रे॑ऽ अवेपयः (पद ८।३४ सं० ८।३९)
अ॒स्मेऽ आ॒रात् (पद २०।४५ सं० २०।५२)
त्वेऽ इष॒[1] ८ (पद १२।९९ सं० १२।१०८)
अवाँऽ अ॒न्य[2] ? (पद २७।३५ सं० २७।३६)
अ॒मीऽ अ॒न्य[3] ? (पद १७।४४ सं० १७।४७)

[ १५६ ] उकारोऽपृक्तोऽस्पर्शात्[4] ।४।८०।।

पूर्वेण प्राप्ते[5] नियमार्थम् । अपृक्त उकारः[6] स्पर्शात् परत्वाभाव एव प्रकृत्या ।
ए॒तु॒वाऽ उऽ अ॒ग्नि[7] (पद १७।९० सं० १७।९७)
अ[8]स्पर्शात् किम्—
तद्वंन्ति॒के[9] (पद ४०।५ सं० ४०।५)
सम्॒वेतद्द॑[10]धामि[11] (पद ८।५५ सं० ८।६१)

[ प्रकृतिभावापवादः ]

[ १५७ ] न रोदसीमे ।४।८८।।

रोदसी इत्येतत् पदं[12] द्विवचनान्तमपि प्रकृत्या न भवति इमे शब्दे परे ।
रोदं॑सी॒मे रा॒ये (पदे २७।२३ सं० २७।२४)

। इति स्वरसन्धिः[13] ।

।। इति प्रकृतिभावप्रकरणम् ।।

---

१. क पुस्तके इतोऽग्रे विशेषः—(त्वे इत्यस्य सुपां सु लुक् इति शे आदेशः । त्वमावेकवचने इति युष्मच्छब्दस्य मपर्यन्तस्य त्वादेशः । अतो गुणेति पररूपे शेषे लोप इति टि लोपः)' ।
२. नैतदुदाहरणं क. ख.
३. एतदुदाहरणं क. ख. एव ।
४. सूत्र स्थाने ४।९० इत्येव ज.
५. प्राप्ते इति ख. ज; एव, अन्यत्र तु—भावे इति ।
६. कार स्प ख;
७. अग्नि घ. अन्ति ज.
८. अ नास्ति ज.
९. तद्वदानीके घ. तं द्वेतिके ज.
१०. द्द नास्ति ज.
११. पदमिदं नास्ति ख.
१२. पदद्वि ज.
१३. इति····न्धिः नास्ति क. ग. घ.

# ❀ उदात्तादिस्वर-सन्धिप्रकरणम् ❀

[अक्षरसंज्ञाविधानम्]

## [१५८] स्वरोऽक्षरम्[1] ।१।९९।।

स्वरोऽक्षरसंज्ञः स्यात् ।

आ (पद १।१ सं० १।१)

उ (पद १।२८ सं० १।२८)

## [१५९] सहाद्यैर्व्यञ्जनैः[2] ।१।१००।।

आद्य[3]भूतैर्व्यञ्जनैः सहितः स्वरश्च अक्षरसंज्ञः स्यात् ।

न (पद १।११ सं० १।११)

द्वे[4] (पद १७।८४ सं० १७।९१)

वै[5] (पद २३।१४ सं० २३।१६)

## [१६०] उत्तरैश्चावसितैः[6] ।१।१०१।।

वर्णानामभावो अवसानम् । तत्रस्थैरुत्तरैर्व्यञ्जनैश्च सहितः स्वरोऽक्षरसंज्ञः स्यात् ।

उत् (पद १।१२ सं० १।१२)

ऊक्[7] (पद ४।१० सं० ४।१०)

तत् (पद १।५ सं० १।५)

[उदात्तसंज्ञा]

## [१६१] उच्चैरुदात्तः ।१।१०८।।

ऊर्ध्वभागे निष्पन्नः[8] स्वरः उदात्तसंज्ञः स्यात् ।

आ या द्यां भास्या[9] पृथिवीम् (पद १५।५२ सं० १५।६३)

---

१. सूत्रस्थाने सू. १।९९ इत्येव ज.
२. सूत्रस्थाने सू० १।१०० इत्येव ज.
३. आदिभूतैः क. ग. घ.
४. द्वे नास्ति ज; द्वै क.
५. वै नास्ति ख.
६. सूत्र स्थाने सू० १।१०१ इत्येव ज.
७. ऊर्क् नास्ति ज. क.
८. निष्पन्नस्वरः ख.
९. भास्या''''वीम् नास्ति ख.

[अनुदात्तसंज्ञा]

[१६२] नीचैरनुदात्तः ।१।१०६।।

अधोभागे निष्पन्नः स्वरोऽ[1]नुदात्तसंज्ञः[2] स्यात् ।

ऋषेऽ[3] आर्षेयऽ ऋषी[4]णान्नपादवृणीत[5] (पद २१।५७ सं० २१।६१)

ब्र॒हि॒[6] (पद ११।१९ सं० ११।१९)

य॒ज॒[7] (पद २९।५३ सं० २९।५३)

[स्वरितसंज्ञा]

[१६३] उभयवान् स्वरितः ।१।११० ।।

ऊर्ध्वाधोभागे[8] निष्पन्नः स्वरः स्वरितसंज्ञः[9] स्यात् ।

स्वः[10] (पद १।११ सं० १।११)

[जात्यस्वरितसंज्ञा)

[१६४] एकपदे नीचपूर्वः सयवो[11] जात्यः[12] ।१।१११।।

एकपदस्थः सयकारे सवकारे[13] वाक्षरे विद्यमानः स्वरितो जात्यसंज्ञः स्यात् । सपूर्वत्वे नीचपूर्वश्चेत्, [14]अपूर्वोऽपि भवति ।

स्वं÷(पद १।११ सं० १।११)

धा॒न्य॑म्[15] (पद १।२० सं० १।२०)

क॒न्या॑ इव (पद १७।९० सं० १७।९७)

त॒न्व॑म्[16] (पद ३।१७ सं० ३।१७)

उक्तं च नारदशिक्षायाम्—

---

१. स्वर उदात्त ज.
२. संज्ञो भवति क. घ.
३. ऋषे ज.
४. ऋषी.....णीत नास्ति ख.
५. अवृणीत नास्ति क. घ.
६. नास्ति ग. घ. ज. क.
७. नास्ति ग. घ. ज क; यजध्वम् ख.
८. ऊर्ध्वभागे क.
९. संज्ञो भवति क. घ.
१०. स्वेः घ.
११. सजवो घ.
१२. सूत्रस्थाने सू १।१११ इत्येव ज.
१३. सवकारे नास्ति क.
१४. केवलोऽपि ज. क. घ.
१५. धान्यस् ज.
१६. नास्ति ग. ज. क.

स-यकारं[1] स-वं वा यद्यक्षरं स्वारितं भवेत् ।
न चोदात्तं पुरस्तस्य जात्यः स्वारः स उच्यते ॥[2]

[अभिनिहिताख्यस्वरितस्वरविधानम्]

## [१६५] तौ चेदुदात्तावनुदात्ते स्वरितौ । ४।६२ ॥

उदात्तौ एकारोका[3]रौ अनुदात्ते अकारे पूर्वभावमापन्नौ स्वरितौ भवतः ।

[अभिनिहितस्वरितसंज्ञा]

## [१६६] एदोद्भ्यामकारो लुगभिनिहितः[4] ।१।११४ ॥

यत्र एदोद्भ्यां परः अकारः अदर्शनं प्राप्तः स स्वरितोऽभिनिहितसंज्ञकः[5] स्यात् ।

ते॒'वन्तु (पद १९।५४ सं० १९।५७)

को॒' सि (पद ७।५ सं० ७।९)

उदात्तावनुदात्ते किम्—

अ॒श्वेभ्यो'श्व[6]पतिभ्यश्च (पद १६।२४ सं० १६।२४)

[अभिनिहितस्वरितापवादः]

## [१६७] न देशेऽभवति । ४।६३ ॥

देश इत्ययमे[7]कारो अभवदित्यस्याकारे लुप्ते स्वरितो न भवति ।

दे॒शेऽभ'वत् (पद ३४।११ सं० ३४।११)

[क्षैप्राख्य-स्वरितस्वरविधानम्]

## [१६८] उदात्तस्यान्तस्थी[8]भावे परमनुदात्तं स्वरितम् । ४।४८ ॥

उदात्तस्येकारस्योकारस्य वा यकारे वकारे[9] वा जाते सति परमनुदात्तं[10] स्वरितं स्यात् ।

---

१. इतोऽग्रे 'इत्यादि' इत्येव श्लोकसङ्केतः ज.
२. ना० शि० २।१।१
३. रोका नास्ति ज. रौ कारौ घ.
४. 'सू० १।११४' इत्येव सूत्रसङ्केतः ज.
५. संज्ञः क.
६. श्वा ख.
७. मोकारो क.
८. स्थो घ.
९. चकारे ज.
१०. त्तस्व ज.

[क्षैप्रस्वरितसंज्ञा]

**[१६९] [1]युवर्णौ य-वौ क्षैप्रः । १।११५ ॥**

यत्र इ-उवर्णौ यथासंङ्ख्यं य-वभावमापन्नौ स स्वरितः क्षैप्रसंज्ञकः स्यात् ।

त्र्यम्बकम् (पद ३।५९ सं० ३।६०)

द्र्वन्नः (पद ११।६५ सं० ११।७०)

[प्रश्लिष्टाख्य-स्वरितस्वरविधानम्]

**[१७०] इवर्णमुभयतो ह्रस्वमुदा[2]त्तपूर्वमनुदात्तपरं स्वरितम् । ४।१३४ ॥**

उदात्त इवर्णो ह्रस्वः पू[3]र्वोऽनुदात्तो ह्रस्व इवर्णः[4] परः यत्रैक्यं प्राप्तस्तदक्षरं स्वरितं स्यात् ।

[प्रश्लिष्टस्वरितसंज्ञा]

**[१७१] इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः[5] । १।११६ ॥**

उभयतो ह्रस्वौ इवर्णौ यत्र स[6] स्वरितः प्रश्लिष्टसंज्ञकः[7] स्यात् ।

स्रुचीव (पद २०।७० सं० २०।७९)

अभीन्धताम् (पद ११।५८ सं० ११।६१)

उभयतो ह्रस्वं किम्—

वि हीमिद्धः[8] (पद १२।६ सं० १२।६)

**[१७२] वीक्षितायेति च ।४।१३५ ॥**

परस्य दीर्घत्वान्निपातनम् । अयं च सन्धिः प्रश्लिष्टसंज्ञः स्वरितः स्यात् ।

वीक्षिताय स्वाहा (पद २२।८ सं० २२।८)

॥ इति स्वतन्त्रस्वरितप्रकरणम् ॥

---

१. इ-उ वर्णौ ज. ग. क. घ.

२. घात्त ज.

३. पूर्वेऽनु घ.

४. वर्णपरः ख. ग. ज.

५. सू० १।११६ इति सूत्रसङ्केतः ज.

६. स नास्ति ज.

७. एज्ञकः ज.

८. भित्वः ज.

# ❃ अथ सामान्यस्वरितप्रकरणम् ❃

[सामान्यस्वरितविधानम्]

## [१७३] उदात्ताच्चानुदात्तं[1] स्वरितम् ।४।१३६ ।।

उदात्तात् परमनुदात्तमक्षरं स्वरितं स्यात् । अयं च त्रिविधः[2]—तैरोव्यञ्जनः, तैरोविरामः, पादवृत्तश्चेति । पूर्वोक्तानां चतुर्णां लक्षणस्योक्तत्वाद् (ज्यो० १६४-१७२, शु० प्रा० १।१११-११६) एत[3] एव परिशिष्टाः[4] तेषां लक्षणानि क्रमेणाह—

[तैरोव्यञ्जनसंज्ञा]

## [१७४] स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः[5] । १।११७ ।।

स्वरः[6] व्यञ्जनयुतः स्वरितस्तैरोव्यञ्जनसंज्ञकः स्यात् ।

तिष्ठं । रथंम् । अधिं ।[7] (पद १०।२२ सं० १०।२२)

इषे त्वा' ([8]पद १।२२ सं० १।२२)

ऊर्ज्जे त्वा'[9] (पद १४।२२ सं० १४।२२)

[तैरोविरामसंज्ञा]

## [१७५] उदवग्रहस्तैरोविरामः[10] । १।११८ ।।

'समासेऽवग्रहो ह्रस्वसमकाल' इति वक्ष्यते (ज्यो० ४६७ शु० प्रा० ५।१) । तद्योगाद्[11] उदात्तात्[12] परः स्वरितस् तैरोविरामसंज्ञकः स्यात्[13] ।

विश्वधा'ऽ[14] (पद १।२ सं० १।२)

बाहुभ्यांम् (पद १।१० सं० १।१०)

---

१. त्ता चानु घ. ज.
२. विविधः घ.
३. त्वादेव इति ज.
४. शिष्टाः ज.
५. सू० १।११७ इत्येव सूत्रसंकेतः ज.
६. स्वरः नास्ति ज. ग.
७. उदाहरणमिदं ख एव
८. उदाहरणमिदं नास्ति ख.
९. इत उत्तरं 'वीक्षितायेति च ···(इत्यारभ्य) ऊर्जे त्वा (एतावत्) पर्यन्तं पुनरावृत्तः पाठः घ.
१०. सू० १।११८ इति सूत्रसंकेतः ज.
११. इत उत्तरं अवग्रहयोगात् इति घ. क; योग्याद् ज.
१२. अदात्परः इति ज.
१३. इत उत्तरं पुनः 'उदवग्रह ···संज्ञकः स्यात्' पाठः घ.
१४. विश्वथाः घ.

[पादवृत्तसंज्ञा]

[१७६] विवृत्तिलक्ष[१]णः पादवृत्तः[२] । १।११९ ॥

असंहितस्वरान्तरं विवृत्तिः । उक्तं च याज्ञवल्क्यशिक्षायाम्—

'द्वयोस्तु स्वरयोर्मध्ये[३] सन्धिर्यत्र न दृश्यते ।

विवृत्तिस्तत्र[४] विज्ञेया यऽ ईशेति[५] निदर्शनम् ॥ [२१९ (पृ० ८३)]

तत्र पूर्वस्मादुदात्तात् परः स्वरितः पादवृत्तसंज्ञः स्यात् ।

तेऽ अंस्य (पद २७।१६ सं० २७।१७)

काऽ ईंम् (पद २३।४८ सं० २३।५५)

॥ इति सामान्यस्वरितप्रकरणम् ॥

## ❀ अथ हस्तस्वरप्रकरणम् ❀

[हस्तेन स्वरप्रदर्शनविधानम्]

[१७७] हस्तेन ते[६] । १।१२१ ॥

पूर्वोक्ताः (ज्यो० १६१-१७६ शु० प्रा० १।१०८-११९) उदात्तादयः स्वराः हस्तेन प्रदर्शनीयाः । दक्षिणजानूरुसन्धौ कूर्परं धृत्वा मिलितचतुरङ्गुल[७] उत्तानो हस्तो धार्यः । एतद्विचारस्तु याज्ञवल्क्यशिक्षायां[८] द्रष्टव्यः ।

तेन[९] यथा—उदात्त ऊर्ध्वं,[१०] हस्तेन [११]मूर्ध्दसम्मितेन, अनुदात्ते परे तु वामभ्रू-सम्मितेन । [१२]उक्तं च शिक्षायाम्—

"उदात्तादनुदात्ते तु वामाया भ्रुव आरभेत् ।"[१३]

---

१. उक्षणः घ.
२. सू० १।११९ इति सूत्र स्थाने ज.
३. इत उत्तरम् 'इत्यादि' इत्येव, न श्लोकः ज.
४. तस्य ख.
५. ईमे च क घ.
६. सूत्रस्थाने सू० १।१२१ ज.
७. रंगल ज.
८. याज्ञ० शि० इति ज; या० शि० १।१९-२०
९. तेन नास्ति सर्वत्र
१०. सर्वत्र उर्ध्व इति
११. सर्वत्र मूर्ध इति
१२. उक्तं च''''हृदयसम्मितेन नास्ति क.
१३. या० शि० १।५७ पृ० ४४

अनुदात्तो अधोहस्तेन हस्तेन हृदयसम्मितेन।
स्वरित उभयमध्यम् = कर्णमूलं, तत्सम्मितेन।

उक्तं च **प्रतिज्ञासूत्रे**—

'हृद्यनुदात्तो[1], मूर्द्धन्युदात्तः, श्रुतिमूले स्वरितः' (ज्यो० ५४९-५५१ प्र०प० १।५-७) इति। स्वरित विशेषे हस्तविशेषमाह—

[अर्धन्युब्ज हस्तस्वरविधानम्]

## [१७८] अनुदात्तं चेत् पूर्वं [2]तिर्यङ् निहत्य काण्वस्य[3] ।१।१२३।।

अनुदात्तं[4] पूर्वमक्षरं चेत् **स्वरितस्तिर्यक्** पितृदानवद्ध[5]स्तं कृत्वा **प्रदर्शनीयः**। [6]उदात्तात् परिभूतस्यानुदात्तस्य स्वरितसंज्ञा, तथापि जात्ये[7] अनुदात्तपूर्वत्वम्, (ज्यो० १६४ शु०प्रा० १।१११) त्रयाणामुदात्तपूर्वकत्वात् जात्याभिनिहित-[8]क्षैप्र-प्रश्लिष्टानामयं विशेषः।

धान्यम् (पद० १।२० सं० १।२०)
राजस्वः (पद १०।१ सं० १०।१)
गोलत्तिका ते'प्सरसाम् (पद २४।३७ सं० २४।३७)
श्वात्रो'सि (पद० ५।३१ सं० ५।३१)
देव्येतु[9] (पद० ३३।७९ सं० ३३।८९)
अप्स्वग्ने (पद १२।३१ सं० १२।३६)
दिवीव[10] (पद ६।४ सं० ६।५)

[पूर्णन्युब्जहस्तस्वरविधानम्]

## [१७९] ऋजुं निहत्य प्रणिहन्यत[11] उदात्ते[12] ।१।१२४।।

१. दात्तो....इति स्थाने 'दात्त इत्यादयः' ज.
२. तिर्यङ्नास्ति क.
३. सूत्रस्थाने 'सू० १।१२३' ज.
४. त्तं चे ख; त्त क.
५. त् घ. ज.
६. उदात्तात्....पूर्वत्वम् नास्ति ख. ग. ज.
७. क्षैप्रे इति क. घ.
८. त नास्ति ख.
९. दैव्येतु क. घ. ग.
१०. दिवौव ज.
११. ते क. घ. ज; हन्यते क.
१२. सूत्रस्थाने 'सू १।१२४' ज.

अनु[1]दात्तपूर्वा जात्यादयश्चत्वार उदात्ते परे मनुष्यदानवत्[2] न्युब्जं[3] ह्रस्वं कृत्वा नीचा[4]दप्यधो[5]दर्शनीयाः।

दू त्युमवताम् (पद २।९ सं० २।९)
राजस्वश्चिताना[6] (पद १०।१ सं० १०।१)
अर्णवे॑न्तरिक्षे (पद १६।५५ सं० १६।५५)
प्र॑थमो॑न्तं (पद २३।५६ सं० २३।६३)
युयोध्द्यस्मत्[7] (पद ५।३६ सं० ७।४३,५।३६)
अप्स्वन्तः (पद ९।६ सं० ९।६)
प्रश्लिष्टस्य स्थितोपस्थिते उदाहरणम्[8]—
दिवीवेति दिवि। इव (पद ६।४ सं० ६।५)
अनुदात्तपूर्वाः किम्—
स्वर्ण घर्म्मः (पद १८।४६ सं० १८।५०)
सो॑हं वाजं ऽं नसेयम्[9] (पद १८।३४ सं० १८।३५)

[प्रचयस्वरापवादः]

[१८०] निहितमुदात्तस्वरितपरम् ।।४।१३७।।

स्वरितमक्षरमुदात्ते स्वरिते च परे अनुदात्तं स्यात्।

[तिर्यग्घस्तस्वरितविधानम्]

[१८१] चत्वारस्तिर्यक् स्वरिताः[10] ।१।१२२।।

जात्यादयश्चत्वारः स्वरिताः तिर्यक्[11] = तिर्यग्घ[12]स्तप्रदर्शनीयाः स्युः। 'अनुदात्तं

१. उदात्त इति ख. जातिरिक्तेषु
२. वद् ज. ख.
३. न्यूज्वं ज; ब्जह् क.
४. नीचा अप्य घ.
५. दश ज.
६. तानाम् घ. क.
७. स्मान् क.
८. पदमिदं नास्ति क. ख. ग. ज.
९. पदमिदं नास्ति ख.
१०. सू० १।१२२ इति सूत्रसङ्केतः ज.
११. पदमिदं नास्ति सर्वत्र, अपेक्षितं च.
१२. र्यक् ह, ज. ग. वर्जं.

चेद्' (शु० प्रा० ११२३; ज्यो० १७८) इत्यनेन तिर्यक्त्वे[1] सिद्धे पुनर्विधानम् अनुदात्तत्व-वाधनार्थम्[2]। त[3]स्यापि—'ऋजुं निहत्य' (शु० प्रा० ११२४; ज्यो० १७९) इति वाधकम्।

अत्रायं निर्णयः—तैरोव्यञ्जनादयस्त्रयः स्वरिताः स्वरिते उदात्ते वा परभूते[4] अनुदात्ताः (शु० प्रा० ११३३ ज्यो० १८०)। [यथा—]

धाम्म्ना दृ꣡ꣳहँस्स्व[5] (पद १।२ सं० १।२)।

अꣳ शुभ्याङ्गभँस्तिपूतꣳ (पद ७।१ सं० १।२)।

कऽ ईम्म्पन्थाम् (पद २३।४८ सं० २३।५५)।

येन स्व ÷ (पद ३२।६ सं० ३२।६)।

जनवादिनं व्यृ[6]द्ध्यै (पद ३०।१५ सं० ३०।१७)

जात्यादयश्चत्वारो अनुदात्तपूर्वा [7]उदात्ते परे पूर्वोक्त[8]—(शु० प्रा० ११२४ ज्यो० १७९) वन्न्युब्जं[9] हस्तं कृत्वा दर्शनीयाः। अनुदात्ते स्वरिते वा परे तु तिर्यग्घस्तं कृत्वा—

व्विदत्थ्यꣳ सभेयम् (सं० ३४।२१ पद ३४।२१)

स्वरिते उदात्तपूर्वाः स्वरितपूर्वा वा[10] अनुदात्ताः।

उदात्ते केवला उदात्तपूर्वाः स्वरितपूर्वा वा अनुदात्ताः।

अनुदात्ते परे तु परिशेषात् स्वरिता एव।

अनुदात्तपूर्वाणाम् उदात्तपूर्वाणां च स्वरिते, स्वरितपूर्वाणामुदात्ते, उदात्तपूर्वाणां स्वरितपूर्वाणां च अनुदात्ताः[11]।

तेषां[12] च उदाहरणानि जटायां द्रष्टव्यानि—

स्वर्ण्ण (पद १८।४६ सं० १८।५०)

---

१. क्कत्वे ज.
२. र्थः ज.
३. एतस्य इति ज. वर्जम्.
४. परे इति ख. ज.
५. ह्रस्व घ.
६. व्य ज.
७. पूर्वोदात्ते ख. ज वर्जम्.
८. पूर्वोक्त ज.
९. न्युब्जहस्तं इति जातिरिक्तेषु।
१०. 'स्वरितपूर्वा वा' इति न, ख. ज.
११. त्तः ख; त्ते ज.
१२. 'तेषां' न, ख. ज.

सोहम् (पद १८।३४ सं० १८।३५)
वि[1]स्वं पश्य (पद ७।४१ सं० ७।४५)
उर्वन्तरिक्षम् (पद १।७ सं० १।७)
द्र्वन्नं (पद ११।६५ सं० ११।७७)
त्र्यम्बकम्[2] (पद ३।५९ सं० ५।६०)

[एकश्रुतिविधानम्]

**[१८२] स्वरितात्परमनुदात्तमुदात्तमयम् ।४।१४०।।**

**[१८३] अनेकमपि[3] ।४।१४१।।**

स्वरितात्परमनुदात्तमेकमनेकं वाक्षरंमुदात्तवत् = **एकश्रुत्या** उच्चारणीयं स्यात् । अयमेव '**प्रचय**' इति वैदिकै[4]र्व्यवह्रियते[5] । हस्तं तु नासिकाग्रसम्मितं कृत्वा प्र[6]दर्शनीय[7]म् ।

'प्रचयं नासिकाग्रतः[8] ।' इति याज्ञवल्क्य[9]शिक्षा (१।५६ पृ० ३८) वाक्यात् ।
यज्ञपतिं (पद १।२ सं० १।२)
अद्य[10] ऋष आर्षेय (पद २१।५७ सं० २१।६१)

[प्रचयापवादः]

**[१८४] नोदात्तस्वरितोदयम् ।४।१४२।।**

स्वरितात्[11] परमनुदात्तम् उदात्ते स्वरिते वा परे **प्रचयं न स्यात्** ।
दृꣳह[12]स्व मा (पद १।२ सं० १।२)
आतंनच्मि विष्णो (पद १।४ सं० १।४)
सादन्यं विदथ्यम् (पद ३४।२१ सं० ३४।२१)

---

१. विश्वः घ.
२. इदमुदाहरणं न, ख.
३. ज. पुस्तके एतत्सूत्रं पृथङ् नास्ति । इत आरभ्य ज्यो० १९७ सूत्रपर्यन्तं ख. पुस्तके पत्रानां जीर्णतया शीर्ण. पाठः ।
४. केव्य ज.
५. ह्री ज.
६. प ज.
७. यः ज. ख. घ.
८. नासाग्र ज.
९. ल्क ज.
१०. अघ घ.
११. 'त्' न. ज.
१२. ह्ल घ.

[स्वरितैकादेशविधानम्]

[१८५] स्वरित[1]वान् स्वरितः ।४।१३२।।

स्वरितवानेकीभावः स्वरितः स्यात् ।

अती'हि (पद ३।६० सं० ३।६१)

पु[2]त्थ्ये्व (पद ११।४ सं० ११।५)

[उदात्तैकादेशविधानम्]

[१८६] उदात्तवा[3]नुदात्तः ।४।१३३।।

उदात्तवानेकीभावः उदात्तः स्यात् ।

मान्तरिक्षम् (पद ११।४२ सं० ११।४५)

गृह्णामीन्द्रा'य (पद ७।२२ सं० ७।२३)

अन्नंपतेन्नंस्य (पद ११।७८ सं० ११।८३)

[स्वरितैकादेशो-दात्तैकादेशयोः प्राबल्यविचारः]

'सूनवे' + अग्ने'[4]' (पद ३।२४ सं० ३।२४)

'अ्द्यू त्ये + अवंसे' (पद ३४।२९ सं० ३४।२९)

अत्र सूत्रद्वयस्य (ज्यो० १८५ शु० प्रा० ४।१३२; ज्यो० १८६ शु० प्रा० ४।१३३) प्राप्तौ सत्याम्—'विप्रतिषेध उत्तरं बलवद्' (ज्यो० ९९ शु० प्रा० १।१५९) इत्यनेन उत्तरत्वाद् 'उदात्तवानुदात्तः' (ज्यो० १८६ शु० प्रा० ४।१३३) इत्येव भवति ।

सू नवेग्ने' (सं० ३।२४ पद० ३।२४)

अ्द्यू त्येवंसे (सं० ३४।२९ पद ३४।२९)

।। [5]इति सन्धिस्वराः ।।

---

१. 'त' न. घ.

२. य ज.

३. व ज.

४. 'सूनवे अग्ने'...'सूनवेग्ने' इत्यस्य स्थाने—'सूनवेग्ने । सूनवे अग्ने इत्यत्र अग्निशब्दाकारस्य स्वरितत्वात्, एकदेशस्य स्वरितत्वे प्राप्ते परत्वादुदात्त एव' इति क. घ. पाठः ।

५. अत्र प्रकरणनिर्देशो नास्ति घ.

## ❋ अथ व्यञ्जनसन्धिः ❋

### [ श्चुत्वप्रकरणम् ]

### [ तवर्गविकारविधानम् ]

**[१८७] [1]तकारवर्गश्चकारवर्गे चकारवर्गम् ।४।९५।।**

तकारादयः पञ्च चकारादिपञ्चान्यतमे वर्णे परे[2] चकारादीनापद्यन्ते। अत्र स्थान्यादेशयोर्यथासङ्ख्यम्। निमित्तकार्यिणोस्तु न—'शकारे च' (ज्यो० १८८ शु० प्रा० ४।९७) इत्यस्याप्येतत्सूत्रशेषत्वेन निमित्तानां [3]षट्त्वात्। योगविभागस्तु तावत[4] एव उत्तरसूत्रे (ज्यो० १८८ शु० प्रा० ४।९८) अनुवृत्त्यर्थः।

यच्चा॒हम् (पद ८।१२ सं० ८।१३)

आ॒न्च्छच्छन्दं॑ः (पद १५।५ सं० १५।५)

अनूज्जे॑षुम् (पद २।१५ सं० २।१५)

शत्रू॑ञ्जयतु॒ (पद ५।३७ सं० ५।३७)

**[१८८] [5]शकारे च ।४।९६।।**

शकारे च परे तवर्गश्चवर्गमापद्यते।

आ॒दि॒त्याञ्श्मश्रु॑भिः॑ (पद २५।१ सं० २५।१)

### [ शकारस्य छत्वम् ]

**[१८९] [6]परश्चा[7]स्पर्शपरश्छम् ।४।९७।।**

तवर्गात् परः शकार[8]श्छकारमापद्यते स्पर्शपरो न चेत्, चात्—पूर्वश्च वर्गम्।

यच्छू॒द्रे[9] (पद २०।१४ सं० २०।१७)

कू॒ष्माञ्छकपि॒ण्डैः॑ (पद २५।७ सं० २५।७)

[10]अस्पर्शपरः किम्—पूर्वसूत्रोक्तमुदाहरणम्।

---

१. ज. ४।९५ इति सूत्रस्थाने

२. च इत्यधिकं ज.

३. पदत्वात् ज.

४. वदेव ज.

५. सूत्रस्थाने ४।९७ अङ्काः ज.

६. सूत्रस्थाने ४।९७ ज.

७. स्या घ.

८. र नास्ति ख,

९. यश्छू ज.

१०. अ नास्ति घ.

# ❀ अथ नकारव्यञ्जनसन्धिप्रकरणम् ❀

[ नकारविकारप्रकरणम् ]

## [ १९० ] नुः ।३।१३४॥

अधिकारोऽयम् (ज्यो० १९०–२०५, शु० प्रा० ३।१३३—३।१५१)।

[ उपधानुनासिकप्रकरणम् ]

## [१९१] अनुनासिकमुपधा ।३।१३१॥

अयमपि (ज्यो० १९१—१९८, शु० प्रा० ३।१३०—१४३)।

[ सानुनासिकशत्वविधानम् ]

## [ १९२ ] [1]चच्छयोः शम् ।३।१३५॥

चकारे छकारे च परे नकारः शकारमापद्यते, उपधा चा[2]नुनासिकम्।

[3]ताँश्चक्रे (पद ३१।६ सं० ३१।६)

जटायाम्—[3]अ॒ँवँश्छ॒न्त्स॒ (पद २९।१५ सं० २९।१५)

[ सानुनासिकसत्वविधानम् ]

## [१९३] त-थयोः सम् ।३।१३६॥

तकारे थकारे च परे नकारः सकारमापद्यते, उपधा चानुनासिकम्।

अश्[4]मँस्ते॒ (पद १७।१ सं० १७।१)

पशूँस्तान् (पद ३१।६ सं० ३१।६)

[ नकारलोपविधानम् ]

## [१९४] दधन्वान्-स्ववान् यकारे लोपम् ।३।१३७॥

अनयो[5]र्नकारो यकारे परे[6] लोपमापद्यते। नात्रा[7]नुनासिकोपधा। उक्तं च वसिष्ठशिक्षायाम्—

स्वराणामनुनासिक्यं[8] प्रतिजानन्ति सर्वदा।
वर्जयित्वा तमाकारं यत्र लोपो विधीयते॥

---

१. चछयोः ज. घ.

२. चा नास्ति ख. घ.

३. अर्धचन्द्राकारविरहितो बिन्दुमात्रलेखः ज.

४. अश्मँस्ते ज.

५. योन ज.

६. परे नास्ति ज.

७. ज्ञा घ.

८. क्यमित्यादि ज.
नास्ति पदत्रयम्

दुधुन्वा ष? [1] (पद १९।२ सं० १९।२)।
स्ववा [2] यातु (पद ३४।२६ सं० ३४।२६)।

**[१६५] रयिवृधे च ।३।१३८॥**

रयिवृधे [3] परे नकारो [4] लोपमापद्यते।
पीवो अन्ना रयिवृधः (पद २७।२२ सं० २७।२३)।

**[ नकारस्य विसर्जनीयविधानम् ]**

**[१६६] नन् पकारे विसर्जनीयम् ।३।१४१॥**

नृन् इत्ययं नकारः पकारे परे विसर्जनीयमापद्यते, अनुनासिका चोपधा।
[5] नृः पाहि (पद १३।४७ सं० १३।५२)।

**[नकारस्य रेफविधानम् ]**

**[१९७] शत्रून्-परिधीन्-क्रतून्-वनस्पतीन् स्वरे रेफम् ।३।१४२॥**

एतेषां नकारः स्वरे परे रेफमापद्यते, अनुनासिका चोपधा।
शत्रूँ रपु (पद ७।३५ सं० ७।३७)।
परिधीँ रपोर्णु [6] (पद १९।५१ सं० १९।५३)
क्रतूँ रनु (पद १९।३८ सं० १९।४०)।
वनस्पतीँ रनु (पद १३।६ सं० १३।७)।

**[ नकारस्य यकारविधानम् ]**

**[१९८] आ [7] कारोपधो यकारम् ।३।१४३॥**

आ [8] कारोपधो नकारो यकारमापद्यते स्वरे परे, अ [9] नुनासिका [10] चोपधा।
याँऽऽ आवह? (पद ८।१६ सं० ८।१९)।

---

१. नः ज.
२. स्वं वा घ.
३. धे छे परे ज.
४. रः ज.
५. 'नृँः'....इत्यारम्भ 'चोपधा' इत्यन्तं पाठो नास्ति क.
६. ज्यो० १८३ सूत्रमारभ्य एतावत्पर्यन्तं शीर्णः पाठः ख.। क पुस्तके इत ऊत्तरं— 'तृतीयाध्यायस्थेन शत्रूनित्यादिकेन सूत्रेण रेफविधानम्।' इत्यधिकः पाठः। स च तत्र 'क' पुस्तके शत्रूनित्यादि (ज्यो० १९७) सूत्रानुल्लेखाद्युज्यत एव।
७. सूत्रस्थाने ३।१४३ अङ्काः ज.
८. अ ज.
९. आ ख.
१०. कं ज. घ.

अत्र 'यवयोः' (ज्यो० १२० शु० प्रा० ४।१२७) इत्यनेन लोपेऽपि 'न परकालः' (ज्यो० १३० शु० प्रा० ३।४) इत्यनेन तस्या[1]सिद्धत्त्वा[2]त् प्रकरणान्तरस्थत्वाच्च अनुनासिकवर्जनं न भवति ।

[ नकारविकारापवादप्रकरणम् ]

## [१९९] [3]न तमे ।३।१४४।।

नकारस्तमे परे **विकारं नापद्यते** । एतदारभ्य सूत्रत्रयं (ज्यो० १९९-२०१ शु० प्रा० ३।१४४-१४६) 'तथयोः' (ज्यो० १९३ शु० प्रा० ३।८) इत्यस्य निषेधकम् ।

मदिन्त॑मानाम् (पद ८।४२ सं० ८।४८) ।

## [२००] [4]निर्जगन्वान् तमसि ।३।१४५।।

अयं [5]नकारस्तमसि परे[6] **न विकारमापद्यते** ।

निर्जगन्वान्तम॑सः (पद १२।१३ सं० १२।१३) ।

## [२०१] [7]धामञ्-छत्रूँश्-चिकित्वान्त्वं-पूषन्-नर्व्वन्निति[8] च ।३।१४६।।

एते पञ्च नकारा **न विकारमापद्यन्ते**[9] ।

धाम॑न्ते[10] विश्व॒म्[11] (पद १७।९२ सं० १७।९९) ।

शत्रू॑न्ताढि विमृध॑÷[12] (पद १८।६४ सं० १८।७१) ।

महश्चिकि॒त्वान्त्वम् (पद २९।२५ सं० २९।२५)[13] ।

चिकित्वान्त्वमिति द्विपदम् । त्वमिति किम्—

चि॒कि॒त्वाँस्तस्मै॑ (पद ७।१४ सं० ७।१५) ।

[14]पतयि॒ष्ण्वर्व॒न्त्वं चि॒त्तम्[15] (पद २९।२२ सं० २९।२२) ।

---

१. स्य ख.
२. त्वात्.....रस्थ अयं पाठो नास्ति क.
३. सूत्रस्थाने ३।१४४ इत्यङ्काः ज.
४. सूत्रस्थाने ३।१४५ इत्यङ्काः ज.
५. निकारः घ.
६. पदे ख.
७. सूत्रस्थाने ३।१४६ इत्यङ्काः ज.
८. निति ख.
९. घते ख. ज.
१०. मन्तो घ.
११. विश्वम् नास्ति ख.
१२. विमृधः नास्ति ख.
१३. अस्मद्दृत्तमावश्यकं चैतदुदाहरणं सर्वत्र नास्ति ।
१४. यत्त इष्ण्वर्व घ. ज. पतयिष्णु नास्ति ख.
१५. चित्तं नास्ति ज.

**[२०२] [1]अश्वादौ चाध्याये ।३।१४७।।**

अत्र 'आकारोपधः' (ज्यो० १९८ शु० प्रा० ३।१४३) ।
'स्वरे' (ज्यो० १९७ शु० प्रा० ३।१४२) इति चानुवर्तते ।
मध्ये (ज्यो० १९९-२०१ शु० प्रा० ३।१४४-१४६) त्वसंभवान्न ।

आ[2]कारोपधो नकारः स्वरे परे न विकारमापद्यते 'अश्वस्तूपर' इत्यध्याये (शु० सं० २४ अ०) ।

ऋश्या[3]नालंभते (पद २४।२७ सं० २४।२७) ।
चाषांनुश्विभ्यांम् (पद २४।२३ सं० २४।२३) ।

एतदारभ्य सूत्रत्रयम् (ज्यो० २०२-२०४ शु० प्रा० ३।१४७-१४९) 'आकारोपधः[4] (ज्यो० १९८ शु० प्रा० ३।१४३) इत्यस्यापवादः । स्वरे किम्—

गवयाँस्त्वष्ट्रे[5] (पद २४।२८ सं० २४।२८) ।

**[२०३] [6]मनुष्याँस्ताँल्लोकानमित्रानुदि ।३।१४८।।**

एतच्छब्दसम्बन्धी नकारो न विकारमापद्यते उदि परे ।
द्विपदो[7] मनुष्यानुद[8]जयताम् (पद ९।३० सं० ९।३१)
तानु[9]ज्जेषम् (पद ९।३० सं० ९।३१)
त्रीँल्लोकानुद[10]जयत्[11] (पद ९।३० सं० ९।३१)
अमित्रानुन्न[12]यामि (पद ११।७७ सं० ११।८२) ।

**[२०४] [13]आप्नोतीत्योश्च ।३।१४९।।**

आप्नौतौ इतौ च [14]आकारोपधो नकारो न विकारमापद्यते ।

---

१. सूत्रस्थाने ३।१४७ इत्यङ्काः ज.
२. अकारो ज.
३. ऋश्या ज.
४. पद्यः घ.
५. त्वष्टे ज.
६. सूत्रस्थाने ३।१४८ इत्यङ्काः ज.
७. मनुष्यानुत् इत्येव ख.
८. नुदा ज.
९. तानुत् इत्येव ख.
१०. लोकानुत् इत्येव ख.
११. नुदजयताम् घ.
१२. अमित्रानुत् इत्येव ख.
१३. सूत्रस्थाने ३।१४९ इत्यङ्काः ज.
१४. 'आप्नो' 'आ' इत्यस्य स्थाने 'एतयोश्चा' इति पाठः ख. ग. ज.

'प्रै षेभि'÷प्रै_षानाप्नोति (पद १९।१७ सं० १९।१९)[1]
अदितिः[2] श्रपयानिति' (पद ११।५६ सं० ११।५९)

[२०५] (१) गृहानैमि—(२) गृहानुपह्वयामहे—(३) वर्च्चस्वानहं—(४) मनुष्यानन्तरिक्ष—(५) मग्निष्वात्तानृतुमतः—(६) पयस्वानग्ने—(७) तानश्विना—(८) पतङ्गानसन्दितः—(९) सपत्नानिन्द्रः—(१०) सपत्नानिन्द्राग्नी—(११) नभस्वानार्द्रदानुः—(१२) विद्वानग्ने—(१३) देवानस्रेधता—(१४) नड्वानाशु—(१५) रथैतानष्टौ—(१६) विरूपानालभते—(१७) एतावानस्या—(१८) युष्मानग्ने—(१९) वायव्यानारण्याः—(२०) प्रविद्वानग्निना—(२१) नड्वानधोरामौ—(२२) शत्रूननुयं—(२३) यातुधानानस्था—(२४) दस्मानरिष्टेभिरिति ।३।१५१।।[3]

एतानि पञ्चविंशति[4] निपात्यन्ते । 'इति' शब्द एवञ्जातीयकान्यो[5]दाहरणप्रदर्शनार्थः । तेन—

अश्वानिव[6] (सं० ३४।६ पद ३४।६)

[7]गृहानैमि मनसा मोदमानः (सं० ३।४१ पद ३।४०)

[8]गृहानुपह्वयामहे (पद ३।४१ सं० ३।४२)

[9]त्वं दे_वेष्वसि वर्चस्वानहम् (पद ८।३३ सं० ८।३८)

द्रविणमष्टु मनु_ष्यानन्तरिक्षम् (पद ८।५४ सं० ८।६०)

अ_ग्नि_ष्वा_त्तानृ_तु_मतं÷(पद० १९।५९ सं० १९।६१)

पयस्वानग्न_ऽ आगमम् (पद २०।१७ सं० २०।२२)

---

१. प्रैषेभिः नास्ति ख.
२. आदितिः नास्ति ख.
३. २०५ सूत्रस्थाने ३।१५१ इत्येव ज.
४. शति नि ख., उदाहरणानि सूत्रे स्थलानि च चतुर्विंशतिरेवेति पञ्चशब्दश्चिन्त्यः ।
५. कान्युदा क.
६. श्वाविव घ.
७. इत आरभ्य एतत्सूत्रोदाहरणानि 'ख' पुस्तके न सन्ति
८. 'इत्यादि' इत्येव, नाग्रेतनान्युदाहरणानि ज.
९. तं क. घ.

तानु॒श्विना॒ सर॑स्वती (पद २११३९ सं॰ २११४२)

जु॒ह्वा पत॒ङ्गानस॑न्दित॒ः (पद १३।९ सं॰ १३।१०)

स्व॒र्गान॒पाम्पतिं॑ (पद १३।२९ सं॰ १३।३१)

स॒पत्न॒ानिन्द्रो॑ मे (पद १७५८ सं॰ १७६३)

स॒पत्नां॑निन्द्राग्नी मे॑ (पद १७५९सं॰ १७६४)

नभ॑स्वान॒र्द्रदा॑नु॑ श॒म्भूः॑ (पद १८४३ सं॰ १८४५)

वि॒द्वान॒ग्नेर॑ग्ने (पद १७६१ सं॰ १७६६)

दे॒वानस्त्रे॑धत॒ा (पद १८६८ सं॰ १८७५)

अ॒न॒ड्वान॒ाशुः॑ सप्ति॒ॱ (पद २२।२० सं॰ २२।२२)

अथै॒ तान॒ष्टौ वि॑रूप॒ानाल॑भते (पद ३०।२० सं॰ ३०।२२)

एतावा॑नस्य[1] (पद ३१।३ सं॰ ३१।३)

आयु॑ष्मानग्ने ह॒विषा॑ (पद ३५।१३ सं॰ ३५।१७)

वा॒य॒व्या॒नार॒ण्याः॑ (पद ३१।६ सं॰ ३१।६)

प्र[2] विद्वानग्निना (का॰ सं॰)

अ॒न॒ड्वान॒धोरा॑मौ (पद २९।५९ सं॰ २९।५९)

शत्रू॒ ननु॒ यं (पद ३३।७१ सं॰ ३३।८०)

र॒क्षसो॑ यातु॒ धान॒ानस्थात्[3] (पद ३४।२६ सं॰ ३४।२६)

अ॒स्मानरि॑ष्टेभिरश्विन॒ा (पद ३४।३० सं॰ ३४।३०)

॥ इति नकारविकारापवादप्रकरणम् ॥

॥ इति नकारव्यञ्जनसन्धिप्रकरणम् ॥

---

१. वास्य घ.

२. इदमुदाहरणं घ. क. दृश्यते परं संहितायामनुपलब्धम् । शाखान्तरीयमित्युव्वटः ।

३. नस्थानात्

## ❀पदान्तीयवर्णबोधप्रकरणम्❀

**[२०६] प्रथमोत्तमाः पदान्तीया अचञौ[1] ।१।८५।।**

चञौ[2] वर्जयित्वा वर्गाणां प्रथमोत्तमा[3] वर्णाः **पदान्तीयाः** स्युः ।

स्वाहा व्वाट् (सं० १८।३८ पद १८।३६)

[4]पुरीतत् (सं० ३९।९ पद ३९।९)

पदेषूदाहरणा[5]नि—ऊक् (पद ४।१० सं० ४।१०)

अनुष्टुप् (पद ८।४१ सं० ८।४७)

वाक् । ते [illegible] (पद ६।१३ सं० ६।१५)

वाट् । ताभ्यं ÷ । (पद १८।३६ सं० १८।३८)

यत् । ते[7] । (पद ६।३१ सं० ६।३३)

अनुष्टुप् । पङ्क्त्या । (पद २३।३१ सं० २३।३३)

अर्वाङ् (पद १५।४२ सं० १५।४६)

वृषण् । वंसू । (पद ११।११ सं० ११।१३)

(पद २०।७३ सं० २०।८२)

—'अवग्रहः पदान्तवत्' (ज्यो० ९७ प्रा० १।१५३) इति पदान्तत्वम् ।

अवर्द्धयन्[8] (पद २८।१८ सं० २८।१८)

तम् (पद १।८ सं० १।८)

**[२०७] विसर्जनीयः[9] ।१।८६।।**

अयं च **पदान्तीयः** स्यात् ।

---

१. 'अच् ञौ' क. ख; सूत्रस्थाने १।८५ इत्येव ज.

२. ञचौ ज.

३. त्तमाः व ख.

४. परी ज.

५. सर्वत्र 'दाहरणे' इत्येव । परमुदाहरणानां बहुत्वाद् द्विवचनमसमञ्जसम् ।

६. इतः परमेतत्सूत्रोदाहरणेषु संहितापाठ एव कादिपुस्तकेषु दृश्यते, परमुदाहरणानि पदपाठादेव ज्ञापयितुं शक्यन्त इति पदपाठ एवास्माभिरुपन्यस्तः ।

७. यज्ञे घ.

८. आदर्शपुस्तकेषु 'अवर्द्धयत्' (पद २८।१२ सं० २८।१२) इत्युदाहरणं दृश्यते, परमुदाहरणानुक्रमबलाद् नकारोदाहरणमभिप्रेतमिति तदुपन्यस्तम् ।

९. सूत्रस्थाने १।८६ इत्येव ज.

कृष्णं[१] ÷ (पद २११, सं० २१९)

कृष्णा[२] बभ्रुनीकाशाः (पद० २४।१८ सं० २४।१८)

॥ इति पदान्तीयवर्णबोधप्रकरणम् ॥

# ❀ अथ संहितायां पदान्तीयवर्णविकारबोधप्रकरणम् ❀

❀ अथ संहितायां पदान्तीयवर्णविकारबोधप्रकरणम् ❀

[वर्गाद्यवर्णविकारः]

## [२०८] स्पर्शोऽपञ्चमः स्वर-धौ तृतीयम् ।४।११६॥

[३]प्रतिवर्गमाद्याः स्वरे धि[४]संज्ञके (ज्यो० ७७ प्रा० १।५३) च परे वर्ग—तृतीयमापद्यन्ते[५] ।

ऋधगित्था[६] (पद० ३३।७७ सं० ३३।८७)

रेडसि (पद० ६।१६ सं० ६।१८)

तदिदास[७] (पद० ३३।७१ सं० ३३।८०)

सङ्क्रमे उदाहरणम्—

अनुष्टुबेवं ÷[८] (पद० १५।५ सं० १५।५)

उग्र्यम्[९] (पद० १७।१, सं० १७।१)

राड्यन्त्री[१०] (पद० १४।१८ सं० १४।२२)

तस्माद्यज्ञात् (पद० ३१।६ सं० ३१।६)

[११]त्रिष्टुब्जगती (पद० २३।३१ सं० २३।३३)

---

१. ज इत्यत्रेदमुदाहरणम् ।
२. कृष्णाः नास्ति ज । कृष्णाः पृथक्पदं ख. तत्पदपाठे स्पष्टम् ।
३. अप्रति ख.
४. घि घ.
५. ते क. घ.
६. गित्थो ख.
७. सु खवर्जम्
८. वेकः क. घ.
९. ऊर्ग्यसि ख. उग्र्यम् घ.
१०. राड्यंची ख.
११. ष्टुव्ज ज,

अपञ्चम[1] इति[2] किम्—
सुप्राङ्ज[3]? (पद २५।२३ सं० २५।२५)।
युङ्ङ्सि[4] (पद १०।२३ सं० १०।२५)।
अस्मिन् यज्ञे (पद १७।८३ सं० १७।९०)।

## [२०९] अ[5]सस्थाने मुदि द्वितीय[6]ः शौनकस्य ।४।१२१।।

अ[7]पञ्चमस्पर्शो भिन्नस्थाने मु[8]त्संज्ञके (ज्यो० ७६ प्रा० १।५२) परे[9] शौनकस्य मते द्वि[10]तीयमापद्यते।[11]

ऋक्सा[12]मयोः (पद ४।९ सं० ४।९)।
बट्[13] सूर्य्य[14] (पद ३३।३६ सं० ३३।४०)।
विरप्शी (पद २०।४२ सं० २०।४९)
असस्थाने किम्—
यज्ञात्सर्वहुतं÷(पद ३१।७ सं० ३१।७)।

## [२१०] [15]पञ्चमे पञ्चमम् ।४।१२२।।

अपञ्चमः[16] स्पर्शः पञ्चमे पञ्चममापद्यते।
वाङ्मात्या (पद १३।५३ सं० १३।५८)।
बण्महान् (पद ३३।३५ सं० ३३।३९)।
यन्मे छिद्रम्[17] (पद० ३६।२ सं० ३६।२)

---

१. ञ्चमं ख.
२. इति नास्ति क. ख. ज.
३. नैतदुदाहरणम् ज. क.
४. एतत्स्थाने 'त्युष्टसि' क.
५. सूत्रस्थाने ४।१२० इत्येव ज.
६. तीयं ख.
७. 'अपं····स्पर्शो' स्थाने 'अयं च अस्य शौ' इति क.
८. षत्सं क.
९. पदे क.
१०. द्वीती ज.
११. अमाध्यन्दिनीयमेतन्मतम्। अतः उदाहरणेषु माध्यन्दिनीय एव पाठः पुस्तकेषु दृश्यते।
१२. ऋक्सोम घ.
१३. बट सू घ.
१४. स्य अधिकं घ. क.
१५. सूत्रस्थाने ४।१२१ इत्येव ज.
१६. ञ्चमस्य ज.
१७. छिद्रं नास्ति ख.

[पदादेर्हस्य पदान्तीयवर्णचतुर्थविधानम्]

## [२११] ह[१]श्च तस्मात् पूर्वचतुर्थम् ।४।१२३॥

अपञ्चमात् परो हकारः पूर्वस्य चतुर्थमापद्यते, चात् पूर्वस्तृतीयम्[२] ।

वाग्घु॒तः॑ (पद० ३९।५ सं० ३९।५)

स॒मसु॑स्रोद्धृ॒द[३]ः (पद० १८।५४ सं० १८।५८)

आवा॑ढ्ढु॒व्या[४]न्ति॑ (पद० १९।६४ सं० १९।६६)

अपञ्चमात् किम्—

जी॒मूता॑न् हृदयौप॒शेन॑ (पद० २५।८ सं० २५।८)

[पदान्तीयवर्णविकारापवादसूत्रम्]

## [२१२] ना[५]न्तःपदे स्वर-पञ्चमा-न्तस्थासु ।४।११८॥

स्वरे पञ्चमेष्वन्त[६]स्थासु च परतो यत् का[७]र्यं विहितं तत् पदमध्ये न भवति ।

परि॑[८] (पद० १।२७ सं० १।२७)

प्या॑यस्व॒[९] (पद १२।१०३ सं० १२।११२)

प्र॑थ॒मम् (पद० ११।१ सं० ११।१)

सु॒प्वा॒ (पद० १।३ सं० १।३)

अत्र पकारस्य[१०] तृतीयो[११] न भवति ।

रु॒क्मः॑ (पद० १२।१ सं० १२।१)

---

१. सूत्रस्थाने ४।१२२ इत्येव ज.

२. तीयः ज.

३. सस्रोत्घृदः ज. स्रोद्हृदः क.

४. वाडाढव्या घ. क. वाढ्ढव्या ज.

५. सूत्रस्थाने ४।११७ इत्येव ज.

६. ष्वन्तः स्था घ.

७. कार्यविहि ज.

८. परिप्रथमम् इति निरवसानमेकमुदाहरणम् क. ज.

९. [सर्वेषु पुस्तकेषु 'प्रथमम्' इत्यनन्तरमेतदुदाहरणं, परं यकारस्य प्रथमान्तस्थत्वादेष क्रम आदृतः ।

१०. कारस्तृ ज.

११. तृतीया घ.

तन्[1]च्मि (पद० १।४ सं० १।४)

आत्मा (पद० ४।१५ सं० ४।१५)

पाप्मने (पद० ३०।३ सं० ३०।५)

अत्र ककारादीनां पञ्चमा (ज्यो० २१० प्रा० ४।१२२) न भवन्ति ।

'अवग्रहः पदान्तवत्' (ज्यो० ९७ प्रा० १।१५३) इत्युक्तत्वाद्[2] 'भरद्वाज्' (पद० १३।५० सं० १३।५५) इत्यत्र तकारस्य पदमध्यस्थत्वा[3]भावात् 'स्प[4]र्शोऽपञ्चम' (ज्यो० २०८ प्रा० ४।११९) इति तृतीयो भवति । चर्चायां तु न, संहिताया (ज्यो० ११६ प्रा० ३।१ अधिकारेण) अभावात् ।

॥ इति संहितायां पदान्तीयवर्णविकारबोधप्रकरणम् ॥

## ❀म–नोर्वर्णयोर्विकारबोधप्रकरणम्❀

### [ मकारस्य अनुस्वारविधानम् ]

### [२१३] अनुस्वार ँ रोष्मसु मकारः ।४।१।।

मकारो रेफे ऊ[5]ष्मसु च परेष्वनुस्वारमापद्यते । अ[6]नुस्वारस्य ँ इत्यादेशः वक्ष्यते (ज्यो० ५६४ प्र० प० ३।१)

स ँ रायः[7] (पद० ३।१८ सं० ३।१९)

पृथिव्या ँ शतेन (पद० १।२६ सं० १।२६)

जटायामुदाहरणम्—षोडश ँ षोडशम्[8] (पद० ९।३३ सं० ९।३४)

भूयास ँ सुगृहपतिः (पद० २।२७ सं० २।२७)

अंक्त्वा[9] ँ हविषा (पद० २।२२ सं० २।२२)

---

१. तनच्मी ज.

२. त्वात् घ.

३. मध्यस्थाभा ख.

४. स्पशो ज.

५. उष्मसु घ. ज.

६. आतु ज.

७. ज. एवैतदुदाहरणम् । इत उत्तरं स ँ सृण्यः (पद० १२।५० सं० १२।६८) इत्युदाहरणं ग घ. परं सृण्यः पदमेकत्र लभ्यते तच्च न सम्पूर्वक इति अशुद्धेः परित्यक्तम् ।

८. षोडशाक्षरेण ख.

९. अक्ता ँ घ.

[नकारस्यापि अनुस्वारविधानम्]

## [२१४] नुश्चान्तः पदेऽरेफे ।४।२।।

न[1]कारश्चान्मकारश्च पदमध्ये स्थितः रेफभिन्नेषु पूर्वोक्तेषु[2] अनुस्वारमापद्यते ।
त्रिꣳशद्धाम्[3] (पद० ३।८ सं० ३।८)
तपूꣳषि (पद० १३।९ सं० १३।१०)
ससुवा[4]ꣳसम् (पद० २।१४ सं० २।१४)
सिꣳही (पद० ५।१० सं० ५।१०)
किꣳशिलायं (पद० १६।४३ सं० १६।४३)
अक्रꣳस्त (पद० २।२५ सं० २।२५)
पुꣳसः (पद० २५।४३ सं० २५।४५)
अꣳहंसः (पद० ४।१० सं० ४।१०)
अरेफे किम्—ताम्रः (पद० १६।६ सं० १६।६)

## [२१५] प्रकृत्या सम्राट्—साम्राज्ये ।४।५।।

एतौ मकारौ प्रकृत्या भवतः[5] ।

[मकारस्य परसवर्णविधानम्]

## [२१६] स्पर्शे परपञ्चमम् ।४।११।।

मकारः[6] स्पर्शे[7] परे[8] परस्य पञ्चममापद्यते ।
हिङ्काराय[9] (पद० २२।७ सं० २२।७)
अहङ्ख[10]नामि (पद० १२।८६ सं० १२।९५)
यामि[11]षुङ्गिरिशन्त (पद० १६।३ सं० १६।३)
तम[12]ङ्घर्म्मं (पद० १७।५१ सं० १७।५५)

---

१. नुकार घ.
२. पूर्वोक्तेषु घ.
३. त्रिꣳशत् इत्येव ख. ज.
४. सूपाꣳसम् घ.
५. भवतः नास्ति ख.
६. कारं ज. कार घ.
७. स्पर्शे ज.
८. परे ख. ज. एव ।
९. नैतदुदाहरणम् ख. ज.
१०. अहं खना ख.
११. याम् नास्ति ख. घ.
१२. तत्यं घर्मे ज.

शञ्च[1] (पद० १८।८ सं० १८।८)
काव्यञ्छ[2]न्दः (पद० १५।४ सं० १५।४)
तञ्जानन् (पद० ३।१४ सं० ३।१४)
सञ्ज्ञानमसि (पद० १२।३९ सं० १२।४६)
कुण्ठेन[3] (पद० २५।२ सं० २५।२)
काण्डा[4]त्काण्डात् (पद० १३।१८ सं० १३।२०)
तन्ते[5] (पद० २।१७ सं० २।१७)
असन्दितः (पद० १३।९ सं० १३।१०)
रथकारन्धैर्य्याय (पद० ३०।४ सं० ३०।६)
प्र तन्नय (पद० १२।२३ सं० १२।२६)
पुण्यम्प्रज्ञेषम्[6] (पद० १२।२० सं० १२।२५)
वीर्य्यम्ब[7]लम् (पद० २०।६६ सं० २०।७३)
आ तम्भज[8] (पद० १२।२४ सं० १२।२७)
सम्मा सृजा[9]मि (पद० १८।३४ सं० १८।३५)
परसवर्णेष[10]त्प्रकृत्या ।

[मकारस्य सानुनासिकान्तस्थापरसवर्णविधानम्]

**[२१७] अ[11]न्तस्थामन्तस्थास्वनुनासिकां परसमा[12]नस्थानाम् ।४।६॥**

मकारोऽन्तस्थासु परासु परेण समानस्थानामनुनासिकामन्तस्थामापद्यते ।
तँय्यज्ञम् (पद० ३१।९ सं० ३१।९)
सँव्वाम्[13] (पद० १२।५० सं० १२।५८)

---

१. सञ्च क. घ.
२. व्यच्छन्दः घ.
३. किण्डेन क. घ.
४. कात्काण्डे ज.
५. तन्म ख; तन्नः ज.
६. ज्ञेषम् नास्ति ख. ज.
७. र्य्यम्बिलम् घ.
८. तं स्म घ.
९. सृजानि घ.
१०. वर्णेषित् घ.
११. सूत्रस्थाने ४।१० इत्येव ज.
१२. परमस्थानाम् क. घ. परसस्थानाम् ङ. च. छ.
१३. इदमुदाहरणं ख. ज. एव

सँव्वंपामि[1] (पद० १।२१ सं० १।२१)
तँल्लोकम्[2] (पद० २०।२० सं० २०।२५)

[ तकारस्य लत्वम् ]

## [२१८] त[3]कारो ले लम् ।४।१२।।

तः ले लकार[4]मापद्यते ।
आसील्लोकम्[5] ।
परिचिल्लोकम् ।

[ सानुनासिको लपरसवर्णः ]

## [२१९] नु[6]श्चानुनासिकम् ।४।१३।।

न[7]कारो ले परे अनुनासिकं लकारमापद्यते ।
अस्मिँ[8]ल्लो[8]के (पद० ३।२१ सं० ३।२१)
त्रीँ[9]ल्लो[9]कान् (पद० ९।३० सं० ९।३१)

[ चकारागमविधानम् ]

## [२२०] स्वरश्छकारे चकारेण सर्वत्र[10] ।४।२४।।

स्वरः छकारे परे चकारेणागमिकेन[11] व्यवधीयते पदादिमध्यान्तेषु ।
अच्छा[12] व्वदामसि (पद० १६।४ सं० १६।४)
विश्वजनस्य[13] च्छाया (पद० ५।२८ सं० ५।२८)
माच्छन्दः (पद० १४।१४ सं० १४।१८)
आच्छत् (पद० १५।५ सं० १५।५)
जगतीच्छन्दः (पद० १४।९ सं० १४।१०)

---

१. नैतदुदाहरणं ख. ज.
२. एतदनन्तरं 'परिषिल्लोकम्' इति घ.
३. सूत्रस्थाने १।१३ इत्येव ज.
४. लमाप. ख. ज.
५. इमे उदाहरणे मा संहितायां नस्तः । रूपोदाहरणे ।
६. सूत्रस्थाने ४।१४ इत्येव ज.
७. नुकारो क.
८. स्मिलो ज.
९. त्रींलो ज.
१०. सूत्रस्थाने ४।२५ इत्येव ज.
११. णागमेन ज.
१२. वदामसि नास्ति ख. ज.
१३. स्य नास्ति ज.

[ चकारागमापवादः ]

**[२२१] य[1]स्या-तिहाय-सहेति न ।४।२५।।**

एतेषां न ।

सुह छन्दसः (पद० ३४।४८ सं० ३४।४९)

अ[2]तिहायं छिद्रा[3] (पद० २५।४१ सं० २५।४३)

यस्यं छाया (पद० २५।११ सं० २५।१३)

[ क्तागमविधानम् ]

**[२२२] ङ्नौ[4] क्ताभ्याᳪं सकारे ।४।१४।।**

ङकार-नकारौ यथासङ्ख्यं ककार-तकाराभ्यां व्यवधीयेते सकारे परे ।

प्राङ्क्[5]सोमः (पद० १९।२ सं० १९।३)

संमु द्रान्त्समंसृपत् (पद० १३।२९ सं० १३।३१)

[ सलोपविधानम् ]

**[२२३] उदः[6] स्तभाने लोपम्[7] ।४।१८।।**

उदः परः स्तभानशब्दो लोपमापद्यते ।

'तस्मादित्युत्तर[8]स्यादेः'[9] (ज्यो० ९१ प्रा० १।१३५)

इति सकारस्य-उत्तंभान् (पद० १७।६६ सं० १७।७२)

'अव्यवहितस्य' (ज्यो० ९० वृत्तिः प्रा० १।१३४) इत्युक्तत्वाद्[10]

'उद्दिवंᳪस्तभान' (पद० ५।२७ सं० ५।२७) इत्यत्र न भवति ।

।। इति व्यञ्जनसन्धिः[11] ।।

---

१. सूत्रस्थाने ४।२६ इत्येव ज.

२. इतः पूर्वं घ. विशेषपाठः—'यस्य अतिहाय—सह इति न' इति ।

३. छिद्रा नास्ति घ.

४. सूत्रस्थाने ४।१५ ज.

५. प्राङ् सो घ.

६. उदस्त क. घ. ज

७. लोपः ज.

८. त्तस्यादेः ज

९. स्यादः घ.

१०. त्वात् घ.

११. इति····न्धिः नास्ति घ.

[ विसर्गविकारप्रकरणम् ]

**[२२४] भाव्युपधश्च रिद्विस[1]र्जनीयः[2] ।४।३४।।**

**[२२५] रेफे लुप्यते दीर्घं चोपधा ।४।३५।।**

भाविसंज्ञको[3]पधो रिफितश्च विसर्गो रेफे परे लुप्यते, उपधा च दीर्घमापद्यते ।
वसु॑भी रु॒द्रैः (पद० ११।५२ सं० ११।५५)

जटायामुदाहरणम्—
अन्ता रुक्मः (रद० १२।२ सं० १२।२)
नीरपां॑ꣳसि (पद० ३४।४६ सं० ३४।४७)
रुरू[4] रौ॒द्रꣳ (पद० २४।३९ सं० २४।३९)
धा॒तू रा॒यः[5] (पद० ३७।५ सं० ३७।१२) सङ्क्रमोदाहरणम् ।

भावीत्यादि किम्—
परि॑[6] नो रु॒द्रस्य॑ (पद० १६।५० सं० १६।५०)

[ विसर्गस्य रेफविधानम् ]

**[२२६] रेफꣳ स्वर-धौ ।४।३६।।**

भाव्युपधो रिफितश्च विसर्गः स्वरे[7] परे धिसंज्ञके च परे रेफमापद्यते ।
पृश्निरक्र[8]मीत् (पद० ३।६ सं० ३।६)
वा॒युरनि॑लम् (पद० ४०।१३ सं० ४०।१५)
अ॒ग्नेरनी॑कम् (पद० ८।२० सं० ८।२४)
उ॒भयो॒रात्न्यो॒ꣳ (पद० १६।९ सं० १६।९)
वं[9]योना॒धैर॒ग्नये॑ (पद० १४।६ सं० १४।७)
द्यौरा॑सीत् (पद० २३।१० सं० २३।१२)
अ॒ग्निर्मू॒र्द्धा[10] (पद० १३।१२ सं० १३।१२)

---

१. रिहविसर्ज घ.
२. जनीये ख. जनीयो ज.
३. संज्ञोपधो क. घ.
४. रुद्र घ. क.
५. धातृण्यः क. घ.
६. परि नास्ति ख. ज.
७. परे नास्ति ख. ज.
८. रक्रमीत् घ.
९. वायोनाधौ घ. क
१०. ग्निमूर्धा घ.

त्वष्टु॑र्ज्जामात॑ (पद० २७।३३ सं० २७।३४)
अ॒ग्नेर्जि॒ह्वासि॑ (पद० १।३० सं० १।३०)
विष्णो॒र्नुकं॑म्[1] (पद० ५।१८ सं० ५।१८)
वा॒यु॒व्यै॒र्व्वायव्या॒नि (पद० १९।२५ सं० १९।२७)
गौर्व्वय॑[2] (पद० २१।९ सं० २१।१२)
जामा॑तरद्भुत[3] (पद० २७।३३ सं० २७।३४)
ह्वा॒र्मति॑[4] (पद० १।९ सं० १।९)
अह॑र्ज्जिन्व (पद० १५।६ सं० १५।६)
'अहर[5]भकारपरम्' (ज्यो० ११० प्रा० १।१६३) इत्युक्तत्वात् शुद्धयतु
शमहो॑भ्य[6] (पद० ६।१३ सं० ६।१५)
स्वर्द्यौरि॑व (पद० ३।५ सं० ३।५)—'पदादिश्चाजित्परः' (ज्यो० ११४ प्रा० १।१६७) इत्युक्तत्वात्—
स्व॒र्ग्यायि॑[7] (पद० ११।२ सं० ११।२)
स्व॒र्गाय॒[8] (पद० २२।२९ सं० २२।३४)
'अनरणे'[9] (ज्यो० ११३ प्रा० १।१६६) इत्युक्तत्वात्—
स्वाय॒ चार॑णाय च (पद० २६।२ सं० २६।२)
अजित्परत्वा[10]त् प्राप्तस्य निषेधः।

भावीत्यादि किम्—
दि॒वो [11]मू॒र्द्धा (पद० १८।५० सं० १८।५४)

[ विसर्गस्य यकारस्तल्लोपश्च ]

## [२२७] कण्ठ्यपूर्वो य[12]कारमरिफितः ।४।३७।।

१. कम् नास्ति ख. ज. इत उत्तरं 'अग्ने जिह्वा' इत्यधिकम् घ.
२. गौर्वया घ.
३. रद्भुता घ.
४. ते नास्ति ख. ज
५. अभकार ख. ज.
६. अहोभ्यः इत्येव ख ज.
७. क. ज. एव
८. ख. घ. एव
९. नरयो ज. घ.
१०. अजित्पुरत्वत्प्रा ख.
११. मूर्घ्ना ज.
१२. मकार ज.

रिफितभिन्नः कण्ठ्यपूर्वो **विसर्गो य**[1]**कार**मापद्यते स्वरे[2] परे।
य इ॒मा (पद० १७।१६ सं० १७।१७)
शुष्मा॒ ओष॑धीना॒म् (पद० १२।७३ सं० १२।८२)—'य[3]वयोः' (ज्यो० १२० प्रा० ४।१२७) इति लोपः।
अरिफितः किम्—
प्रा॒[4]तरिन्द्र॑म् (पद० ३४।३३ सं० ३४।३४)

[ विसर्गलोपविधानम् ]

## [२२८] लोपं धौ ।४।३८।।

अरिफितः कण्ठ्यपूर्वो **विसर्गो लोप**मापद्यते धौ परे।
दे॒वा दे॒वैः (पद० २०।१० सं० २०।११)
अ॒ य॒क्ष्मा मा॑[5] (पद० ११ सं० ११)
अरिफितः किम्—
वा[6]र्बं॑हि॒र्द्धा (पद० ५।११ सं० ५।११)
धौ किम्[7]—
यास्ते॑ (पद० १३।२० सं० १३।२२)

## [२२९] भू[8]मेश्चाकारेऽपृक्ते ।४।३९।।

भूमिशब्दसम्बन्धी **विसर्गो लोप**मापद्यते अपृक्त आ[9]कारे परे।
भूम्या[10]द॑दे (पद० २६।१५ सं० २६।१६)
अपृक्ते किम्—
भूमि॑रा॒वप॑नं म॒हत्[11] (पद० २३।८।सं० २३।१०)

---

१. 'यकार····विसर्गो' पर्यन्तं पाठो नास्ति घ.
२. 'स्वरे' स्थाने 'अरिफिते' ख
३. 'यवयो.' स्थाने 'यस्य लोपं धौ' इति पाठः ख
४. मात ज.
५. नैतदुदाहरणम् ख. ज.
६. वार्वहि घ.
७. किम् नास्ति ख
८. भूम्या ज.
९. अकारे ज.
१०. सूत्रस्थाने ४।३८ ज.
११. महत् नास्ति ख.

[विसर्गस्य ओभावविधानम् ]

[२३०] सर्वो अ[1]कार ओकारम् ।४।४२।।

ह्रस्वाकारपूर्वो अरिफितो विसर्गः सोपध[2] ओकारमापद्यते धौ परे । 'लोपं धौ' (ज्यो० २२८ प्रा० ४।३८) इत्यस्यापवादः ।
दे॒वा दे॒वैः (पद० २८।३ सं० २८।३)
दे॒वो व॑÷सवि॒ता[3] (पद० ११।१ सं० ११।१)
अरिफितः किम्—
प्रा॒तर्म्मि॒त्रावरु॑णा (पद० ३४।३३ सं० ३४।३४)

[२३१] अकारे च ।४।४३।।

अरिफितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपू[4]र्वं ओकारमापद्य[5]ते अकारे परे ।
स्तु॒पो॑सि (पद० २।२ सं० २।२)
कृ॒ष्णो॑सि (पद० २।१ सं० २।१)
अरिफितः किम्—
जामा॑तरद्भुत (पद० २७।३३ सं० २७।३४)

[२३२] एषो ह च ।४।४४।।

इदं निपात्यते ।
ए॒षो ह॑ दे॒वः (पद० ३२।३ सं० ३२।३)

[२३३[6]] स्वो रुहावहश्च रात्र्याम् ।४।४५।।

स्वरित्ययं रुहे, अहरित्ययं रात्रिशब्दे परे सपूर्वं ओकारमापद्यते ।
स्वो॒ रु॒हा॑णाः (पद० ११।१८ सं० ११।२२)
अ॒हो॒रा॒त्रयो॑ः (पद० २४।२५ सं० २४।२५) रिफितत्वादप्राप्ते विधिः ।

[२३४] विसर्जनीयः ।३।६।।

अधिकारोऽयम् ।

[ विसर्गस्य शकारविधानम् ]

[२३५] च- छयोः शम् ।३।७।।

---

१. अःकार ख.
२. सोपदा घ.
३. सविता नास्ति ख. ज.
४. सपूर्व नास्ति घ.
५. मापदाते ज.
६. सूत्रस्थाने ४।४५ ज.

वि[1]सर्गश्च-छयोः शमापद्यते ।
इन्द्रंश्च (पद० १८।३२ सं० १८।३७)
प्रजापंतिश्छ[2]न्दं ÷ (पद० १४।८ सं० १४।९)

[ विसर्गस्य सकारविधानम् ]

**[२३६] त-थयोः सम् ।३।८।।**

विसर्गस्त-थयोः समापद्यते ।
कस्त्वा[3] (पद० १।६ सं० १।६)
नमंस्ते (पद० १६।१ सं० १६।१)

[ शत्व-सत्वयोः संबन्धे शाकल्याचार्यमतम् ]

**[२३७] अविकारꣳ शाकल्यः श-ष-सेषु ।३।१०।।**

एषु विसर्गो विकारं नापद्यते शाकल्यस्य[4] मतेन ।
व्वायव्याꣳ[5] श्वेता? (पद० २४।१९ सं० २४।१९)
अग्नीषोमंयोः षष्ठी (पद० २५।५ सं० २५।५)
व्वा[6]नस्पत्यः स? (पद० १।१५ सं० १।१५)

**[२३८] प्रकृत्या क-खयोः प-फयोश्च ।३।११।।**

क-खयोः प-फयोश्च परयोर्विस[7]र्गः प्रकृत्या भवति ।
सिमाꣳ कृण्वन्तु[8] (पद० २३।३९ सं० २३।४२)
शंमितारं ÷ कृण्वन्तु[9] (पद० २५।३१ सं० २५।३३)
ततं ÷ खनेम (पद० ११।१९ सं० ११।२२)
वसोꣳ पवित्रंम् (पद० १।२ सं० १।२)
याꣳ फलिनींꣳ[10] (पद० १२।८० सं० १२।८९)

---

१. विसग ज.
२. तिच्छन्दः घ.
३. करत्या घ.
४. स्य नास्ति ख. ज.
५. 'वायव्याः ।' पूर्णविरामः ज.
६. वनस्प. घ.
७. विसर्गः घ. विंसगः ज.
८. नैवदुदाहरणम् ख.
९ ख. एवैतदुदाहरणम् ।
१०. फलिनिः ज. फलनः घ.

## [विसर्गलोपविधानम्]

### [२३९] लुङ्[1] मुदि जित्परे ।३।१३।।

जित्संज्ञकपरे मुत्संज्ञके[2] परभूतो[3] विसर्गो लुप्यते ।

अमृतां स्तु[4]ताः (पद० २१।२५ सं० २१।२८)

ऊर्जं स्थ[5] (पद० ३।२० सं० ३।२०)

जित्परे किम्—

कः स्विंत् (पद० २३।७ सं० २३।९)

### [२४०] उपवसने पीवः ।३।१४।।

अयं विसर्गो लुप्यते उपवसने परे ।

पीवो'प[6]वसनानाम् (पद० २१।४० सं० २१।४३)

### [२४१] स ओषधी-मयोः ।३।१५।।

सः इति विसर्गो लुप्यते ओषधी शब्दे[7] इ[8]मशब्दे च परे ।

सौषधीरनु (पद० १२।३१ सं० १२।३६)

सेमान्न'÷[9] (पद० २९।५४ सं० २९।५४)

### [२४२] व्यञ्जने च ।३।१६।।

सः इत्ययं विसर्गो लुप्यते व्य[10]ञ्जने परे ।

स ते' लोकः (पद० २३।१५ सं० २३।१७)

स पर्य्यंगात् (पद० ४०।८ सं० ४०।८)

स बो'धि (पद० १२।३६ सं० १२।४३)

व्यञ्जने किम्—

सऽ ईम्मन्द्रा[11] (पद० २७।१४ सं० २७।१५)

सोऽ अग्निः[12] (पद० १५।३८ सं० १५।४२)

---

१. लुङि घ. लुंङि ज.
२. ज्ञक घ.
३. भूते घ.
४. रभुताः घ.
५. उर्जस्था घ.
६. पीवोव ज.
७. शब्दे स्थाने 'ज्ञाने' घ.
८. ईम ज.
९. मानः घ; मान्तः ज.
१०. व्यन्जने परे नास्ति ख. ज.
११. मन्द्र इत्येव ख. सईम्भद्रा ज.
१२. नैतदुदाहरणम् ज.

**[२४३] स्य एष च ।३।१७।।**

स्यः एषः इमौ विसर्गौ लुप्येते[१] व्यञ्जने परे ।

स्य राध्यः[२] (पद० २३।११ सं० २३।१३)

एष ते' (पद० ३।५६ सं० ३।५७)

एष च्छागं÷(पद० २५।२४ सं० २५।२६)

स्य वाजी (पद० ९।१३ सं० ९।१४)

एष स्यः[३] (पद ९।१३ सं० ९।१४)

इदं सूत्रद्वयं 'म[४]ध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्[५]' इति न्यायेन 'तथयोः सम्' (ज्यो० १९३ प्रा० ३।१३४) इत्यादीनां बा[६]धकम् ।

स[७] वाजी

स[८] बो'धि (पद० १२।३६ सं० १२।४३)

—इत्यादौ 'सर्व अ[९]कार' (ज्यो० २३० प्रा० ४।४२) इत्यनेन[१०] 'विप्रतिषेध उत्तरम्' (ज्यो० ९९ प्रा० १।१५९) इत्युक्तत्वादेत[११]स्य बाधः[१२] प्राप्तः, 'अलोप' (ज्यो०९९ प्रा०१।१५९) इत्युक्तत्वान्न भवति ।

**[स्थितोपस्थिते नियमविधानम्]**

**[२४४] अनितावध्याये ।३।१९।।**

अधिकारोऽयम् । विधीयमानमितौ[१३] परे न भवति । उपस्थितं विना इतिपरत्व-स्या[१४]सम्भवात्, स्थितोपस्थितस्य तु एकपद[१५]विषयत्वादन्तःपदस्थ विकारागमविषयो-

---

१. लुप्यते घ.
२. स्य एष्यः घ. ज.
३. स्य घ.
४. मध्ये''''न्यायेन पाठो नास्ति क. घ.
५. रान्निति ज.
६. वाघ घ.
७. स्य वाजी ख. ज. दृश्यते तदुदाहरणं पूर्वं गतम् एतच्च संहितायां न दृश्यते ।
८. स्य बोधि ज.
९. अः कार ख. क.
१० इत उत्तरम् 'पूर्वान् विधीन् बाधन्ते नोत्तरानिति न्यायेन' इति पाठः क. घ.
११. देतरस्य घ.
१२. इतोऽग्रे 'मध्येऽपवादः' इत्याधिकः पाठः क. 'मध्येऽपिबाधः' इति घ.
१३. मिमौ ख.
१४. रत्वासं क. घ.
१५. पदस्थविष. ख. ज.

ऽयं निषेधः । 'अध्याय' इत्यधिकारविध्यर्थः[1] ।

अधिकारः किम्—

तुवस्तरमिति तुव? । तरम् (पद० ११।१२ सं० ११।१४)

इत्यादौ 'तथयोः सम्' (ज्यो० ११३ प्रा० ३।१३४) इत्यादि भवति ।

अध्याये[2] किम्—

गोव्यच्छ[3]मिति गो । व्यच्छम् (पद० ३०।१६ सं० ३०।१८) इत्यादौ 'स्वरे भावी' (ज्यो० ११८ प्रा० ४।४६) इत्यादि भवति । अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते नान्यत्र । तेन—

रायस्पोष[4]द इति रायस्पोषु[5] । दे (पद० ५।१ सं० ५।१) । अत्र 'रायः सहसः[6]' (ज्यो० २५० प्रा० ३।२५) इति सकारो भवति ।

## [२४५] इतिवच्चचर्चायाम् ।३।२०।।

पुनरुच्चारितं पदं चर्चा, =इतेः परं पदम् ।

तत्र इतौ परे यथा न भवति तद्वदेव ।

### [विसर्गस्य सकार-षकारविधानम्]

## [२४६] ककार—प[7]कारयोः सकारम् ।३।२१।।

## [२४७] भाव्युपधः ष[8]कारम् ।३।२२।।

भाव्युपधो विसर्गः षकारमापद्यते, परिशेषात् कण्ठ्यपू[9]र्वः सकारं ककारे पकारे[10] च परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः सम्बन्धः ।

## [२४८] आ[11]वि-र्निरिड-इडाया-वसति-र्वरिवः ।३।२३।।

एतेषां षण्णां विसर्गः ककार–पकारयोर्यथाय[12]थं सकारं षकारं चापद्यते ।

---

१. ध्यर्थम् ख. कारार्थम् क. घ.
२. 'अध्याये''''भवति' पाठो नास्ति क.
३. व्यच्छन्तमि. घ.
४. यस्योपद घ.
५. यस्योप घ.
६. सह इति घ.
७. यकार ज.
८. सका क.
९. पूवः ज
१०. पकारे नास्ति क.
११. सूत्रस्थाने ३।२३ ज.
१२. यथासङ्ख्यं क. घ.

आविष्कृणुष्व[1] (पद० १३।१२ सं० १३।१३)
[2]अम्ब निष्पर (पद० ६।३४ सं० ६।३६)
इडस्पदे[3] (पद० १५।२६ सं० १५।३०)
इडा[4]यास्पद[5]म् (पद० ४।२२ सं० ४।२२)
इडायास्पदे[6] (पद० ३४।१५ सं० ३४।१५)
वसतिष्कृता (पद० १२।७० सं० १२।७९)
वरिवस्कृणोतु (पद० ५।३७ सं० ५।३७)

[२४९] [7]दिवोऽककुत्—पृथिव्योः ।३।२४।।

दिव इत्ययं विसर्गः[8] क—पयोः समापद्यते ककुत्-पृथिवीशब्दौ[9] वर्जयित्वा ।
दिवस्परि (पद० १२।१७ सं० १२।१८)
दिवस्पु त्राय (पद० ४।३५ सं० ४।३५)
दिवस्पृ ष्ठं (पद० १५।५० सं० १५।५८) (पद० १५।५२ सं० १५।६४)
अककुदित्यादि किम्—
दिवः ककुत् (पद० ३।१२ सं० ३।१२)
दिवः पृथिव्याः (पद० २९।५३ सं० २९।५३)

[२५०] [10]रायः सहस[11]स् पोष-पुत्रयोः ।३।२५।।

एतौ यथासङ्ख्यं पोष-पुत्रयोः परयोः[12] सकारमापद्य[13]ते ।
रायस्पोषे[14] (पद० सं० )

---

१. ष्व नास्ति ख. ज.
२. अम्ब नास्ति ख. ज.
३. स्पते घ.
४. इदाया ज.
५. नैतदुदाहरणम् क. घ.
६. इदमुदाहरणं क. घ. एव.
७. सूत्रस्थाने ३।२४ इत्येव ज.
८. सगः ज.
९. शब्द ज.
१०. सूत्रस्थाने ३।२५ ज.
११. सहस्पो घ.
१२. रयो ज.
१३. द्येते ख.
१४. क. घ. एवैतत्

रा॒यस्पोषे॑ण[1] (पद० ४।२२ सं० ४।२२)

सह॑सस्पु॒ त्र॒? (पद० ११।६५ सं० ११।७०)

[२५१] [2]तमसोऽपरस्तात् ।३।२६।।

क—पयोरयं विसर्गः[3] सकारमापद्यते[4] परस्ताच्छब्दं वर्जयित्वा ।

तम॑सस्पारम्[5] (पद० १२।६४ सं० १२।७३)

तम॑सु॒स्परि॑[6] (पद० २०।१६ सं० २०।२१)

अपर[7]स्तात् [8]किम्—

तम॑स॒ऽ पु॒रस्ता॑त् (पद० ३१।१८ सं० ३१।१८)

[२५२] त[9]प[10]सस्पृथिव्याम् ।३।२७।।

अयं समापद्यते पृथिवीशब्दे परे[11] ।

तप॑स[12]स्पृथि॒व्याम् (पद० ३७।९ सं० ३७।१६)

[२५३] [13]अ[14]ध्वनो-रजसो-रिष-स्स्पृश-स्पातौ ।३।२८।।

एते चत्वारः पाधातौ सकारमापद्यन्ते ।

अध्वं॑नस्पातु (पद० ४।१९ सं० ४।१९)

रज॑सस्पाति[15] (पद० १७।५६ सं० १७।६०)

रि॒षस्पा॑हि (पद० ३।४७ सं० ३।४८)

स॒ ॐ स्पृशं॑स्पाहि (पद० ३७।४ सं० ३७।११)

---

१. क. ध. वर्जमेतत्
२. सूत्रस्थाने ३।२६ ज.
३. सगः ज.
४. समा क. ज. घ.
५. ख. ज. एवैतदुदाहरणम् ।
६. क. घ एवैतदुदाहरणम् ।
७. पस्तात् घ.
८. स्तात्कि ख.
९. सूत्रस्थाने ३।२७ ज.
१०. तमस घ.
११. परे नास्ति क. ख.
१२. तपस्पृ ख.
१३. सूत्रस्थाने ३।२८ ज.
१४. स्पातु ज. ग.

[२५४] अ[1]ध्वनस्कुर्विति च ।३।२९।।

एतन्निपात्यते ।
सका[2]माँ २ ।। अध्वनस्कुरु (पद० २६।१ सं० २६।१)

[२५५] [3]समानपदे च ।३।३०।।

एकपदे विद्यमानोविसर्गः[4] क-पयोर्यथा[5]यथं सकारं षकारं चापद्यते, इतौ परे चर्चायां च न ।

श्रेयस्कर[6] (पद० १०।२६ सं० १०।२८)
तपस्पतिः (सं० ५।६,४०)
जास्त्यपम् (सं० ३३।१२)
हविष्कृत् (सं० १।१५)
चतुष्पात् (सं० १२।९५)

स्थितोपस्थिते—

श्रेय[7]ः करेति श्रेयः । कर (पद० १०।२६)
तपः पतिरिति तपः । पति[8]ः (पद० ५।६,४०)
जाः पत्यमिति जाः । पत्यम् (पद० ३३।९)
हविः कृदिति हविः । कृत् (पद० १।१५)
चतुः[9] पादिति चतुः । पात् (पद० १२।८६)
इत्यादि भवति ।

[२५६] [10]पराव[11]वसाने ।३।३१।।

अवसानस्थिते परिशब्दे[12] परे विसर्गः समाप[13]द्यते ।
ओषधयस्परि (पद० १२।८२ सं० १२।९१)

---

१. सूत्रस्थाने ३।२९ ज.
२. कामाँ क. कामा २ ज. कामाँ घ.
३. सूत्रस्थाने ३।३० ज.
४. सगः ज.
५. यथासङ्ख्यं क.
६. स्करा घ.
७. श्रेयस्करे क. घ
८. पति । घ.
९. चतुष्पादि क. घ.
१०. सूत्रस्थाने ३।३१ ज.
११. रावसा घ.
१२. शब्दे परे नास्ति क.
१३. माद्यते ख.

अवसाने किम्—

हेड᳚ परि (पद १३।४१ सं० १३।४५)

[२५७] क[1]विः—करत्-कृधिषु ।३।३२।।

एतेषु[2] विसर्गः सकारं षकारं[3] वापद्यते ।

वसुष्कृविः (पद० ५।३२ सं० ५।३६)

श्रेयंसस्करत्[4] (पद० १०।२६ सं० १०।२८)

पुनंस्कृधि (पद० ४।१४ सं० ४।१४)

[२५८] [5]कृषीश्च कृधौ सकारम् ।३।३३।।

[6]कृषीरित्ययं विसर्गः कृधिशब्दे सकारमापद्यते । भाव्युपधत्वात् पूर्वसूत्रेण षकारे प्राप्ते विधिः ।

कृषीस्कृधि[7] (पद० ४।१० सं० ४।१०)

[२५९] [8]सदो-द्यौ-र्नमस्कृतं-पिता-पथेषु ।३।३४।।

सद[9] इत्यादीनां त्रयाणां विसर्गः कृतमित्यादिषु यथासङ्ख्यं[10] परेषु यथाय[11]थं सं षं चापद्यते ।

येषामप्सु[12] सदंस्कृतम् (पद० १३।७ सं० १३।८)

उपहूतो[13] द्यौष्पिता (पद० २।११ सं० २।११)

शर्मं सप्रथा[14] नमंस्पथे (पद० १८।५० सं० १८।५४)

---

१. सूत्रस्थाने ३।३२ ज. कविष्क क. घ. रक्तृधि ख.
२. एषु क.
३. सकारः ज.
४. श्रेयस्कर ख.
५. सूत्रस्थाने ३।३३ ज.
६. कृषि घ. ज.
७. कृषि स्कृ. ज. कृधीस्कृ ख.
८. सूत्रस्थाने ३।३४ ज. सदौ घ
९. सह क.
१०. संख्यप ज.
११. यथासंख्यं क.
१२. 'येषामप्सु' क एव
१३. उपहूतो क. एव
१४. शर्म सप्रथाः क. एव

**[२६०] पति[1] ताल[2]व्यस्वरोदये पदे च ।३।३५,३६।।**

तालव्यस्वरान्ते [3]पतिशब्दे[4] पदरूपे परे **विसर्गः सकारमापद्यते**। तालव्य[5]-स्वरोदय इति सम्भवा[6]भिप्रायम् ।

ब्रह्मणस्पते[7] (पद० ३४।५७ सं० ३४।५८)

वाचस्पतये[8] (पद० ७।१ सं० ७।१)

वाचस्पतिम् (पद० ८।३९ सं० ८।४५)

पदे किम्[9]—'तस्मिन्निति निर्दिष्ट' (ज्यो० प्रा० )

इति सप्तमीनिर्दिष्ट वर्णविषयम्। अत्र चेदमेव ज्ञापकं पदावयवे व्यवहितस्या सम्भवात् ।

यतो जात? प्रजापतिः (पद २३।५६ सं० २३।६३)

**[२६१] [10]न परुषः परुषि ।३।३७।।**

परुष इत्ययं **विसर्गः** परुषि न **सकारमापद्यते** । 'समानपदे च' (ज्यो० २५५ प्रा० ३।३०) इति[11] प्राप्तस्य निषेधः ।

प्ररोह[12]न्ती परुषः परुषस्परि[13] (पद० १३।१८ सं० १३।२०)

**[२६२] वा[14]जपति-वासऽ-एदिधिषु-रन्तः पा[15]र्श्व्येनान्तः पाश[16]र्व्यं मिति च[17] ।३।३८।।**

---

१. सूत्रस्थाने ३।३५ ज.

२. ताव्य घ.

३. प्रति घ.

४. पतिशब्दे नास्ति क.

५. तालस्व ज.

६. संभवदभि. क.

७. स्पतये क.

८. नैतदुदाहरणम् क.

९. पदेकिम् नास्ति ज.

१०. सूत्रस्थाने ३।३७ ज.

११. इति नास्ति घ.

१२. प्ररोहन्ती नास्ति ख. ज

१३. परि नास्ति ख. ज.

१४. सूत्रस्थाने ३।३८ ज. वाजयति घ.

१५. रन्तपा ख.

१६. ख पार्श्वं घ.

१७. च नास्ति घ.

क-पयो 'र्वाज[1] पति 'रित्यादीनां त्रयाणां विसर्गो 'अन्तः[2] पर्शव्येने' त्यादिपदद्वय[3]-सम्बन्धी च न विकारमापद्यते।

वाज'[4]पतिः कुविः (पद. ११।२२ सं. ११।२५)

'कविः[5] करत्' (ज्यो० २५७ प्रा० ३।३२) इत्यस्य निषेधः।

वासः पल्पूलीम् (पद० ३०।१० सं० ३०।१२)

एदिधिषुः[6] पतिम् (पद० ३०।७ सं० ३०।९)

अन्तः पर्शव्येन (पद० ३९।९ सं० ३९।९)

अन्तः पार्श्व्यम्[7] ( पद० ३९।९ सं० ३९।९)

'समानपदे च' (ज्यो० २५५ प्रा० ३।३०) इति प्राप्तस्य निषेधः।

'इति च' इत्यनुक्तसमुच्चयार्थम्। तेन—

जातः पति' ÷ ( पद० १३।३ सं० १३।४)

इत्यत्र न सकारः।

## [२६३] अ[8]हः पतौ रेफम् ।३।३९।।

अहः इत्ययं विसर्गः पति[9]शब्दे परे रेफमापद्यते।

'समानपदे' (ज्यो० २५५ प्रा० ३।३०) [10]इत्यस्यापवादः।

अहर्पत'ये (पद० ९।१९ सं० ९।२०)

स्थितोपस्थिते तु[11]—

अहः पत'य इत्य'हः। पत'ये (पद० ९।१९)

## [२६४] [12]परश्च मूर्द्धन्यम् ।३।४०।।

अधिकारोऽयम् 'परश्च' इति 'त आघा[13]दनाडम्बरात्' (ज्यो० २६८ प्रा०३।४८) इत्यस्मात् प्राक्, 'मूर्द्धन्यम्' इति तमभिव्याप्य।

---

१. वाजयति घ.

२. अन्तप ख.

३. द्वयं स. ज.

४. वाजः पतिः ज.

५. कविष्क क. घ.

६. षुण. ज.

७. पाश्व्य ज. पार्श्वं घ.

८. सूत्र स्थाने ३।३९ ज.

९. प्रति घ.

१०. पद इ ज.

११. ते षु क.

१२. सूत्रस्थाने ३।४० ज.

१३. आघाता घ. ज.

[२६५] स्वर्धूः[1] साꣳसहयोः ।३।४१।।

स्वः धूः इमौ[2] य[3]थासङ्ख्यं सां-सह-इत्येतयोः रेफमापद्यते, परश्च मूर्द्धन्यम् ।
स्व[4]र्षामप्साम् (पद० २४।२० सं० ३४।२०)
इ[5]तं धूर्षाहौ (पद० ४।३३ सं० ४।३३)
'विकारी यथासन्नम्' (ज्यो० ९५ प्रा० १।१४२) इति[6] ईषद्वि[7]वृतत्वात् [8]षकारः । स्थितोपस्थिते—

स्वः सामिति स्वः । साम् (पद० ३४।२०)

धूः सहाविति धूः । सहौ (पद० ४।३३)

[२६६] [9]उकारं दुर्दे ।३।४२।।

[10]दुरित्ययं विसर्गः[11]उकारमाप[12]द्यते [13]दकारे परे, परश्च मूर्द्धन्यम् । धिसंज्ञकत्वा-[14]दसोष्मत्वा[15]-न्निरनुनासिकत्वाच्च ड[16]कारः ।
परि ते दूडभꣳ (पद० ३।३६ सं० ३।३६)

स्थितोपस्थिते—

[17]दुर्दभऽ इति ꣳ । दुर्दभं ÷ (पद० ३।३६)
'अध्याय' (ज्यो० २४४ प्रा० ३।१९) इत्युक्तत्वादुपस्थिते 'रेफꣳस्वर-धौ' (ज्यो० २२६ प्रा० ४।३६) इति भवति ।

---

१. सूत्रस्थाने ३।४१ ज.
२. एतौ क.
३. 'यथा.....विकारी' पाठो नास्ति ज.
४. अप्साम् नास्ति ख.
५. इतं नास्ति ख.
६. इति नास्ति घ.
७. षत्त ख. षत् घ. वृतत्वान्यका क.
८. यका घ.
९. सूत्रस्थाने ३।४२ ज.
१०. दुः अयं ज.
११. सगः ज.
१२. मापते ज.
१३. दकारे परे नास्ति क.
१४. त्वाल्लृदसो घ.
१५. ष्मत्या घ.
१६. उका ज.
१७. दु ज.

स्थिते तु न संहिताया (ज्यो० ११६ प्रा० ३।१) अ[1]भावात् ।

**[२६७] ओ[2]कारमितः सि[3]ञ्चतौ सोपधः ।३।४६।।**

इतः इत्ययं **विसर्गः** पूर्ववर्णसहित ओकारमापद्यते सिञ्चतौ परे, **परश्च मूर्द्धन्यम् ।**

परीतो षिञ्चता[4] सु तम् (पद० १९।२ सं० १९।२)

॥ इति विसर्गसन्धिः ॥

## ❋ विशेषः संस्कारसन्धिः ❋

### [ तकारस्य टकारादेशः ]

**[२६८] त[5] आघादनाड[6]म्बरात् ।३।४८।।**

आघा[7]शब्दात् परस्तकारो मूर्द्धन्यमापद्यते, स चे[8]दाघाशब्दः आडम्बरशब्दात् परो न[9] ।

दार्वाघाट३ (पद० २४।३५ सं० २४।३५)

जित्संज्ञकत्वा-दसोष्मक[10]त्वाच्च टः । स्थितोपस्थिते तु[11]—

दार्वाघात[12] इति' दारु । आघात३ (पद० २४।३५)

अनाडम्बरात्[13] किम्—

शब्दा[14]याडम्बराघातम् (पद० ३०।१७ सं० ३०।१९)

---

१. तायामसंभवात् ज.
२. सूत्रस्थाने ३।४६ ज.
३. षिञ्चतौ क. घ.
४. ञ्चत इत्येव ख. ज.
५. सूत्रस्थाने ३।४८ ज.
६. नाऽम्ब घ.
७. आघा घ.
८. 'चेद्दारुशब्दात्परः' इति पदद्वयस्थाने ज.
९. ना. ख.
१०. ष्मत्वा ज.
११. तु नास्ति ज.
१२. घाट क.
१३. रात्कि ख
१४. शब्दाय नास्ति ख. ज.

[ रेफागमविधानम् ]

[२६९] [1]वनसदोऽवेटो[2] रेफेण ।३।४९।।

वन[3]शब्दः सदशब्दे परे रेफेण व्यवधीयते, वनशब्दो 'वेट्' शब्दात् परो न चेत् ।

भुरण्यवो[4] वनर्षदे ( पद० ३३।१ सं० ३३।१)

स्थितोपस्थिते—

वनसदऽइति वन । सदः (पद० ३३।१)

अवेटः किम्—

[5]वेड्व[6]नसदे (पद० १७।११ सं० १७।१२)

[ सकारागमविधानम् ]

[२७०] [7]पत्यौ च सकारेण ।३।५०।।

वनशब्दः पतिशब्दे सकारेण व्यवधीयते ।

वनस्पतिं [8]शमिता देवः (पद० २९।३५ सं० २९।३५) इदं[9] शाखान्तर-विषयम् । अत्र लेख[10]नं तु 'सकारेण' इत्यनुवृत्तिप्रदर्शनार्थम्[11] ।

[२७१] [12]ऋता-वरौ च पति-परयोः ।३।५१।।

ऋत-अवर-एतौ पति-परयोः सकारेण व्यवधीयेते[13] ।

[14]तव व्वायवृतस्पते (पद० २७।३३ सं० २७।३४)

तू[15]र्णवध्ममवरस्परायं (पद० ३०।१७ सं० १७।१९)

---

१. सूत्रस्थाने ३।४९ इत्येव ज.

२. वेरो घ.

३ वनः शब्दः क. घ. ख.

४. भुरण्यवो नास्ति ख. ज.

५. अप्सुषदे घ. ग.

६. वेट् वन घ. क.

७. सूत्र स्थाने ३।५० ज.

८. शमिता देवः नास्ति ख. ज.

९. इदं च क. घ.

१०. खन तु ज.

११. र्शनार्थः क.

१२. सूत्रस्थाने ३।५१ इत्येव

१३. यते ज.

१४. तव व्वायो नास्ति ख. ज.

१५. तूणवध्मं क. घ एव ।

स्थितोपस्थिते तु[1]—

ऋतंपतुऽ इत्यृतं । पते (पद० २७।३३)

अवरपरायेत्यवर । परायं (पद० ३०।१७)

**[२७२] तद्[2]-बृहतौ कर-पत्योस्तलोपश्च ।३।५२।।**

तत्[3]-बृहत्-एतौ कर-पतिशब्दयोः प्रत्यय[4]योर्यथासङ्ख्यं सकारेण व्यवधीयेते पूर्वपदयोश्च तकारलोपो भवति । यथा—

तत् + करान् = तस्कराँ ऽउत (पद० ११।६६ सं० ११।७१)

बृहत् + पतिः = बृहस्पतिं (पद० २५।१७ सं० २५।१९)

**[ षकारागमविधानम् ]**

**[२७३] [5]परि कृते षकारेण ।३।५३।।**

परीत्य यं कृते परे[6] षकारेण व्यवधीय[7]ते ।

परिष्कृता शुक्रा[8]? (पद० २१।३९ सं० २१।४२) स्थितोपस्थिते तु—

परिकृताऽ इति परि । [9]कृता । (पद० २१।३९)

**[ शकारागमविधानम् ]**

**[२७४] [10]चन्द्रे सु शकारेण ।३।५४।।**

सुशब्दः चन्द्रे शब्दे[11] परे[12] शकारेण व्यवधीयते ।

उभे सुश्चन्द्र[13] (पद० १५।३९ सं० १५।४३)

स्थितोपस्थिते—सुचन्द्रेति । सु । चन्द्र (पद० १५।३९)

---

१. तु नास्ति ख.
२. सूत्रमेतत् सवृत्तिकं नास्ति ख. ज.
३. तद् घ क.
४. प्रत्ययो घ.
५. सूत्रस्थाने ३।५२ ज.
६. परे नास्ति ज.
७. धीयेते घ. ततः—'पूर्वपदयोश्च तकारलोपो भवति । यथा—तत्कारान् तस्कराँ उत' इति पूर्वसूत्रोक्तं पुनरावृत्तं क. घ.
८. शुक्राः नास्ति ख. ज. घ.
९. ष्कृताः घ.
१०. सूत्रस्थाने ३।५४ ज.
११. शब्दे नास्ति क. घ. ज.
१२. परे नास्ति ज.
१३. न्द्रः घ

[ दकारादेशविधानम् ]

**[२७५] [1]दुधुक्षन् धो दकारम् ।३।५५।।**

दुधुक्षन्नित्ययं[2] धकारो[3] दकारमापद्यते ।

[4]बृह् तीन्दुदु'क्षन् (पद० ३३।२५ सं० ३३।२८) [5]स्थितोपस्थिते—

दुधु'क्षन्निति दुधु'क्षन् (पद० ३३।२५)

## ❁ नति प्रकरणम् ❁

**[२७६] भा[6]विभ्यः सः[7] षᳪ समानपदे ।३।५६।।**

भाविभ्यः परः सकार एकपदे विद्यमानः षकारमापद्यते ।

**[२७७] षा[8]त् त-थौ मूर्द्धन्यम् ।३।८०।।**

ष[9]कारात् परौ त-थौ मूर्द्धन्यमापद्येते[10] ।

व्र_जङ्गच्छ[11] गोष्ठानम् (पद० १।२५ सं० १।२५)

पर॒मे॒ष्ठ्य॒भिधी'त[12]ः (पद० ८।४८ सं० ८।५४)

अप्प्स्वन्तरा [13] सु षाव् (पद० १९।२ सं० १९।२)

भुवना`[14] सीषधाम (पद० २५।४४ सं० २५।४६)

दु ष्टर॒स्तरन्[15] (पद० ९।३६ सं० ९।३७)—तस्य टः, जितसंज्ञकत्वात् सोष्मत्वाच्च[16] थस्य ठः । स्थितोपस्थिते तु[17]—

१. सूत्रस्थाने ३।५५ ज.
२. त्यत्र ख. घ. ज.
३. 'धकारो' स्थाने घो ज.
४. वृहतीम् क. एव
५. 'स्थितो''''क्षन्' पाठः नास्ति घ.
६. सूत्रस्थाने ३।५६ ज.
७. सुः ख.
८. सात् घ.
९. षात्परौ ज.
१०. द्यते घ. क.
११. व्रजङ्गच्छ नास्ति ख. ज.
१२. अभिधीतः नास्ति ख. ज.
१३. अप्स्वन्तरा नास्ति ख. ज.
१४. भुवना नास्ति ख. ज.
१५. तरत् क. घ. नास्ति ख. ज.
१६. च्चास्य पाठः क. घ.
१७. तु नास्ति ख. ज,

गोस्थानमिति गो । स्थानम्[1] (पद० १।२५)
परमे स्थीति परमे । स्थी[2] (पद० ८।४८)
दुस्तर इति दु । त[3]रं (पद० ९।३६)
सुसावेति सुसावं (पद० १९।२)
सीसधामेति सीसधाम (पद० २५।४४)
'तस्मादित्युत्तरस्य' (ज्यो० ९१ प्रा० १।१३५) इत्यवहितस्य[4] । तेन—
प्रेषितं (पद० २१।५७ सं० २१।६१) इत्यत्र तकारस्य मूर्द्धन्यो न ।

## [२७८] अ[5]नुस्वाराच्च[6] तत्पूर्वात् ।३।५७।।

भाविपूर्वादनुस्वारात् परः सकारः [7]षकारमापद्यते ।
तपूंष्यग्ने[8] (पद० १३।८ सं० १३।९)
पुरोडाशैं हवींष्या[9] (पद० १९।१८ सं० १९।२०)
तत्पूर्वात् किम्[10]—
क्वा[11]म्मनांसि (पद० १२।५० सं० १२।५८)

## [२७९] क[12]-रे[13]फाभ्यां च ।३।५८।।

ककार[14]-रेफाभ्यां च परः सकारः ष[15]कारमापद्यते । ऋक्षु (नास्ति पद-संहितापाठयोः)
वनर्षदं ÷ (पद० ३३।१ सं० ३३।१)

---

१. स्थान ज.
२. स्थो ज.
३. दुस्तरः ख. ज.
४. तस्या घ.
५. सूत्रस्थाने ३।५७ ज.
६. च्चा घ.
७. सका घ.
८. तपू ं ष्यग्ने घ. तपूंषि एव ख. ज.
९. हवींषि एव ख. ज.
१०. म् नास्ति घ.
११. वाम् नास्ति ख. ज. वा घ.
१२. सूत्रस्थाने ३।५८ ज.
१३. रैफा घ.
१४. करेफा ज. ककारेफा घ.
१५. सका. घ.

अनुस्वारात् क[1]काराच्च परस्य ष[2]त्वं व्याकरणात्[3] सिद्धम्, अत्र लेखनं तु—

हिꣳसी[4] (पद० ३।६२ सं० ३।६३)

ऋृक्सामयोः[5] (पद० ४।९ सं० ४।९)

इत्यादिनिषेधस्य वक्ष्यमाणत्वात्[6] प्राप्तिप्रदर्शनार्थम्[7]।

**[२८०] नेः[8] सीदतेः ।३।५९।।**

नेः परः सी[9]दधातोः सकारः [10]षकारमापद्यते।

ए[11]दं बर्हिर्निषीदत (पद० ७।३२ सं० ७।३४)

**[२८१] [12]ससाद च ।३।६०।।**

नेः परः ससादेति सकारः षकारमापद्यते। [13]एतस्य 'सद्'धातुज[14]त्वात् स्पष्टार्थम्।

नि षसाद[15] धृतव्रत[16] (पद० १०।२५ सं० १०।२७)

**[२८२] ओकारात् सु ।३।६१।।**

ओकारात् परः सु-सकारः षकारमापद्यते।

मो षू णः (पद० ३।४५ सं० ३।४६)

---

१. फका. ज.
२. सत्यं घ.
३. रणसिद्धं क. घ.
४. हिꣳ सि घ.
५. ऋक्षुषामयोः घ.
६. त् नास्ति ज.
७. पदर्शनार्थं ज.
८. ने सी. घ.
९. सद क. ख.
१०. सका. घ.
११. एदं बर्हिर् नास्ति ख. ज. बर्हिषीदत घ.
१२. सूत्रस्थाने ३।६० ज.
१३. 'एतस्य' प्रकृति मोषूणः' इत्यतः पूर्वं
१४. नास्ति पाठः ज.
१५. धातुकत्वा घ. धातुत्वा क. षषाद घ.
१६. व्रनः ख.

[२८३] [1]उश्चापृक्तात् ।३।६२।।

अपृक्तादुकारात् परः 'सु'सकारः[2] षकारमापद्यते ।

[3]ऊर्ध्वं ऊ षु णः (पद० ११।३९ सं० ११।४२)

[२८४] अभेश्च ।३।६३।।

अभेः परः 'सु' सकारः षकारमापद्यते ।

अभीषुणः (पद० २७।४० सं० २७।४१)

[२८५] [4]परेः सि[5]ञ्चतेः ।३।६४।।

परेः परः सि[6]ञ्चतेः सकारः षकारमापद्यते ।

परिषिञ्चन्ति[7] (पद० २०।२२ सं० २०।२८)

[२८६] [8]अभेश्च ।३।६५।।

अभेः परः सिञ्चतेः[9] सकारः षकारमापद्यते ।

अभिषिञ्चामि (पद० ९।२९ सं० ९।३०)

[२८७] [10]अव्यवहितोऽपि ।३।६६।।

अभेः परः[11] अकारव्यवहितोऽपि सिञ्चतेः सकारः षकारमापद्यते ।

मित्रावरुणा[12]वभ्यषिञ्चन् (पद १०।१; सं० १०।१ ) ।

[२८८] वेर्युदयः[13] ।३।६७।।

वेः पर[14]भूतो यकारपरः सकारः[15] षकारमापद्यते ।

---

१. सूत्रस्थाने ३।६३ ज.

२. पदमिदं नास्ति घ.

३. ऊर्ध्वः नास्ति ख. ज., उर्ध्वः घ.

४. सूत्रस्थाने ३।६४ ज.

५. षिञ्चतेः घ.

६. सिं इत्येव ख.

७. ञ्चति घ. क.

८. सूत्रस्थाने ३।६५ ज.

९. ञ्चतः ज.

१०. सूत्रस्थाने ३।६६ इत्येव ज.

११. परो क. घ.

१२. 'मित्रावरुणाव्' नास्ति ख. ज.

१३. सूत्रस्थाने ३।६७ इत्येव ज.

१४. परो ज. ग. परिभूतो क.

१५. कारः ज. ग. पकार क.

विष्व्याम्या[1]यु॒षो॒ न मध्यात् (पद १२।५६ सं० १२।६५) यु[2]दयः किम्—
विस्व॒ङ् पश्य॒[3] (पद० ७।४१ सं० ७।४५)

[२८९] हेर्मि-थोदयः ।३।६८।।

हेः प[4]रभूतो मकारपरः थकारपरश्च[5] सकारः षकारमापद्यते[6] ।
हि ष्मा ते[7] (पद ३।४५ सं० ३।४६;)
आपो॒ हि ष्ठा (पद ११।४७; सं० ११।५०)

[२९०] द्यवेश्च ।३।६९।।

द्यविशब्दात्परः थकारोदयः सकारः[8] षकारमापद्यते । मकारस्तु ( ज्यो० २८९ शु० प्रा० ३।६८) असम्भवान्न संबद्धयते[9] ।
उप॒ द्य॑[10]वि॒ ष्ठ (पद० ३३।४८; सं० ३३।५३)

[२९१] नेः[11] स्त्या-स्तनोः ।३।७०।।

निशब्दात् परः स्त्या[12]—स्तन-संबन्धी[13] सकारः षकारमापद्यते । 'नि-[14] + स्त्यायताम्, निः[15]+स्तनिहि' इति स्थिते[16] 'लुङ्[17] मुदि जित्परे' (ज्यो० २३९ शु० प्रा० ३।१३) इति विसर्गलोपे कृते[18] सस्य षः ।

---

१. विष्यामि इत्येव ख. ज.
२. व्युदयः ज.
३. पश्य नास्ति ख.
४. परि ख. परो ज. ग. परी क.
५. थका....च नास्ति ज. ग.
६. इत उत्तरं 'मापद्यते' पर्यन्तं पाठो नास्ति क. घ.
७. विष्यामि इत्युदाहरणम् ज.
८. सकरः ज.
९. घ्यते ख.
१०. द्य नास्ति ज.
११. ने स्त्या ख. क.
१२. स्त्या नास्ति घ. क.
१३. बन्धि घ. क.
१४. निरस्त्या क. घ.
१५. निस्त घ निः नास्ति ज.
१६. षु ज. ख.
१७. लुङि ज.
१८. कृते नास्ति घ.

आ[1]प्यायतां निष्ट्या[1]यताम् (पद ६।१३; सं० ६।१५)
निष्टनिहि (पद० २९।५६; सं० २९।५६)

## [२६२] ततक्षौ ।३।७१।।

'नि' [2]इत्य[3]स्मात्परः सकारः षकारमापद्यते ततक्षौ परे। 'त-थयोः '(ज्यो० १९३ शु० प्रा० ३।१६६) इति सस्य षः।

स्वधया निष्टतक्षुः (पद० १९।८५ सं० १७।६२)

## [२६३] अनोः[4] स्तुवन्त्याम् ।३।७२।।

अनोः परः स्तुवन्ति-सकारः षकारमापद्यते।
अनुष्टुवन्ति पूर्वथा[5] (पद० ३३।८७ सं० ३३।९७)

## [२९४] [6]दुःस्वप्न्यम् ।३।७३।।

इदं कृतषत्वं निपात्यते।
दुःस्वप्न्यंसुव (पद ३५।१० सं० ३५।११) स्थितोपस्थिते तु[7]—
दुःस्वप्न्यमिति दुः। स्वप्न्यम्[8] (पद ३५।१०)

## [२९५] वन्दारुर्माकिः ।३।७४।।

एतयोः सकारः[9] षकारमापद्यते। [10]इह (ज्यो० २७६-२९५ शु० प्रा० ३।५६-३।७४) यानि विसर्गान्तानि पदानि तेषां 'त-थयोः सम्' (ज्यो० १९३ प्रा० ३।१६६) इति सत्त्वे जाते षः।

वन्दारुष्टे (पद० १२।३५ सं० १२।४२)
माकिष्टे (पद० १३।१०;सं० १३।११ )

## [२९६] सहेः पृतनायाः ।३।७५।।

पृतनाशब्दात् परः सहेः सकारः षकारमापद्यते।

---

१. आप्यायतां क एव.
२. निः इत्य घ.
३. इत्यत्यस्मा ज.
४. नोस्तु ज. क.
५. पूर्वथा नास्ति ख. ज.
६. दुस्वप्न्यम् ज.
७. तु नास्ति ज.
८. अत्र 'एतयोः सकारः षकारमापद्यते' इत्यधिकः ख. पाठः लेखकप्रामादिकः.
९. कारं ज.
१०. 'इह'....'सत्वे जाते षः' पाणे नास्ति ज 'इह'....'मापद्यते' नास्ति क. घ.

पृतनाषाह्या'य च (पद १८।६२; सं० १८।८६)
स्थितोपस्थिते—
पृतनास[1]ह्यायेति' पृतना। स[2]ह्या'य (पद १८।६२ सं० १८।६८)
अभाविपूर्वाद[3]प्राप्ते (सू० २७६ शु० प्रा० ३।५६) विधिः।

## [२९७] सधिर ꣳ शु-रदितिः।३।७६॥

एतेषां त्रयाणां सकारः षकारमापद्यते।
अप्स्वग्ने[4] सधिष्टव (पद १२।३१; सं० १२।३६)
अꣳशुरꣳशुष्टे (पद ५।७; सं० ५।७)
अदि'तिष्टे (पद ११।५६; सं० ११।५९)

## [२९८] वायु-रग्नि-रग्ने—रेकाक्षरे।३।७७॥

एतेषां[5] त्रयाणां सकारः एकाक्षरे पदे[6] षकारमापद्यते।
व्वायुष्ट्वा प[7]चतैः (पद २३।११; सं० २३।१३)
अग्निष्टेधि'पतिः[8] (पद १३।२७; सं० १३।२४)
अग्नेष्ट्वा तेज'सा[9] (पद १३।१२; सं० १३।१३)

एकाक्षरे किम्—
अग्निस्तिग्मेन' (पद १७।१५ सं० १७।१६ )
अग्नेस्तनूः (पद १।१५; सं० १।१५)

## [२९९] सकारपरे च।३।७८॥

भाव्युपधः सकारः सकारपरे एकाक्षरे पदे परे[10] षकारमापद्यते।
अवतत्य[11] धनुꣳष्ट्व[12]ꣳ सह'स्राक्ष[13] (पद. १६।१३ सं० १६।१३)

---

१. नासाह्या घ.
२. नासाह्या घ.
३. पूर्वात् प्रा ज. अभावि नास्ति घ.
४. अप्स्वग्ने नास्ति ख. ज,
५. एषां ज.
६. परे घ.
७. 'पचतैः'''अग्नेष्ट्वा' पाठो नास्ति घ. प्चतैः नास्ति ज.
८. .धिपतिः नास्ति ज.
९. तेजसा नास्ति ज.
१०. परे नास्ति क. घ.
११. अवतत्य नास्ति ख. ज.
१२. नुष्वम् क.
१३. सहस्राक्ष नास्ति क. घ,

सकारपरे किम्—
सुवितुस्त्वा प्रसुवे (पद. १।३१ सं० १।३१)

[३००] मातृभि-र्र्चिभिः–पायुभि–र्वरूत्रीः[1] ।३।७९।।

एतेषां चतुर्णां सकारः[2] षकारमापद्यते ।
सꣳसृज्य[3] मातृभिष्ट्वम् (पद० १२।३२ सं० १२।३८)
शिवेभि[4]र्र्चिभिष्ट्वम् (पद० १२।२८ सं० १२।३२)
अदब्धेभिः सवितः[5] पायुभिष्ट्वम् (पद० ३३।६२ सं० ३३।६९)
व्वरूत्रीष्ट्वा (पद० ११।५८ सं० ११।६१)

॥ इति नतिविधानम् ॥

## अथ नत्यपवादप्रकरणम्

[अधिकार सूत्रम्]

[३०१] प्रकृत्या[6] नानापदस्थे तकारे ।३।८१।।

अधिकारोऽयम् ।

[षट्त्रिंशत्सकाराणां प्रकृतिभावविधानम्]

[३०२] [7]अनुसन्तनोतु-बृहस्पतिसुतस्य-सुसमिद्धायसुसन्दृश-मभिसत्वा[8]भिसंविशन्तु- सुसस्याऽ- अतिस्थूल- म्मुसले- पत्नीसँय्याजान्- क्रतुस्थला ञ्जिसक्क्थो- दिविस्पृशा- हृदिस्पृश[9]ꣳ- हिꣳसी- ऋंक्सामयो- ऋक्क्सामाभ्यां- तित्तिरिः सीसेन-सीसाः[10]-सीसं पशुसनि- गोसनि-प्रतिसदृङ्-प्रतिसदृक्षासश्च्च[11]तुस्त्रिꣳशत् ।३।८२।।

---

१. वरुत्रीः ज.
२. कारष ज.
३. सꣳसृज्य नास्ति ख. ज.
४. शिवेभिः नास्ति ख. ज.
५. अदब्धेभिः सवितः नास्ति ख. ज.
६. प्रकृत्या इत्येव सूत्रम् ज.
७. ज.—अनुसन्तनीत्वित्यादि० ३।८२ इत्येव
८. सन्त्वा क.
९. स्पृशं घ.
१०. सीसाः नास्ति घ.
११. श्चतु द्विरावृत्तं घ.

एते ष[1]ट्त्रिंशत्[2] ? (षड्विंशतिः) सकाराः प्रकृत्या भवन्ति।
'हि ँ सीः' (पद० ३।६२ सं० ३।६३) इत्यत्र 'अनुस्वाराच्च'।
(ज्यो० २७८ प्रा० ३।५७) इति प्राप्तिः। 'ऋक्साम' (पद० ४।९ सं० ४।९,१)
इति द्वयोः[3] (उद० १६-१७) 'क-रेफाभ्यां च' (ज्यो० २९१ प्रा० ३।५८) इति[4]।
'तित्तिरिस्ते सर्पाणाम् (पद २४।३६
सं० २४।३६) इत्यत्र सकारपर' (ज्यो० प्रा० ) इति।
अन्यत्र समानपदत्वात् (ज्यो० प्रा० )।

चतुस्त्रिँशदिति किम्—
ध[5]र्त्रश्चतु ष्टोमं ÷ (पद० १४।१ सं० १४।२३)
—अत्र 'लुङ् मुदि[6]' (ज्यो० २३९ प्रा० ३।१३) इति विसर्गलोपे 'भाविभ्यः'
(ज्यो० २७६ प्रा० ३।५६) इति षत्वं[7] भवति।
वीर्य्यं पुत्रोनुसन्तनोतु[8] (हौत्रसूत्र )
बृहस्पतिं सुतस्य (पद० ८।८ सं० ८।९)
सुसंमिद्धाय शोचिषे[9] (पद० ३।२ सं० ३।२)
सु सन्दृशंन्त्वा (पद० ३।५१ सं० ३।५२)
अभिसत्वा सहौजा (पद० १७।३४ सं० १७।३७)
दे वाऽ अभि संविशन्तु (पद० १३।२३ सं० १३।२५)
स सस्याः क्रृषीस्कृधिं (पद० ४।१० सं० ४।१०)
[10]अतिंस्थूलञ्चातिंक्रशम् (पद० ३०।२० सं० ३०।२२)
ऊलूखले मुसले (का० श्रौ० ३।८।१)
[11]शय्युना पत्नीसंयाजान् (पद० १९।२७ सं० १९।२९)
पुञ्जिकस्थला च क्रतुस्थला च[12] (पद० १५।१५ सं० १५।१५)
शितिकक्षो ञ्जिसक्थः[13] (पद० २४।४ सं० २४।४)

---

१. सप्त घ.
२. त्रिंशदिति सर्वेषु पुस्तकेषु। उचितं तु विंशतिरिति.
३. द्वये क. घ
४. इत उत्तरं 'पर इति' पर्यन्तं पाठो नास्ति घ.
५. धत्रं नास्ति ज. ख.
६. मुद् घ.
७. सत्वं घ.
८. इतः परमुदाहरणानि न सन्ति सूत्रे ज.
९. शोचिषे नास्ति क. घ. इत उत्तरं 'एवं सर्वत्र' इति विलिख्य सूत्रस्य वृत्तिः समापिता ख.
१०. ८-९ उदाहरणद्वयं नास्ति घ.
११. संयु क.
१२. च नास्ति घ.
१३. सक्थ्यः क.

बृहता दिविस्पृशा (पद० १५।२३ सं० १५।२७)

भद्रꣳ हृदिस्पृशम् (पद० १५।४० सं० १५।४४)

एनꣳ हि ꣳसीः (पद० ४।१ सं० ४।१)

ऋक्वसामयोꣳ शिल्पे (पद० ४।९ सं० ४।९)

ऋक्सामाभ्याꣳ सन्तरन्तꣳ (पद० ४।१ सं० ४।१)

तित्तिरिस्ते सर्प्पाणाम् (पद० २४।३६ सं० २४।३६)

सीसेन तन्त्रम् (पद० १९।७८ सं० १९।८०)

हरिणीꣳ सीसायुजः[1] (पद० २३।३५ सं० २३।३७)

सीसञ्च मे (पद० १८।१३ सं० १८।१३)

प्रजासनि पशु सनि (पद० १९।४६ सं० १९।४८)

यो गोसनिꣳ (पद० ८।११ सं० ८।१२)

प्रति सदृङ् (पद० १७।७४ सं० १७।८१)

प्रति सदृक्षास एतन (पद० १७।७७ सं० १७।८४)

चतुस्त्रिꣳशद्वाजिन ÷ (पद० २५।३९ सं० २५।४१)

[उदयमुखेन सकारप्रकृतिभावविधानम्]

**[३०३] ऋकार–रेफा–रुदयश्च[2] ।३।८३।।**

ऋकारः रेफः अर् इत्ये[3]तदुदयत्वेन च यः परः सकारः [स] प्रकृत्या ।

तिसृभिरस्तुवत[4] (पद० १४।२३ सं० १४।२८)

तिस्रश्च[5] मे (पद० १८।२४ सं० १८।२४)

वाचो[6] विसर्जनम् (पद० १।१५ सं० १।१५)

[षट्सकाराणां प्रकृतिभावविधानम्]

**[३०४] पृथिवी–दिव्यु–परि[7]–चर्षणि–शकुनि–यासिभ्यः ।३।८४।।**

---

१. युजः नास्ति घ.

२. च नास्ति क. ऋकार-रेफोरुदयः इति ख. ज.

३. इत्येतद् नास्ति क. घ. 'उदयत्वेन च यः' नास्ति ज.

४. अस्तुवत नास्ति ख. ज.

५. च मे नास्ति ख. ज.

६. वाचो नास्ति ख.

७. परीति' सूत्रस्वरूपं ज.

एतेभ्यः षड्[1]भ्यः संकारः प्रकृत्या ।
पृथिवि[2]सदन्त्वा[3] (पद० ९।२ सं० ९।२)
दिविसदंन्त्वा[3] (पद० ९।२ सं० ९।२)
उपरिसदौ दुवंस्वन्त[4]ᳯ (पद० ९।३५ सं० ९।३६)
चर्षणीसहां व्वेतु[5] (पद० २८।१ सं० २८।१)
शकुनिसादेनं कू्र्म्मान्[6] (पद० २५।३ सं० २५।३)
अवं[7]यासिसीष्ठाᳯ (पद० २१।२ सं० २१।३)

॥ इति नतिमहाप्रकरणे षत्वप्रकरणम् ॥

## ❀ नतिमहाप्रकरणे णत्वविधानम् ❀

### [औत्सर्गिकं णत्वविधानम्]

**[३०५] ऋ–ष–रेभ्यो नकारो[8] णकारᳯसमानपदे ।३।८५॥**

**[३०६] [9]स्वर–य–व–ह–क–पंश्च ।३।८६॥**

ऋकार-षकार-रेफेभ्यः परः स्वर-यकार-वकार-हकार-कव[10]र्ग-पवर्गव्यवहितोऽपि नकारो णकारमापद्यते समानपदे। 'तस्मादित्युत्तर[11]स्य' (ज्यो० ९१ प्रा० १।१३५) इत्युक्तत्वाद्[12] व्यवधाने अप्राप्तत्वाद्[13] वचनादेतैर्व्यस्तैर्यथासम्भवमिलितैश्च व्यवायेऽपि[14] भवति, नान्यैः।

नृ मणांᳯ (पद० १२।१७ सं० १२।१८)
पुरीषवाहंणᳯ (पद० ११।४१ सं० ११।४४)

---

१. षट्भ्यः ख.
२. थिवीस ज.
३. त्वा नास्ति ख. ज.
४. दुवस्वन्तः नास्ति ख. ज.
५. वेतु घ. वेत्तु नास्ति ख. ज.
६. कूर्मान् नास्ति ख. ज.
७. अव नास्ति ख. ज. वासि ज.
८. कार इति सूत्रम् ज.
९. नैतत्सूत्रं दृश्यते ज.
१०. वर्गाप क.
११. त्तस्य क.
१२. क्त त्वादव्य घ.
१३. त्वाद् नास्ति. ख. ज. 'तद् वचना' नास्ति क. घ.
१४. अपि नास्ति क. घ.

प्रवाहं॑णꣳ (पद० ५।३१ सं० ५।३१)

स्थितोपस्थिते तु—

नृ मना॒ऽ इति॒ नृ । मनाꣳ (पद० १२।१७)
पु॑रीष॒वाहं॑न॒ऽ इति॒ पुरीष॒ । व्वाहं॑नꣳ (पद० ११।४१)
प्र॒वाहं॑न॒ऽ इति॒ प्र॒ । व्वाहं॑नꣳ (पद० ५।३१)

एतैः किम्—

र॒श्मिना॑ (पद० १५।६ सं० १५।६)
रसे॑न[1] (पद० १।२१ सं० १।२१)
रु॒चा॒नꣳ (पद० १२।१ सं० १२।१)
रथे॑न (पद० १७।३३ सं० १७।३६)

[प्रनिमित्तकणत्वविधानम्]

## [३०७] प्र नेति–नुदति–हिनोमीनाम् ।३।८९॥

प्रेत्ये[2]तस्मान् नी[3]-नुद्धात्वोः हिनोमिशब्दस्य च नकारो णकारमापद्यते ।
प्र णं॑य देव॒व्यम्[4] (पद० ११।६ सं० ११।८)
प्र णु॑दानः (पद० १५।१ सं० १५।१)
प्र हिं॑णोमि (पद० ३५।१५ सं० ३५।१९)

[नस्यप्रकृतिभावप्रकरणम्]

[नत्वोयप्रकृतिभावाधिकारसूत्रम्]

[पदान्तीयस्य णत्वापवादः]

## [३०८] प्रकृत्या पदान्तोयः ।३।९०॥

पदान्तीयो नकारः प्रकृत्या भवति ।
पू॒ष॒न् (पद० ३४।१० सं० ३४।४१)
अक्र॒न्[5] (पद० ३।४६ सं० ३।४७)
अ॒र्व्वन्[6] (पद० ११।४१ सं० ११।४४)
पि॒तृ॒न् (पद० २।३२ सं० २।३४)

---

१. सैरेन ख. रथ्येन क. घ
२. त्येत स्थाने त्य ख. ज.
३. न्नो घ.
४. देवाव्यं नास्ति ख. ज.
५. नास्ति घ.
६. घ एव

[चतुर्षुणत्वापवादः]

## [३०९] नी[1]-वनि-नसः-प्रपीनम् ।३।९१।।

ऋ-ष-रेभ्यो नी[2]-वनि-नस इत्येषां प्रपीनमित्ययं च[3] नकारः प्रकृत्या ।
धूम्रा[4] बभ्रुनी'काशाः (पद० २४।१८ सं० २४।१८)
रायस्पोषवनि[5] (पद० ५।२७ सं० ५।२७)
ब्रह्मवनिं त्वा क्षत्रवनिं[6] (पद० १।१७ सं० १।१७)
वाध्री[7]नसस्ते[8] (पद० २४।३९ सं० २४।३९)
प्रपी'नमग्ने[9] (पद० १७।८० सं० १७।८७)

[माध्यन्दिनीयशाखायां णत्वापवादनिर्देशः]

## [३१०] श्रोमना इत्येके ।३।९२।।

एकशब्दो मुख्यवाचो । अयं च[10] निपात्यते ।
श्रोमं'नाः शतपं'याः (पद० १७।५२ सं० १७।५६)

[अष्टसु पदेषु णत्वापवादः]

## [३११] इन्द्राग्नी[11] चित्रभानो वार्त्रघ्नं दुष्वप्न्यं ध्रुवयोनिः पुरोनुवाक्याभिः पुरोनु[12]वावाक्याश्चर्मम्नम् ।३।९३।।

एतान्यष्टौ निपात्यन्ते[13] ।
इन्द्राग्न्योरुज्जि'तिम् (पद० २।१५ सं० २।१५)
इन्द्राया'हि चित्रभाना सुता (पद० २०।७८ सं० २०।८७)
इन्द्रस्य वार्त्रघ्नमसि (पद० १०।८। सं० १०।८)

---

१. नि क. घ. ज.
२. नि क. घ. ज.
३. च नास्ति क. घ.
४. धूम्रा नास्ति ख. ज.
५. नास्ति घ. क.
६. एतदुदाहरणं नास्ति ख. ज.
७. ध्रीं क. ध्री ज.
८. ते नास्ति ख. ज.
९. प्रपीन मोनस्च घ.
१०. अयं च स्थाने अन्यत्र घ.
११. इन्द्राग्नी इत्येव सूत्रम् ज.
१२. पुरोऽनुवा. घ.
१३. उदाहरणानि न सन्ति ख. ज.

दुः ष्वप्न्यं ६. सुव (पद० ३५।१० सं० ३५।११)
ध्रु वक्षितिध्रु वयोनिः (पद० १४।१ सं० १४।१)
ऋचः पुरोनुवाक्याभिः (पद० २०।११ सं० २०।१२)
पुरोनुवाक्यायाज्याभिः (पद० २०।११ सं० २०।१२)
साद्ध्येभ्यश्चर्म्मन्नम् (पद० ३०।१३ सं० ३०।१५)

[तवर्गोदये णत्वापवादः]

[३१२] तवर्गे च ।३।८४।।

ऋ-ष-रेभ्यः[1] परो [2]नकारः प्रकृत्या [3]तवर्गे [4]परे।
तृम्पन्तु होत्राः[5] (पद० ७।१४ सं० ७।१५)
अव क्रन्देन तालु[6] (पद० २५।१ सं० २५।१)
क्रन्दते (पद० २२।७ सं० २२।७)

[ऋकारोदये णत्वापवादः]

[३१३] षादनन्तर ऋकारे ।३।८५।।

षात् परो[7] नका[8]रः प्रकृत्या ऋकारे परे।
उग्र[9]स्त्वेष नृ[10]म्णः (पद० ३३।७१ सं० ३३।८०)

[त्रयोदशसु णत्वनिपातनम्]

[३१४] निषण्णाय–रथवाहण[11]–मिन्द्रऽ एणं–परिणीयते–समिन्द्र णऽ–उरुष्या णो-रक्षाणः-षु णः[12]-षूणः[13]-षुणासत्या–स्वर्णा-[14]वस्थूरि णौ-प्र णऽ आयूंषि ।३।८७।।

---

१. म्यो क. घ.
२. व क.
३. ग क.
४. र्गप ज.
५. होत्राः नास्ति. ख. ज. ग.
६. नैतदुदाहरणम् ख. ज.
७. पुरो ख.
८. नकरः ज.
९. उग्रः नास्ति ख. ज. ग.
१०. न्नृम्णः ज.
११. णमिति एतावत्सूत्रम् ज.
१२. षुणः नास्ति क.
१३. षूणः नास्ति घ.
१४. व नास्ति क.

एतानि त्रयोदश निपात्यन्ते ।

निषंण्णाय् स्वाहा[1] (पद० २२।८ सं० २२।८)

र॒थ॒वाहंणम् (पद० २९।४५ सं० २९।४५)

इन्द्रं एणम् (पद० २९।१३ सं० २९।१३)

परिंणीयते क॒विः[2] (पद० ३३।६६ सं० ३३।७५)

समिंन्द्र ण॒ो मनंसा[3] (पद० ८।१३ सं० ८।१५)

उ॒रु॒ष्या णो'[4] अघायु॒तः? (पद० ३।२६ सं० ३।२६)

रक्षां णो ब्रह्मणस्पते (पद० ३।३० सं० ३।३०)

मो षू णंः (पद० ३।४५ सं० ३।४६)

अ॒भी षु ण॒ः (पद० २७।४० सं० २७।४१)

गोमंदू षु णांस॒त्या (पद० २०।७२ सं० २०।८१)

स्वर्ण्णं घ॒र्म्मं? (पद० १८।४६ सं० १८।५०)

अ॒स्त्थू रि णौ॒ (पद० २।२७ सं० २।२७)

प्र ण॒ आयूंᳪषि (पद० २३।३० सं० २३।३२)

[5]स्थितोपस्थिते तु[6]—

निसंन्नायेति॒ नि । संन्नाय । (पद० २२।८)

र॒थ॒वाहं॒न॒मिति रथ॒ । वाहंनम् (पद० २९।४५)

॥ इति णत्वप्रकरणम् ॥

॥ इति नतिमहाप्रकरणम् ॥

## ❀ अथ दीर्घप्रकरणम् ❀

[दीर्घाधिकारसूत्रम्]

[३१५] दीर्घम् ।३।९७॥

अधिकारोऽयम् ।

---

१. स्वाहा नास्ति ख. ग. ज. । इत उत्तरं नोदाहरणानि ख. ज. अपि तु 'एवं सर्वत्र ज्ञेयम्' इत्युपलभ्यते ख. ज.

२. कविः नास्ति घ.

३. मनसा नास्ति घ.

४. अघायत इत्येव घ.

५. इत आरभ्य पाठो वर्तते ख. ग. ज.

६. तु नास्ति क. घ.

[पञ्चविंशतिदीर्घविधानसूत्रम्]

**[३१६] अश्व-रश्मि-मति-सुमति[1]-श्व-सुत-चारय-घृणि-सेदिमे-न्द्रिय-धारय-चित्र-भङ्गुर-वयुना-श्वस्य-हृदय-घुष्य-ता-भ्य-वता-ध्यर्च-शक्ति-पुरु-शचि[2] वकारे ।३।९६।।**

एते पञ्चविंशतिर्ह्रस्वा[3] दीर्घमापद्यन्ते[4] वकारे परे ।

अश्वावतीम्[5] (पद० १२।७२ सं० १२।८१)

रश्मीवतीम् (पद० १५।५२ सं० १५।६३)

मतीविदे सुमतीवृधः (पद० २२।११ सं० २२।१२)

श्वाविद् भौमी[6] (पद० २४।३३ सं० २४।३३)

सुतावतः (पद० २०।७९ सं० २०।८८)

चारया व्वृषन् (पद० २३।१९ सं० २३।२१)

घृणीवान् (पद० २४।३९ सं० २४।३९)

सेदिमा व्वयम् (पद० २५।१३ सं० २५।१५)

इन्द्रियावान् (पद० ६।२५ सं० ६।२७)

धारया व्वसूनि (पद० ६।७ सं० ६।८)

चित्रावसो (पद० ३।१८ सं० ३।१८)

भङ्गुरावताम् (पद० ११।२३ सं० ११।२६)

व्वयुनाविदेकः[7] (पद० ५।१४ सं० ५।१४)

अश्वस्या व्विशस्ता (पद० २५।४० सं० २५।४२)

हृदयाविधश्चिच्चत्[8] (पद० ८।१७ सं० ८।२३)

परुष्परुरनु[9] घुष्ष्या व्विशस्ता[10] (पद० २५।३९ सं० २५।४१)

---

१. मतीति सूत्र समाप्तिः ज.

२. ची ख.

३. तिर्ह्रस्वा क. घ. ज.

४. ते ख.

५. इत उत्तरम् 'इत्यादि सूत्रोदाहरणम्' इति ज. नोदाहरणानि सन्ति.

६. भौमी नास्ति ख.

७. एकः नास्ति ख.

८. चित् नास्ति ख.

९. परु....रनु नास्ति ख.
परुष्परुः नास्ति क.

१०. विशस्ता नास्ति घ.

 

ऋतावानम्महिषम्[1] (पद० १२।१०२ सं० १२।१११)
अभीवर्तं६ (पद० १४।१९ सं० १४।२३)
प्रा[2]वंताव्वचं÷ (पद० १२।७९ सं० १२।८८)
अधीवासंय्या[3] (पद० २५।३७ सं० २५।३९)
अर्चा व्विश्वानंराय (पद० ३३।२० सं० ३३।२३)
शक्कुत्तीवन्तो गभीरा?[4] (पद० २९।४६ सं० २९।४६)
इमाऽ उं त्वा[5] पुरूवसो (पद० ३३।७२ सं० ३३।८१)

[6]स्थितोपस्थिते तु—
अश्श्ववतीमित्त्यंश्श्व । व्वतीम् (पद० १२।७२)
रश्मिवतीमितिं रश्मिम् । व्वतीम्[7] (पद० १५।५२)
[8]मतिविदऽ इतिं मति । व्विदे (पद० २२।११)
सुमतिवृधऽ इतिं सुमति । व्वृधं÷ (पद० २२।११)
स्ववविदितिं श्श्व । व्वित् (पद० २४।३३)
सुतवंतऽ इतिं सुत[9] । व्वत[10]६ (पद० २०।७९)
घृणिवानितिं घृणि । व्वान् (पद० २४।३९)
इन्द्रियवानितीन्द्रिय । व्वान् (पद० ६।२५)
चित्रंवसोऽ इति चित्रं । व्वसो (पद० ३।१८)
भङ्गुरवंतामिति भंङ्गुर । व्वंताम् (पद० ११।२३)
व्वयुनविदितिं व्वयुन । व्वित् (पद० ५।१४)
हृदय[11]विधऽ इतिं हृदय । व्विधं६ (पद० ८।१७)

---

१. महिषम् नास्ति ख. ग. क.
२. प्र नास्ति ख.
३. या नास्ति ख.
४. गभीराः न ख, न्तः इति ख.
५. इमा उ त्वा नास्ति ख.
६. इतोऽस्ति पाठः ज.
७. इत उत्तरम् 'इत्यादि' इत्येव, न स्थितोपस्थितनिर्देशः ज. म् नास्ति क. घ.
८. 'मति''''व्वित्' पर्यन्तं पाठस्त्रुटितः घ.
९. सुता घ.
१०. वसः क.
११. दया घ.

ऋतवानमित्यृत । व्वानम् (पद० १२।१०२)
अभिवर्त्तऽ इत्यभि । व्वर्तं? (पद० १४।१९)
अधिवासमित्यधि । व्वासम्[1] (पद० २५।३७)
शक्तिवन्तऽ [2]इति शक्तिवं । व्वन्त (पद० २९।४६)
पुरुवसोऽ इति पुरु । व्वसो (पद० ३३।७२)
[3]शचीवसो (अन्यशारवीयम्) ।

[अश्वशब्ददीर्घापवादः]

## [३१७] नाश्व[4]वद्धिरण्या[5]त् ।३।९९।।

हिरण्यवच्छब्दात् परम् अश्व इति शब्दरूपं वत् इत्ये[6]तस्मिन् परे न दीर्घमापद्यते।
हिरण्य वदश्ववत् (पद० ८।५७ सं० ८।६३)

[अभिशब्ददीर्घापवादः]

## [३१८] अभि विख्ये[7]षं-वीर-विश्व[8]-वत्स-वृत्र-वाजयन्तेषु ।३।१००।।

'अभि' इत्ययं ह्र[9]स्वो विख्येष[10]मित्यादि[11] षट्सु न दीर्घमापद्यते ।
अभिविख्येष[12]म् (पद० १।११ सं० १।११)
अभि वीरोऽ अभि सत्त्वा[13] (पद० १७।३४ सं० १७।३७)
अभि विश्वे गृणन्त[14]÷(पद० २।१८ सं० २।१८)

---

१. वासः क. घ.
२. न्तमिति क.
३. इतोऽस्ति पाठः ज. शाची घ.
४. श्व घ.
५. ण्यवत् ज.
६. र्ता घ.
७. विष्येषं क. घ. ज.
८. विश्व घ.
९. ह्स्वो घ.
१०. विष्येष
११. वत्सु ज.
१२. विष्येषम् घ.
१३. अभिसत्वा नास्ति ख. ज.
१४. गृणन्तः नास्ति ख. ज.

अभि वृत्सन्न[1] (पद० २६।१० सं० २६।११)

अभिवृत्रम् (पद० १८।६२ सं० १८।६९)

अभि वाजयन्त६ (पद० १८।६७ सं० १८।७४)

[अनुक्तसङ्ग्रहार्थं दीर्घापवादनिर्देशः]

[३१९] अश्वस्य वाजिन इति च ।३।१०१।।

अश्वस्येति ह्रस्वो[2] वाजिन[3] इत्येतस्मिन् परे न दीर्घमापद्यते ।

अश्श्वस्य व्वाजिनं ÷ (पद० २३।३७ सं० २३।३७) ।

'इति च' इत्येवंविधा[4]न्योदाहरण[5]सूचनार्थम् । तेन—

अधिवक्ता (पद० १६।५ सं० १६।५) । इति न दीर्घः ।

[विश्वशब्ददीर्घविधानम्]

[३२०] विश्व सह-भुव-पुष-वसुषु ।३।१०२।।

नेति नानुवर्तते । [6]विश्वेत्ययं ह्रस्वः सहादिषु चतुर्षु दीर्घमापद्यते ।

व्विश्श्वासाहमवसे[7] (पद० ७।३४ सं० ७।३६) ।

व्विश्श्वानराय[8] व्विश्श्वाभुवे (पद० ३३।२० सं० ३३।२३) ।

उत[9] व्विश्श्वापुषम् (पद० २५।४३ सं० २५।४५)

गन्धर्व्वस्त्वा[10] व्विश्श्वावसुः (पद० २।३ सं० २।३)

स्थितोपस्थिते तु[11]—

व्विश्श्वस[12]हमिति विश्श्व । सहम्[13] (पद० ७।३४)

---

१. न नास्ति ख. ज.

२. ह्रस्वः ख. ज.

३. इत उत्तरं 'इत्ये....इति च' पर्यन्तं पाठो नास्ति घ.

४. विधोदा क. घ.

५. रणम् सू. घ.

६. श्व ख.

७. मवसे न ख. अवसे न ज.

८. विश्वानराय नास्ति ख. ज.

९. उत नास्ति ख. ज.

१०. गन्धर्वस्त्वा नास्ति ख. ज.

११. तु नास्ति ज.

१२. विश्वा घ.

१३. सह इत्येव क.

व्विश्श्वभुवऽ इति विश्श्व । भुवे[1] (पद० ३३।२०)
व्विश्श्व पुष[1]मिति विश्श्व । पुषम् (पद० २५।४३)
व्विश्श्ववसु रिति विश्श्व[2] । व्वसुः (पद० २।३)

[स्वरनिमित्तकदीर्घविधानम्]

## [३२१] तिष्ठाद्युदात्तम् ।३।१०४।।

आद्युदात्तं तिष्ठेति पदं दीर्घमापद्यते ।
तिष्ठा रथमधि यम्[3] (पद० १०।२० सं० १०।२२)
तिष्ठा देवो न सविता[4] (पद० ११।३९ सं० ११।४२)

आद्युदात्तं किम्—
आ[5] तिष्ठ व्वृत्रहन् (पद० ८।२८ सं० ८।३३)

[प्रशब्ददीर्घविधानम्]

## [३२२] प्र वण[6]—शृङ्ग—यासे[7]षु ।३।१०५।।

'प्र' इत्ययं ह्रस्वो वणादिषु त्रिषु दीर्घ[8]मापद्यते ।
प्रावणे[9]भिः सजोषस[10]ः (पद० १२।४३ सं० १२।५०)
प्राशृ[11]ङ्गा माहेन्द्रा[12]ः (पद० २४।१७ सं० २४।१७)
[13]प्रायासाय (पद० ३९।११ सं० ३९।११)

---

१. श्वयुष क.
२. विश्वा ज.
३. अधियम् नास्ति ख. ग. ज.
४. नैतदुदाहरणम् ख. ग. ज.
५. आ नास्ति ख. ग. ज.
६. वणः शङ्ग घ.
७. याशेषु क.
८. दीर्घ घ.
९. णोभिः घ.
१०. सजोषसः नास्ति ख. ग. ज.
११. शङ्गा घ.
१२. माहेन्द्राः नास्ति ख. ग. ज.
१३. अत्र 'आयासाय' इत्यधिकमुदाहरणम् क. घ.

स्थितोपस्थिते—

प्र॒व॒णेभि॒रिति॒ प्र[1] । व्व॒णेभिः (पद० १२।४३)

प्र॒शृ॒[2]ङ्गाऽ इति॒ प्र । शृ॒ङ्गा? (पद० २४।१७)

प्र॒य॒ासायेति॒ प्र[3] । य॒ासाय॑ (पद० ३९।११)

[नकारोदयदीर्घविधानम्]

**[३२३] धा[4]रयाम–योजाव[5]–सचस्वः–नुद–मोषु–जयतोरुष्य–रक्ष–यज–यच्छ–मत्सथ–पिपृत गायतातु येन नकारे ।३।१०८।।**

धारयाम इत्यादयः षोडश ह्रस्वाः नकारे दीर्घमापद्यन्ते[6] ।

धारयामा॒ नमो॑भिः (पद० १७।८३ सं० १७।९०)

योजा॒न्विन्द्र[7] (पद० ३।५१ सं० ३।५२)

अवा॑नो [8]दे॒व्या धि॒या[9] (पद० ११।३८ सं० ११।४१)

सचा॑स्वा नः स्व॒स्तये[10] (पद० ३।२४ सं० ३।२४)

प्रणु॑दानः स॒पत्ना॑न्[11] (पद० १५।१ सं० १५।१)

मोषूण॑÷ (पद० ३।४५ सं० ३।४६)

मो षु[12] किम्—

ऊ॒र्ध्व ऊ॒षुण॑÷ (पद० ११।३९ सं० ११।४२)

जयं॑ता नरः (पद० १७।४६ सं० १७।४६)

उ॒रु॒ष्या ण॑÷ (पद० ३।२६ सं० ३।२६)

रक्षा॑ णः (पद० ३।३० सं० ३।३०)

---

१. प्रा घ; प्रवणे । भिः क.

२. शङ्गा घ.

३. प्रा घ.

४. घा घ.

५. 'घा''''जावेति' एव सूत्रम् ज.

६. ते घ.

७. न्द ज.

८. दे ज.

९. धिया नास्ति ख.

१०. स्वस्तये नास्ति ख, ग. ज.

११. सपत्नान् नास्ति क. ग. घ. ज.

१२. पू क., षु नास्ति ज. ग.

यजा नो[1] मित्रावरुणा[2] (पद० ३३।३ सं० ३३।३)

यच्छा नꣳ शर्म्म[3] (पद० ३५।१७ सं० ३५।१; ३६।१३)

मत्संथा नो[4] व्विश्वं[5] (पद० ३३।३० सं० ३३।३४)

पिपृता निरवद्यात्[6] (पद० ३३।३८ सं० ३३।४२)

गायता नरꣳ (पद० ३३।५६ सं० ३३।६२)

आ तू[7] नं÷(पद० ३३।६४ सं० ३३।६५)

आ तु[8] किम्—

तु चेतु नो भवन्तु[9] (पद० ३३।८४ सं० ३३।९४)

येना नꣳ पूर्व्वे (पद० ३४।१७ सं० ३४।१७)

[नकारोदयभवदीर्घविधानम्]

[३२४] भव च ।३।१०९।।

अयं ह्रस्वो दीर्घमापद्यते नकारे परे ।

भवा न ꣳ (पद १२।१०५ सं० १२।११४)

[भवदीर्घविधानम्]

[३२५] सचा-वरुथ्य-वाजस्य-पायुषु च ।३।११०।।

भव इत्ययं[10] ह्रस्वः[11] सचादिषु चतुर्षु दीर्घ[12]मापद्यते ।

भवा सचा[13] (पद ३४।५५ सं० ३४।५६)

---

१. नः ज.

२. मित्रावरुणा नास्ति ख. ग. ज.

३. शर्म नास्ति ख. ग. ज.

४. नः ज.

५. विश्व नास्ति ख. ग. ज.

६. निरवद्यात् नास्ति ख. ग. ज.

७. तु. ज.

८. तू. क.

९. तु चे ज नः ज. भवन्तु नास्ति ख. ग.

१०. अयं न ग. ज.

११. स्वो ख. घ.

१२. घर्मा घ.

१३. सच क,

भ॑वा व्वरुथ्य॒÷(पद ३।२५ सं० ३।११)
भवा॒ वाजंस्य (पद १२।१०३ सं० १२।११२)
भ॑वा पा॒युः (पद १३।१० सं० १३।११)

[अवदीर्घापवादः]

## [३२६] नाऽवनयामि ।३।१०७।।

अव इत्ययं ह्रस्वो नयामि शब्दे परे न दीर्घं[1]मापद्यते।
[2]अव॑नयामि (पद ५।२५ सं० ५।२५)।

## [३२७] अपृक्तः सौ ।३।१११।।

उकारः सौ दीर्घमापद्यते।
म॒हीमू॒[3]षु (पद २१।४ सं० २१।५)

[रथिदीर्घविधानम्]

## [३२८] रथि तकारनकारयोः ।३।११२।।

'रथि'[4]इत्ययं ह्रस्वस्त[5]कार-नकारयो[6]र्दीर्घ॑मापद्यते।
र॒थीत॑म[7]ᳪ र॒थीनां॑ वा॒जाना॑म्[8] (पद १२।४८ सं० १२।५६)

स्थितोपस्थिते—
र॒थित॑म॒मिति॑ र॒थि। त॑मम्।
र॒थिना॒मिति॑ र॒थिना॑म्[9] (पद)

---

१. र्घमा घ.
२. 'अव''''द्यते' पर्यन्तं पाठो नास्ति घ.
३. भू षु. घ.
४. रथीता घ.
५. स्वका घ.
६. योः दी. ज. योदी घ.
७. तमम् घ. ज. क.
८. वाजानां नास्ति ख. ग. ज
९. रथि। नाम् क. नाम घ.

[यकारोदयदीर्घविधानम्]

**[३२९] अथो-दारिथ शो[1]च पनय सादय-र्जु वृष शत्रु सलक्ष्मा[2]-घा-घा-रात्यृ[3]-त भवत यकारे ।।३।११३।**

अथादयश्चतुर्दश ह्रस्वा यकारे दीर्घ[4]मापद्यन्ते[5] ।

मंद्ध्युम॑ध्ँ अथाय (पद० १२।१२ सं० १२।१२)

उदारिथा यजे (पद० १७।६९ सं० १७।७५)

बृ[6]हच्छोचा यविष्ठ्य[7] (पद० ३।३ सं० ३।३)

पंन[8]या य[9]जंम् (पद० १९।६२ सं० १९।६४)

सादया य[9]ज्ञम् (पद० ११।३२ सं० ११।३५)

ऋजूयताम् (पद० २५।१३ सं० २५।१५)

[10]वृषायमाणः (पद० २०।३९ सं० २०।४६)

शत्रूयतो [11]हन्ता (पद० १२।५ सं० १२।५)

स लंक्ष्मा यत्[12] (पद० ६।१८ सं० ६।२०)

आ घा ये (पद० ७।३० सं० ७।३२)

अ[13]घायत? (पद० ३।२६ सं० ३।२६)

अ[14]रातीयतः (पद० १२।५ सं० १२।५)

ऋतायते (पद० १३।२५ सं० १३।२७)

भंवता यजत्राः (पद० ३३।४७ सं० ३३।५१)

---

१. शौच घ 'शोचेति' सूत्रसमाप्तिः ज.
२. लक्ष्म क. घ.
३. रातृत क.
४. दीघमा घ
५. घते घ.
६. बृहत् नास्ति ख. ज.
७. विष्ठ्य घ.
८. पन्नया घ.
९. यजम् ज.
१०. नैतदुदाहरणम् ज.
११. यतः ज, हन्ता नास्ति ख. ज.
१२. यत् नास्ति ज.
१३. आघा घ.
१४. अरायती घ.

स्थितोपस्थिते तु—

श्रथयेति श्श्रथय[1] (पद० १२।१२)
ऋजु, [2]यतामित्यृजु । य_ताम् (पद० २५।१२)
वृष[3]यमाणऽ इति व्वृष । यमाणः (पद० २०।३९)
शत्रु[4]यतऽ इति शत्रु । य_त? (पद० १२।५)
अघयतऽ इत्यघ । य_त? (पद० ३।२६)
अरातियतऽ इत्यराति । य_तः (पद० १२।५)
ऋतयतऽ इत्यृत । य_ते (पद० १३।२५)

[वदीर्घविधानम्]

[३३०] व[5] वृध-वृजोः ।।३।११४।।

व इत्ययं वृध-वृजो[6]र्दीर्घमापद्यते ।

वा वृधे (पद० ७।३७ सं० ७।३९)
प्र[7] वावृजे (पद० ३३।४० सं० ३३।४४)

स्थितोपस्थिते तु[8]—

ववृधऽ इति ववृधे (पद० ७।३७)
ववृजऽ इति ववृजे (पद० ३३।४०)

[अद्यशब्द दीर्घविधानम्]

[३३१] अद्य तॱ-हकार[9]-चकार-भवत-वृणीमहे-देवेषु ।।३।११५।।

'अद्य' इत्ययं त[10]मित्यादि षट्सु दीर्घमापद्यते ।

---

१. श्रथयः घ.
२. ऋजूय ज
३. वृषाय क.
४. शत्रूय घ.
५. वावृध ज.
६. जो दी ज. जोदीघ क. घ.
७. प्र नास्ति ख. ग. ज.
८. तु नास्ति ख. क. घ.
९. 'कारेति' सूत्रसमाप्तिः ज.
१०. यन्तमि ज.

अ॒द्या[1] तमस्य (पद० ३३।८७ सं० ३३।९७)

तमिति किम्—

अद्य तेऽ अपरम् (पद० ३३।८४ सं० ३३।९४)

अद्या[2] हुवेम (पद० ८।३९ सं० ८।४५)

हवमुद्या[2] च (पद० २१।१ सं० २१।१)

अ॒द्या[2] भवत (पद० ३३।४७ सं० ३३।५१)

अ॒द्या[3] वृणीमहे (पद० ३३।१४ सं० ३३।१७)

अ॒द्या[4] देवाः (पद० ३३।३८ सं० ३३।४२)

[अद्यदीर्घापवादः]

## [३३२] न होतरि ।।३।११६[6]।।

अद्य[5] इत्ययं होतरि न[6] दीर्घमापद्यते ।

अ॒द्य होतारम् (पद० २१।५५ सं० २१।५९)

[मकारोदय दीर्घविधानम्]

## [३३३] शृणुत त्विषि[7] ध्रजि[8] भवत[9] पिबे-त[10] स्म तिष्ठ रक्ष[11] मकारे ।।३।११७।।

शृणु[12]तादि नव ह्रस्वा मकारे दीर्घमापद्यन्ते[13] ।

शृणुता मं[14] इमम्[15] (पद० ७।३२ सं० ७।३४)

---

१. अद्यो त घ.
२. अघा घ.
३. अवृणी ज. अघा घ.
४. अघा क.
५. अघ क.
६. न होतरि दीर्घ-पाठः घ. क.
७. त्विषीति सूत्रसमाप्तिः ज. त्विषिप घ.
८. ध्रजिप घ.
९. भवतप घ.
१० पिबेत घ.
११. रक्षा क. घ.
१२. शृणुना घ.
१३. घेते ख. घ.
१४. मे नास्ति क. घ. मे ज.
१५. इमम् नास्ति ख. ग. ज.

शुष्पिञ्जराय[1] त्विषी[2]मते (पद० १६।१७ सं० १६।१७)
व्वातऽ इव[3] ध्रजीमान् (पद० २९।२२ सं० २९।२२)

इदं शाखा[4]न्तरविषयम्। माध्यन्दिनानां[5] तु दीर्घान्तादेव मतु[6]प्। अत ए[7]वात्र 'अन्तः पद[8]दीर्घीभा[9]व' (ज्यो० ५११ प्रा० ४।१९१) इति स्थितोपस्थितं न।

भवंता मृडयन्तं[10] ÷ (पद० ८।३ सं० ८।४)
पिबा[11] मित्रस्य (पद० ३३।७ सं० ३३।१०)
इता मरुत (पद० ३३।४३ सं० ३३।४७)
हि ष्मना म[12]नवे (पद० ३३।८४ सं० ३३।९४)
तिष्ठा महांऽसि (पद० ३३।९ सं० ३३।१२)
रक्षा माकिं ÷ (पद० २९।४७ सं० २९।४७)

स्थितोपस्थिते तु—[13]

त्विषिमतऽ इति[14] त्विषिं। मते (पद० १६।१७)

[वत्युदयदीर्घविधानम्]

**[३३४] विश्वदेव्य-सोमौ वत्याम् ॥३।११८॥**

एतौ ह्रस्वौ वतीशब्दे दीर्घं[15]मापद्येते[16]।

---

१. शुष्पिञ्जराय नास्ति ख. ग. ज.
२. त्विषि घ.
३. वात इव नास्ति ख. ग. ज. ध्रजी घ.
४. शाखान्त घ.
५. 'माध्यन्दिनानां' स्थाने 'वाजसनेयिनां' क. घ.
६. मतम् ग. ज.
७. मतरात्र घ.
८. पर ज.
९. दीर्घभा. घ. ज.
१०. उरुनः घ.
११. पिवा घ.
१२ ष्म नवे ज.
१३. तु नास्ति. ख.
१४. त्विषिमत इति नास्ति घ.
१५. दीर्घ ज.
१६. मापद्यते घ.

व्विश्वदेव्या वती (पद० ११।५८ सं० ११।६१)

सोमावती[2]म् (पद० १२।७२ सं० १२।८१)

स्थितोपस्थिते तु[3]—

व्विश्श्वदेव्य[4]वतीति विश्ववदे[5]व्व्य। व्वती (पद० ११।५८)

सोमवतीमिति सोम। व्वतीम् ( पद. १२।७२)

वत्यामिति[6] किम्—

सोमवताम् (पद. २४।१८ सं. २४।१८)

[ उषशब्दस्य दीर्घविधानम् ]

[३३५] उष[7] महोभि-नक्ते-मीं-कारै[8]-कारौ-कार-नकोरभ्यः ॥३।११९॥

महोभिरित्यादित्रि[9]भ्य ईकारादिचतुर्भ्यश्च परः 'उष' इत्ययं ह्रस्वो दीर्घमापद्यते। प्रकरणानुसारादन्त्यस्य, व्याख्या[10]नात्।

महोभिः। उषासानक्ता (पद २०।३४ सं० २०।४०-४१)

नक्कोषासा (पद १२।२ सं० १२।२)

आयुतीमुषा[11]सम् (पद १५।२१ सं० १५।२४)

द्वेवीऽ उषासौ (पद २८।१४सं० २८।१४)

उपा[12]केऽ उषासानक्ता (पद २९।३१ सं० २९।३१)

योनाऽ उषासानक्ता (पद २७।१६ सं० २७।१७)

गोमतीर्न्नऽ[13] उषासं[14] (पद ३४।४० सं० ३४।४०)

---

१ व घ.

२. म् नास्ति ज.

३. तु नास्ति ख. क. घ.

४. व घ.

५. श्वदेव्य घ.

६. इति न ख. ज. ग

७. उप घ.

८. कारै नास्ति क.

९. तृभ्य ख.

१०. माख्या क. भारत्यनात् घ.

११. मुखा ज.

१२. उषा के घ.

१३. तीर्त ज.

१४. नैतदुदाहरणम् घ. क.

अव्यवहितस्यासम्भवाद्[1] व्यवधानेऽपि । स्थितोपस्थिते—

उषसानक्तेत्युषसा । नक्ता (पद २०।३४, २९।३१, २७।१६)

नक्तोषसेति नक्त[2] । उषसा (पद १२।२)

[3]उषसमित्युषसम्[4] (पद १५।२१)

उषसावित्यु षसौ (पद० २८।१४)

उषसऽ इत्यु षसः (पद ३४।४०)

एतेभ्यः किम्—

अग्रंऽ उषसाम् (पद)

[ पुरुषशब्दीर्घविधानम् ]

## [३३६] [5]पूरुषोऽवसाने ॥३।१२०॥

'पुरुष' इत्ययमादि दीर्घो निपात्यते[6], अवसाने चेत् ।

सनवंथ[7] पूरुषम् (पद १२।७० सं० १२।७९)

ज्ज्यायाँश्च पूरुषः[8] (पद ३१।३ सं० ३१।३)

स्थितोपस्थिते तु[9]—

पुरुषमिति पुरु[10]षम् (पद १२।७०)

पुरुषऽ इति पुरुषः[11] (पद० ३१।३)

अवसाने किम्—

उदे[12]त्पुरुषः (पद० ३१।४ सं० ३१।४)

पुरुषऽ एव[13] (पद० ३१।२ सं० ३१।४)

---

१. द् नास्ति ज.
२. नक्तो उषसा घ. नक्तोषसा क. ज. ग.
३. षा घ.
४. त्य घ.
५. पु घ. ज.
६. नित्यायते घ.
७. वप घ.
८. ख एवैतत्.
९. तु नास्ति ख. ज.
१०. रषम् ज.
११. ख एवैतत्.
१२. उदे घ.
१३. ख एवैतदुदाहरणम्.

[अत्रशब्दस्य दीर्घविधानम् ]

## [३३७] पूष्णो-जहीम-स्तेष्वत्र ॥३।१२१॥

'अत्र' इत्ययं ह्रस्वः पूष्ण इत्यादिषु त्रिषु[1] दीर्घमापद्यते।

अत्रा' पूष्णः[2] (पद० २५।२५ सं० २५।२७)

अत्रा जहीमः (पद ३५।९ सं० ३५।१०)

अत्रा' ते भद्रा (पद० २९।१६ सं० २९।१६)

[ यत्रशब्द दीर्घविधानम् ]

## [३३८] नरः[3]-सप्त ऋषीन्-नस्[4]-[5]त आहु-र्नियुद्भिष्षु[6] यत्र ॥३।१२२॥

'यत्र' इत्ययं ह्रस्वो नर इत्यादिषु पञ्चसु दीर्घमाप[7]द्यते।

यत्रा नरः (पद० २९।४८ सं० २९।४८)

यत्रा' सप्तऽ ऋषीन्[8] (पद० १७।२३ सं० १७।२६)

यत्रा नश्चक्रा[9] (पद० २५।२० सं० २५।२२)

यत्रा' तऽ आहुः (पद० २९।१५ सं० २९।१५)

त आहुः किम्—

यत्र ते य[10]युः (पद० २३।१४ सं० २३।१६)

यत्रा' नियुद्भिः (पद० १३।१३ सं० १३।१५)

[ सहतेर्दीर्घविधानम् ]

## [३३९] अभिमाति-पृतनासु[11]-सपत्न-धू-र्विश्व-समत्सु-पृतना-व्रातेभ्यः सहेः ॥३।१२३॥

---

१. त्रिषु क एव.

२. पूष्याः घ.

३. रस ज.

४. न्निति० इत्येतावत्सूत्रसंकेतः ज.

५. त नास्ति घ.

६. ष्पु घ.

७. भापद्यते घ. मापते ज.

८. नैतदुदाहरणम् ग. ज.

९. चक्र क. घ.

१०. जयुः ख.

११. नास्विति सूत्रसंकेतः ज.

'अभिमाति' इत्यादिभ्य[1] अष्टभ्यः सहधातोर्ह्रस्वो दीर्घमापद्यते। अन्त्यस्यासम्भवादनन्त्यस्य। तत्र द्वयोः प्राप्तौ 'सन्निकृष्ट-विप्रकृष्ट' ( ) इत्या[2]देः।

अभिमातिषाहः (पद० १२।१०४ सं० १२।११३)

पृतनासु सासहिम् (पद० ११।७१ सं० ११।७६)

सपत्नसाही (पद० ५।१० सं० ५।१०)

[3]इतन्धूर्षाहौ (पद० ४।३३ सं० ४।३३)

विश्वासाहमवसे[4] (पद० ७।३४ सं० ७।३६)

[5]समत्सु सासहः (पद० ५।३६ सं० ५।४०)

पृतनाषाह्याय च[6] (पद० १८।६२ सं० १८।६८)

[7]व्रातसाहा? (पद० २९।४६ सं० २९।४६)

स्थितोपस्थिते—

अभिमातिसहऽ इत्यभिमाति। सहः (पद० १२।१०४)

ससहिमिति। ससहिम् (पद० ११।७१)

सपत्नसहीति सपत्न। सही (पद० ५।१०)

धूः सहाविति धूः। सहौ (पद० ४।३३)

विश्वसहमिति विश्व[8]। सहम् (पद० ७।३४)

ससहऽ इति स[9]। सहः (पद० ५।३६)

पृतनासह्यायेति पृतना। सह्याय (पद० १८।६२)

व्रा[10]तसहाऽ इति व्रात[11]। सहा? (पद० २९।४६)

---

१. त्यादि अष्ट क.
   त्याद्यष्ट घ.
   त्यादिभ्योऽष्ट ज. ग.
२. इति आदेः घ.
३. इतं नास्ति ख. ग. ज.
४. अवसे नास्ति ख. ग. ज.
५. सिमत्सु साहः क. सिमत्सु घ.
६. च नास्ति क. घ. ख.
७. प्रात घ.
८. विश्वा घ.
९. सासहः घ.
१०. व्रोतसाहा घ.
११. व्राता साहाः घ.

[शसतेदीर्घविधानम्]

[३४०] उक्थाच्च[1] शसेः ।३।१२४।।

उक्थ[2]शब्दात् परः[3] शसे[4]र्ह्रस्वो दीर्घमापद्यते ।

उक्थशासं[5]श्चरन्ति[6] (पद० १७।२८ सं० १७।३१)

स्थितोपस्थिते तु[7]—

उक्थशसऽ इत्यु[8]क्थ । शसं ÷ (पद० १७।२८)

[ चतुर्णां दीर्घविधानम् ]

[३४१] एवा-च्छ-चक्रमा- था।३।१२५।।

एतेषां चतुर्णां [9]ह्रस्वा दीर्घमाप[10]द्यन्ते । संहिताधिकारादवसाने न[11] ।

एवा नो दूर्व्वे (पद० १३।१८ सं० १३।२०)

[12]'एव' शब्दोऽत्र उपमार्थ एव, व्याख्यानात् ।

अवधारणार्थस्य तु न—

तदेव शुक्रम् (पद० ३२।१ सं० ३२।१)

स एव जातः (पद० ३२।४ सं० ३२।४)

अच्छा व्वदामसि (पद० १६।४ सं० १६।४)

चक्रमा व्वयम् (पद० ३।४४ सं० ३।४५)

अथा नऽ इन्द्र[13] (पद० ७।२४ सं० ७।२५)

अवसाने तु—

ता नोऽ अच्छ (पद० ३३।६९ सं० ३३।७८)

---

१. च्च घ.
२. क्थ्य क.
३. परे घ.
४. शसो ख. शसोह्र ज.
५. शाष घ.
६. चरन्ति नास्ति ख. ग. ज.
७. तु नास्ति क. घ.
८. इति उक्थ ज. उक्थ्य क.
९. हस्वा घ.
१०. माद्यन्ते ख.
११. च क. ग. ज.
१२. 'एवं'''इत्यारम्य' 'जातः' पर्यन्तो पाठः 'अथा न इन्द्र' इत्यनन्तरं वर्तते क. घ. एवा घ.
१३. इन्द्र नास्ति ख. ग. ज.

[विद्माशब्ददीर्घविधानम्]

[यज्ञप्रकरणनिमित्तकदीर्घविधानम्]

**[३४२] विद्मासौत्रा[1]मण्याम् ।३।१२६।।**

'विद्म' इत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रान् वर्जयित्वा ।

विद्मा ते॑ऽ अग्ने[2] (पद० १२।१८ सं० १२।१९)

असौत्रामण्यां किम्—

वि[3]द्म माँ॒ऽ उं च॒ न प्र॑[4] विद्म (पद० १९।६५ सं० १९।६७)

[अधशब्ददीर्घविधानम्]

**[३४३] अधायत्-स्म[5]-ग्ना-वायुषु ।३।१२७।।**

'अध' इत्ययं ह्रस्वो दीर्घमापद्यते, 'यत्-स्म-ग्ना-वायु' एतान्छ[6]ब्दान् वर्जयित्वा ।

अधा॑ स॒पत्नान् (पद० १७।५९ सं० १७।६४)

अधा ह्य॒[7]ग्ने॒ (पद० १५।४१ सं० १५।४५)

अयदित्या[8]दि किम्—

अध॒ यत् (पद० २७।९ सं० २७।९)

अध॑ स्मा[9] ते॒[10] व्रजनम् (पद० १५।५१ सं० १५।६१)

अध॒ ग्ना? (पद० ३३।४४ सं० ३३।४८)

अध॑ व्वा॒युस् (पद० २७।२३ सं० २७।२४)

[अष्टसप्ततिषु दीर्घनिपातनम्]

**[३४४] (१) पिबा सोमं, (२) पि[11]बा सुतस्य,[12] (३) स्था मयो-भुवो,[13] (४) नू रणे, (५) शमी[14]ष्व, (६) मा महानो, (७)**

१. सौत्र ज.

२. अग्ने नास्ति ख. नैतदुदाहरणम् ज.

३. उद्म क.

४. प्रविद्म ग. ज एव.

५. स्य क.

६. शब्दान् नास्ति क. ख.

७. स्वग्ने क.

८. त्यदि क.

९. स्म क. ज.

१०. ते व्रजनं नास्ति ख. व्रजनं नास्ति ज.

११. विवा घ.

१२. स्य" इत्यादि ३।१३० ज.

१३. भुवो नास्ति ख.

१४. मीष्व घ.

सामहन्ताम्, (८) शीतम[1], (९) रीरिषो, (१०) रीरिषित, (११) यामयन्ति, (१२) हिष्माते, (१३) वर्धयारयि[2]म्, (१४) श्रुधी हवं, (१५) चरा सोम, (१६) सूय वसिनो, (१७) श्रोता ग्रावाणो, (१८) धर्षा मानुषः, (१९) पाथा दिवो, (२०) यु[3]क्ष्वा हि, (२१) गमयातमः (२२) सिञ्च[4]ता सुतम्, (२३) परीवाप, (२४) उक्था शस्त्राण्य-(२५)-ता हवीꣳष्या, (२६) च्याजानु, (२७) क्षामारे रिहत्, (२८) क्षामा[5] भिन्दन्तो, (२९) रुहेमा स्वस्तये, (३०) जनयथा च, (३१) धारया मयि, (३२) तरामृधो, (३३) बोधामे, (३४) विचृता बन्ध,-(३५) भव[6]ता हवेषु, (३६) शृणुधी गिरो, (३७) रक्षातोकं, (३८) चर्ष[7]णीसहां (३९) चर्षणी[8]धृतो, (४०) येना समत्सु, (४१) वने मात, (४२) ऋध्यामा ते, (४३) शिक्षा सखि[9]भ्य, (४४) स्तत्रारथन्, (४५) दीया रथेन (४६) ताजयता, (४७) वर्धया त्वं (४८) प्र[10]ब्रवामा घृ[11]-तस्या (४९) जगन्था परस्या, (५०) ररिमा हि, (५१) पुरीतता, (५२) [12]प्लोहाकर्ण्ण,[13] (५३) शुण्ठाकर्णो, (प्रकृति दीर्घा वित्येके) (५४) नीकाशा, (५५) अनूकाशेन, (५६) चक्रा जरसं, (५७) मिथूक-(५८) स्तरता सखायः, (५९) सास-

---

१. तम् घ.
२. रयिं श्रु क. घ.
३. यक्ष्वा घ.
४. सिञ्चता घ.
५. क्षाभा घ.
६. मपता घ.
७. र्षणी घ.
७. र्षणा घ.
९. सस्वि घ.
१०. पत्र घ.
११. धृत घ.
१२. पमीहा घ.
१३. कर्णः घ.

ह्वा॑न्-(९०) या[२] मार्गो-(६१) भयादत, (६२) ऋतीष ह-(६३) मभीषु,-(६४) सुष्टरीमा जुषाणो, (६५) यजो देवान्,[३] (६६) येनापावका-(६७) भ्यायन्तो, (६८) यदी सरमा, (६९) स्वदया सुजिह्व, (७०) निषद्या दधिष्व, (७१) सदतना रꣳणिष्टन (७२) भरा चिकित्वांश्-(७३) च्चिकित्सा गविष्ठा[५]-(७४) ववाददद्रक्षा[६] चा,-(७६) युनक्, (७७) सृजा रराणः, (७८) सादन्य मिति च ।३।१३०।।

---

[३४४] सूत्रे निपातितानामष्टसप्ततिरूपाणां ज्योत्स्नायां सूत्रत एव वेदाध्यायिनां कृते स्पष्टत्वात् प्रसङ्गोद्धरणं न कृतम्, परमनभ्यस्तमन्त्राणां जिज्ञासूनां स्थलनिर्देशमन्तरा सन्तोषो न स्यादिति नीचैः रूपसङ्ख्याया अग्रे पदपाठ-संहितापाठयोः स्थलानामङ्कनिर्देशः क्रियते—

१. सासहह्वा घ
२. यामार्गो घ.
३. न ये घ
४. नणि क. घ.
५. ष्टा ख
६. वादद्रक्षा क. घ.

१. सं. २६।४ पद. १६।४
२. सं. ७।३८ पद. ७।३६
३. सं. ३३।७० पद. ३३।६३
४. सं. ११।५० पद. ११।४७
५. सं. १।१५ पद. १।१५
६. सं. १७।५५ पद. १७।५१
८. सं. ३३।४२ पद. ३३।३८
८. सं. २।२० पद. २।२०
९. सं. १६।१५ पद. १६।१५
१०. सं. २५।२२ पद. २५।२०
११. सं. २५।३९ पद. २५।३७
१२. सं. ३।४६ पद. ३।४५
१३. सं. ३।१४ पद. ३।१४
१४. सं. २।११ पद. २।११
१५. सं. ४।३७ पद. ४।३७
१६. सं. ५।१६ पद. ५।१६
१७. सं. ६।२६ पद. ६।२४

पिबा-सोममित्यादीनि अष्टसप्ततिरूपाणि कृतदीर्घाणि निपात्यन्ते। यत्र तु पदद्वय-पाठस्तत्र यथोक्ते[1] दीर्घः, अन्यत्र तु एकपदस्थः।

'प्लीहाक[2]र्ण-शुण्ठाकर्णौ प्रकृतिदीर्घौ' (५२-५३ पदौ) इति के[3]षाञ्चिन्मतम्, माध्यन्दिनानां तु निपातनाद्दीर्घः।

हि ष्मेति (१२ पदम्) किम्—

अर्धं स्म ते (पद० १५।५१ सं० १५।६२)

---

१८. सं. ६।८ पद. ६।७
१९. सं. ८.३१ पद. ८।२६
२०. सं. ८।३४ पद. ८।२९
२१. सं. ८।४४ पद. ८।३८
२२. सं. १९।२ पद. १९।२
२३. सं. १९।२१ पद. १९।१९
२४. सं. १९।२८ पद. १९।२६
२५. सं. १९।५९ पद. १९।५७
२६. सं. १९।६२ पद. १९।६२
२७. सं. १२।६ पद. १२।६
२८. सं. १९।६९ पद. १९।६७
२९. सं. २१।६ पद. २१।५
३०. सं. ११।५२ पद. ११।४९
३१. सं. ११।५८ पद. ११।५५
३२. सं. ११।७२ पद. ११।६७
३३. सं. १२।४२ पद. १२।३५
३४. सं. १२।६३ पद. १२।५४
३५. सं. १७।४३ पद. १७।४०
३६. सं. १३।५२ पद. १३।४७
३७. सं. १३।५७ पद. १३।४७
३८. सं. २८।१ पद. २८।१
३९. सं. ७।३८ पद. ७।३१
४०. सं. १५।४० पद. १५।३६
४१. सं. १५।४० पद. १५।३६
४२. सं. १५।४४ पद. १५।४०
४३. सं. १७।२१ पद. १७।२०
४४. सं. २९।४५ पद. २९।४५
४५. सं. १७।३६ पद. १७।३३
४६. सं. १७।४६ पद. १७।४३
४७. सं. १७।५२ पद. १७।४९
४८. सं. १७।९० पद. १७।८३
४९. सं. १८।७१ पद. १८।६८
५०. सं. १८।७५ पद. १८।६८
५१. सं. २५।८ पद. २५।८
५२. सं. २४।४ पद. २४।४
५३. सं. २४.४ पद. २४।४
५४. सं. २४।१८ पद २४।१८
५५. सं. २५।२ पद. २५।२
५६. सं. २५।२२ पद. २५।२०
५७. सं. २५।४३ पद. २५।४१
५८. सं ३५।१० पद. ३५।९
५९. सं. ३९।७ पद. ३९।७
६०. सं. ३५।११ पद. ३५।१०
६१. सं. ३१।८ पद. ३१।८
६२. सं. २६।११ पद. २६।१०
६३. सं. २७।४० पद. २८।४०
६४. सं. २९।४ पद. २९।४
६५. सं. ३३।३ पद. ३३।३
६६. सं. ३३।३२ पद. ३३।२८
६७. सं. २७।३६ पद. २७।३५
६८. सं. ३३।५१ पद. ३३।५२
६९. सं. २९।२६ पद. २९।२६
७०. सं. २६।२३ पद. २६।२२
७१. सं. २६।२४ पद. २६।२३
७२. सं. ३४।१४ पद. ३४।१४
७३. सं. ३४।२३ पद. ३४।२३
७४. सं. ३४।३६ पद. ३४।३५
७५. सं. ३४।२७ पद. ३४।२७
७६. सं. २९।१३ पद. २९।१३
७७. सं. २७।९१ पद. २७।२०
७८. सं. ३४।३१ पद. ३४।२१

---

१. क्ति घ.
२. कर्णां क. घ.
३. केषां आरभ्य 'च इति' पर्यन्तं नास्ति क. ख.

'इति च' इति चकारोऽनुक्तसमुच्चयार्थः । तेन[1]
नि[2] यंच्छ देवायुवंम् (पद० ३७।९ सं० ३७।१६) इति ।

यच्छेति किम्—
य॒ज्ञप॑तिन्देव॒युवं॑म् (पद० १।१२ सं० १।१२)
पुरीततेति (५१ पदम्) विभक्तिरविवक्षिता[3] ।
पु॒री॒तत् (पद० ३९।९ सं० ३९।९)
इत्यपि भवति । स्थितोपस्थिते—
श॒मि॒ष्ष्वेति॑ शमिष्ष्व (पद० १।१५ सं० १।१५)
म॒मह्या॒नऽ इति॑ ममहान? (पद० १७।५१ सं० १७।५५)
म॒म॒ह॒न्ता॒[4]मिति॑ ममहन्ताम् (पद० ३३।३८ सं० ३३।४२)
अ॒शि॒त॒मेत्त्यंशि । तम (पद० २।२० सं० २।२०)
रि॒रि॒ष॒ऽ इति॑ रिरिषः (पद० १६।१५ सं० १६।१५)
रि॒रि॒ष॒तेति॑ रिरिषत[5] (पद० २५।२० सं० २५।२२)
य॒म॒य॒न्तीति॑[6] यमयन्ति (पद० २५।३७ सं० २५।३९)
सु॒ य॒[7]व॒सिनीति॑ सु । य[7]व॒सिनी॑ (पद० ५।१६ सं० ५।१६)
परि॒वाप॒ऽ इति॑ परि॒ । व्वाप॒÷(पद० १९।२६ सं० १९।२८)
उ॒क्थ॒श॒स्त्राणी[8]त्यु॑क्थ । श॒स्त्राणि॑ (पद० )
च॒र्ष॒णि॒सहा॒मिति॑ चर्षणि॒ । सहा॑म्[9] (पद० २८।१ सं० २८।१)
च॒र्ष॒णि॒धृ॒त॒ऽ इति॑ चर्षणि । धृतः (पद० ७।३१ सं० ७।३१)
पु॒ रि॒ततेति॑ [10]पुरि॒ । तता॑ (पद० २५।८ सं० २५।८)

---

१. तेन नास्ति ग. ज. ख.
२. न नास्ति क. घ.
३. क्षित घ.
४. हन्मा ज.
५. षत् ज.
६. यमयन्तीति नास्ति क. घ.
७. पव घ. क.
८. उक्थशस्त्राणि इत्येव क.
उक्थशस्मा इत्येव घ.
९ चर्षणि । सहाम् इत्येव क. घ.
१०. तता पुरि घ.

पु॒रि॒तदिति॑ पुरि[1] । तत् (पद० ३९।९ सं० ३९।९)

प्ली॒हृ[2]कर्ण्ण॑ऽ[3] इति॑ प्लीह । कर्ण्ण॑÷ (पद० २४।४ सं० २४।४)

शु[4]ण्ण॒ठकर्ण्॒ऽ इति॑ शु[5]ण्ण॒ठ । कर्॑ण्ण÷ (पद० २४।४ सं० २४।४)

ब॒भ्रुनि॑काश॒[6]ऽ इति॑ ब॒भ्रु । नि॑काशाः÷ (पद० २४।१८ सं० २४।१८)

अ॒नु का॒शेनेत्य॑नु । का॒शेन॑ (पद० २५।२ सं० २५।२)

स॒स॒ह्वानि[7]ति॑ सस॒ह्वान् (पद० ३९।७ सं० ३९।७)

अप॑मा॒र्गेत्यप॑[8] । मार्गः (पद० ३५।१० सं० ३५।११)

उ॒भ॒यदं॑त॒ऽ इत्यु॑भ॒य[9] । दंतः÷ (पद० ३१।८ सं० ३१।८)

ऋ॒ति[10]सहमित्यृ॑ति॒[11] । सहं॑म् (पद० २६।१० सं० २६।११)

अ॒श्व॒यन्त॒ऽ इत्यं॑श्व॒ । यन्तं॑÷ (पद० २७।३५ सं० २७।३६)

अ॒यु॒ नगित्य॑यु॒ नक् (पद० २९।१३ सं० २९।१३)

स॒द॒न्त्यमिति॑ स॒दन्त्य॒म् (पद० ३४।२१ सं० ३४।२१)

दे॒व॒यु॒व॒मिति॑ देव॒[12] । य॒ुवम् (पद० ३७।९ सं० ३७।१६)

'अ[13]कारोपधो यकारम्' (ज्यो. १९ प्रा. ३।१४३) इति सूत्रस्या[14]पि एतदध्याय-

स्थत्वात् स्थितोपस्थिते—

व्वृष्टि॒मानि॒वेति॑ वृष्टि॒मान् । इ॑व (पद० ७।३८ सं० ७।४०)

॥ इति दीर्घप्रकरणम् ॥

---

१. पुरी घ.
२. प्लीहा ज.
३. कर्णा घ.
४. शण्ठ ज.
५. शुण्ठ कर्णः इत्येव घ.
६. श ज.
७. मिति क. घ.
८. त्यपा घ.
९. भयः घ.
१०. ऋती क. घ.
११. त्यती क. घ.
१२. देवा घ.
१३. आका क. ज.
१४. सूत्रमेतदध्या क. घ.

# ❋द्विर्वचनप्रकरणम्❋

[ द्विरुक्तौ औत्सर्गिकविधिः ]

**[३४५] स्वरात् संयोगा[1]दिर्द्विरु[2]च्यते सर्वत्र ।।४।१००।।**

स्वरात् परः संयोगादि[3]र्वर्णः प[4]दान्त-मध्या-दिषु द्विरुच्यते ।
अनु,ष्टुप्प्ते[5] (सं० १३।५७ पद० १३।५२)
इ॒षे त्वा' (सं० १।१ पद० १।१)
आ[6]च्च्या जा'नु (सं० १९।६० पद० १९।६२)

स्वरात् किम्—
श्रु॒धि श्श्रु॒त्कर्ण्णं (सं० ३३।१५ प० ३३।१२)

[ रेफ-हकारयोर्द्वित्वनिषेधः, परस्य द्वित्त्वं च ]

**[३४६] परं तु रेफ-हकाराभ्याम् ।।४।१०१।।**

तु ए[7]वार्थः। रेफ-हकाराभ्यां परं व्यञ्जनमेव द्विरुच्यते, न रेफ-हकारौ ।
सूर्य्य' ÷ (पद० ३१।१२ सं० ३१।१२)
पूर्व्वः (पद० १३।४ सं० १३।५)
प्रवाहय्या[8]य (पद० १६।४३ सं० १६।४३)
बा[9]ह्व्वोः (पद० २४।१ सं० २४।१)

---

१. गा नास्ति क.
सयोगा ज.
२. द्विरु ज.
द्रंरु घ.
३. दिवर्णः क. घ.
४. पन्दान्त ज.
पदातान्त घ.
५. अनुष्टुभे क.
अनुष्टुभ घ.
अनुसे ज.
६. अच्या घ.
७. एवार्थे क.
रावार्थे घ.
८. ल्या ज.
९. वाह्वोः घ. ज.

रेफ-हकारयोः प्रत्यक्षश्रुति[1]निमित्त[2]त्वेन सामान्य[3]प्राप्तकार्यं[4]बाधः, तेन -र-हभिन्नव्य[5]ञ्जनस्यै[6]वानेन द्वित्वम् ।

अतिह्रस्वम् (पद० ३०।२० सं० ३०।३२)

अर्हतः (पद० २८।१८ सं० २८।१९)

अत्रैतयोर्न द्वित्वम् । स्वरे परे (?) तु[7] रेफात् परेषा[8]मूष्मणामनेन न[9] द्वित्त्वम्, [10]तत्र रेफस्य [11]एकारसहितोच्चारणविधानद्रेफ[12]धर्माभावात् ।

दर्शतम् (पद० ११।३४ सं० ११।३७)

वर्षाः[13] (पद० १०।१२ सं० १०।१२) [ इत्यादौ ]

य[14]त्र तु [15]हल्परत्वं तत्र विधानाभावाद् द्वित्वं भवत्येव ।

व्वस्स्वैः (पद० २५।१ सं० २५।१)

व्व्ष[16]र्ष्याय (पद १६।३८ सं० १६।३८)

अतएव पाणिनिना '[17]शरोऽचि' (पा० ८।४।४९) इति द्वित्व[18] निषेधः कृतः ।

उक्तं च शिक्षायाम्—

'परं रेफ-हकाराभ्यां व्यञ्जनं [19]तूष्मवर्जितम् ।

द्वित्वमापद्यते रेफ-हकारौ[20] तु न कुत्रचित् ॥'

---

१. श्रु त ख. श्रु तंन.
२. मित ज.
३. न्यं पादा घ.
४. कार्यित्वबाधः क. घ.
५. ब्य घ
६. स्यैव वा क. घ.
७. तु नास्ति. क. घ.
८. उष्म घ. ज.
९. न नास्ति. क. घ. ज.
१०. त्तत्र घ.
११. यकारसा घ.
१२. रेफे ख.
१३. वर्षो ज. वर्षा क. घ.
१४. पत्र घ.
१५. 'हल्' स्थाने 'त्म' घ
१६. वर्ष्र्या घ
१७. शिरो घ.
१८. द्वित्वं ज.
१९. तुषः घ.
२०. कारो न तु कत्रचित् घ.

[ स्पर्शोदयानामूष्मान्तस्थानां द्वित्वनिषेधः ]

## [३४७] ऊष्मान्तस्थाभ्यश्च स्पर्शः ।४।१०२।।

च एवार्थो[2] भिन्नक्र[3]मः। ऊष्मभ्योऽन्त[4]स्थाभ्यश्च परः स्पर्श एव द्विरुच्यते, न ऊष्मान्तस्थाः।

[5]अश्म्मन्नूर्ज्जं॑म् (पद० १७।१ सं० १७।१)
पूष्ण॑÷ (पद० १।१० सं० १।१०)
हस्त्ते॑ (पद० ११।११ सं० ११।११)
द[6]धिक्काव्ण÷ (पद० २३।३० सं० २३।३२)
शल्म्मलिः (पद० २३।११ सं० २३।१३)

[ विसर्जनीयात्परस्य व्यञ्जनोदयस्पर्शस्य द्वित्वम् ]

## [३४८] विसर्जनीयाद् व्यञ्जनपरः ।४।१०६।।

विसर्जनीयात् परः स्पर्शो द्विरुच्यते, व्यञ्जनपरश्चेत्[7]।
व्विष्ण्णोः क्क्रमं॑÷ (पद० १२।५ सं० १२।५)
हिरं॑ण्ण[8]यपाणिः प्प्रतिं॑गृब्भ्णा[9]तु (पद० १।२० सं० १।२०)

व्यञ्जनपरः किम्—
न्यङ्कु÷ कक्क[10]टः (पद० २४।३२ सं० २४।३२)
गौरमृ गः पिद्धः (पद० २४।३२ सं० २४।३२)

[ ङकार-नकारयोर्विशेषद्वित्वविधिः ]

## [३४९] ङ्नौ चेद् ध्रस्व[11]पूर्वौ स्वरे प[12]दान्तौ ।।४।१०७।।

---

१. उष्मा ज.
२. र्थो ज.
३. क्रमः घ.
४. न्त्स्था
५. ऊर्ज्जम् नास्ति ख. ज. ग.
६. दधिक्रादृणः घ.
७. चेति ज.
८. हिरण्य नास्ति ख. ग. ज.
९. ह्णातु घ.
१०. कक्कुटः क. कक्कुरः घ. कक्कटः ज.
११. ह्रस्व क. घ.
१२. पादा घ.

प[1]दान्तस्थौ ङकार-नकारौ स्वरे परे ह्रस्व[2]पूर्वौ चेद्[3] द्विरुच्येते[4]।
यु॒ङ्ङ्सि (पद० १०।२२ सं० १०।२४)
अक्ष॒न्नमी॑मदन्त (पद० ३।५० सं० ३।५१)
ह्रस्वपूर्वौ[5] किम्—
सुप्रा॒ङ्ङ्जः (पद० २५।२३ सं० २५।२५)
कु॒टरू॒नाल॑भते (पद २४।२३ सं० २४।२३)

[ ऊष्मान्तस्थयोः द्विर्वचने विशेषः ]

## [३५०] नास्वरपूर्वा [6]ऊष्मान्तस्थाः ।४।१०५॥

अ[7]स्वरेति पर्यु[8]दासः। तेन स्वसदृशस्य[9] वर्णस्य ग्रहणम्। ये[10] ऊष्माणोऽन्तस्थाश्च व्यञ्जनपूर्वास्ते द्विर्वचनस्य निमि[11]त्तं न भवन्ति[12]।
[13]व्वर्ष्मन् (पद० ५।१७ सं० ५।१७)
पार्ष्ण्या॑ वा॒[14] (पद० २६।३८ सं० २५।४०)
व्यञ्जनेति किम्—
[15]अन्न्ह॑ः (पद० ८।४२ सं० ८।४८)
इन्नप्त्रे॑ (पद० ५।२१ सं० ५।२१)

[हेतुतः परस्य द्वित्वप्राप्तौ न पूर्वाक्षरस्य द्वित्वम्]

## [३५१] यैस्तु परं तैर्न पूर्वम् ।४।१०४॥

यैर्हेतुभूतैः परस्य यस्य[16] द्विर्भावः[17] क्वचिदुक्तस्तैः संयुक्तं पूर्वं तद्[18] व्यञ्जनं न द्विरुच्यते।

---

१. पादा घ.
२. ह्रस्वः पूर्वश्चे ज.
३. चेद् नास्ति घ.
४. च्यते घ.
५. पूर्वो ज.
६. उष्मा ज.
७. अस्व ख.
८. पय्यु ज.
९. स्य नास्ति ज.
१०. य उष्मा ज. ये नास्ति घ.
११. मिन्नं घ.
१२. वति ज.
१३. वष्मन् ज.
१४. वा नास्ति ख. ग. ज.
१५. नैवदुदाहरणम् ख. ग. ज.
१६. यमस्य घ. क.
१७. र्भावे ख.
१८. तत् ख.

कृत्स्_न[1]हृदंयेन (पद० ३९।८ सं० ३९।८)

स[2]कारस्य ऊ[3]ष्मत्वात् स्पर्शद्विर्भावस्य निमि[4]त्तत्वेतेन संयुक्तः पूर्वः स्पर्शस्तकारो न द्विरुच्यते। अत्र पू[5]र्वस्यानेन[6] (४।१०४) निषेधः परस्य पूर्वेण (४।१०५)

"य[7]त्र चोभयतः[8] स्पर्शैः संयुक्ताः श-ष-साः[9] सहाः।
सत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बु[10]धैः॥"

## ❋ परिभाषासूत्रम् ❋

[आगन्तुकाक्षरस्य स्वरूपनिर्देशः]

**[३५२] प्रथमैर्द्वितीयातृतीयैश्चतुर्थाः ।४।१०६॥**

द्वितीयाः प्रथमैः सह, चतुर्थास्तृतीयैः सह द्विरुच्यन्ते[11]। परिभाषेयम्।
यत्र द्वितीयानां चतुर्थानां च द्विर्भावः[12] प्राप्त[13]स्तत्रेदमुपतिष्ठते।

व्रिक्रव्यायं (पद० ११।१७ सं० ११।२०)

शीग्घ्यू्ा्य[14] (पद० १६।३१ सं० १६।३१)

प्रमे्ष्ठी (पद० ८।४८ सं० ८।५४)

[15]विष्ष्फुरन्ती (पद० २९।४१ सं० २९।४१)

---

१. कृत्सन घ.
२. सहका घ.
३. ऊष्म ज.
४. त्वेन घ. ख.
५. पूर्व ज क. घ. पूर्वस्य अने ख.
६. स्यानेनैव ग. ज.
७. कारिकेयं नास्ति ख. ग. ज.
८. भयः तः घ.
९. शसाः घ.
१०. बुधैः घ.
११. च्यते घ.
१२. द्विभर्विः क.
१३. प्राय घ.
१४. शीग्घ्या ज.
१५. ष्पुर क. ज. स्कुर घ.

## [यमलक्षणम्]

### [३५३] अन्तः पदेऽपञ्चमाः[1] पञ्चमेषु विच्छेदम् ।४।१६२।।

पदमध्ये विद्यमानाः पञ्चमभिन्नाः स्पर्शाः पञ्चमेषु यममापद्यन्ते । 'विच्छेद' इति यमसंज्ञा ।

रु॒क्क्म१ (पद० १२।१ सं० १२।१)
अ॒ग्नि१ (पद० १।२२ सं० १।२२)
व्वात्र्ग्घ्न[2]म् (पद० १०।८ सं० १०।८)
त॒नु॒च्चिम् (पद० १।४ सं० १।४)
य॒ुनज्जिम्[3] (पद० ६।७ सं० ६।९)
आ॒त्क्मा (पद० ४।१५ सं० ४।१५)
वि॒द्ध्मा[4] ते' (पद० १२।१८ सं० १२।१९)
सि॒ध्ध्मलम्[5] (पद० ३०।१५ सं० ३०।१७)
पा॒प्प्मने' (पद० ३०।३ सं० ३०।५)

अत्र 'स्वरात् संयोगादिर्द्विरु[6]च्यते' (ज्यो० ३४५ प्रा० ४।१००) इति द्वित्वे जाते—'विकारी यथासन्नम्' (ज्यो० १५ प्रा० १।१४२) इति प्रतिवर्गमाद्या[7]नां जित्संज्ञकत्वात्प्र[8]थमो यमः । द्वितीयानां जित्संज्ञकत्वात् सो[9]ष्मसंज्ञकत्वाच्च द्वितीयः । तृतीयानां धिसंज्ञकत्वात् तृतीयः । चतुर्थानां[10] धिसंज्ञकत्वात् सोष[11]मसंज्ञकत्वाच्च[12] चतुर्थः । एवं चत्वारः । अत एव—

'चत्वारश्च यमाः स्मृताः ।' (पा०शि० ४ श्लो०)इति पाणिनीयशिक्षायामुक्त[13]म् ।
एते ज्ञेयाः, न त्वेषामुच्चारणम्—
'अशरीरं यमं प्राहुः'[14] (या० शि० २।९२)—इति शिक्षायामुक्तत्वात् ।

---

१. ञ्चमः क. घ.
२. र्घ्नम् घ. ज.
३. जिन ख. आत्मा ज. क.
४. 'विध्म' इत्येव ख. ग. ज.
५. धिध्म क. सिद्धमत्मम् घ. सिध्यलम् ज.
६. द्विरुच्यते इति नास्ति. ख. ग. ज.
७. माधानां घ.
८. त्वाप्र क. घ.
९. सोष्म''''कत्वात् नास्ति. घ.
१०. थानां ज.
११. सोष्म घ.
१२. त्वाच्या घ.
१३. युक्तम् घ.
१४. 'प्राहुः' स्थाने 'विद्यात्' इति मुद्रित या० शि० पाठः ।

[अनुस्वारस्य द्वित्वनिषेधः]

**[३५४] नानुस्वारः ।४।११०।।**

अनुस्वारो न द्विरुच्यते ।

इ॒मॐ स्तन॑म् (पद० १७।८० सं० १७।८७)

[सवर्णाक्षरयोगे द्वित्वनिषेधः]

**[३५५] सवर्णे ।४।१११।।**

सवर्णे परे[१] व्यञ्जनं द्विर्न भवति ।

सँख्यो॑मि (पद० १।२२ सं० १।२२)

यन्ते॑ (पद० १२।५६ सं० १२।६५)

[ऋवर्णोदयाक्षरस्य द्वित्वनिषेधः]

**[३५६] ऋवर्णे ।४।११२।।**

ऋवर्णे परे[२] द्विरुक्तिर्न[३] भवति ।

अनि॑ष्टृत[४] ६ (पद० २७।४ सं० २७।४)

'ऊष्मान्तस्थाभ्य' (ज्यो० ३४७ प्रा० ४।१०२) इति प्राप्तम् ।

[यमस्थले द्वित्वनिषेधः]

**[३५७] यमे ।४।११४।।**

यमे परे[५] द्वित्वं न ।

य॒[६]क्क्ना (पद० ३९।८ सं० ३९।८)

'अन्तः पद' (ज्यो० ३५३ प्रा० ४।११०) इति कात्परे यमे जा[७]ते ककारस्य संयोगादित्वात् प्राप्तं द्वित्वं न ।

[विसर्गस्य द्वित्वनिषेधः]

**[३५८] विसर्जनीयः ।४।११५।।**

न द्विरुच्यते ।

---

१. परे इत्यनन्तरम्—'पूर्वोऽनुस्वारो व्यञ्जने' इत्यधिकः पाठः ज.

२. परे नास्ति ख. परे न द्वि. ज.

३. न—नास्ति ज.

४. ष्टृनः घ.

५. यमे न द्वित्वं ख.

६. 'यक्ना' इत्यारभ्य 'परे द्वित्वं न' इत्यन्तः पाठो नास्ति क. घ. यन्का ज.

७. आते ज.

द्विवः ककुत् (पद० ३।१२ सं० ३।१२)
'स्वरात् संयोगादिः' (ज्यो० ३४५ प्रा० ४।१००) इति प्राप्तम् ।

[वर्गीयोत्तमस्य स्ववर्गीयानुत्तमोदये द्वित्वनिषेधः]

**[३५९] स्ववर्गीये चानुत्तमे ।४।११६।।**

उत्तमभिन्ने स्ववर्गीये वर्णे परे द्वित्वं न ।
यन्ते'[1] (पद० १२।५६ सं० १२।६५)
तद्दे वार्नाम् (पद० ३३।१४ सं० ३३।१७)
अनुत्तमे किम्—
तन्न'[2] ÷ (पद० ३३।३८ सं० ३३।४२)

[अवसाने द्वित्वनिषेधः]

**[३६०] अवसितं च ।४।११७।।**

अवसानगतं व्यञ्जनं न द्विरुच्यते ।
ऊक् (पद० १८।९ सं० १८।९)
'परं तु रेफहकार' (ज्यो० ३४६ प्रा० ४।१०१) इति 'ऊष्मान्तस्था' (ज्यो० ३४७ प्रा० ४।१०२) इति वा ककारस्य द्वित्व[3] प्राप्तिः ।

॥ इति द्विर्भावप्रकरणम् ॥

## ❀ अथ द्वियकारप्रकरणम् ❀

[द्वियकाराधिकारसूत्रम्]

**[३६१] द्वियकारम् ।४।१५१।।**

इ[4]त्यधिकारः ।

[दश द्वियकारपदानि]

**[३६२] आप्याय्यमानो यमो, रय्यै,[5] धाय्या रूपं, श्रवाय्यं, नृपाय्यं, पौरुषेय्या, हृदय्या, सहरय्या, निचाय्य,[6] सान्नाय्य,[7] सन्ता[8]-य्येति च ।४।१५२।।**

---

१. यत्ते घ. ज.
२. तन्न घ.
३. द्वित्व इति ज. एव.
४. वृत्तिरियं नास्ति. ख. ज. ग.
५. 'रय्यै इत्यादि' सूत्ररूपं ज.
६. निचाप्य्य घ. क.
७. सान्नाय्य नास्ति ख.
८. सन्ना घ.

इमानि दश रूपाणि द्वियकाराणि निपा[1]त्यन्ते। चकारोऽनुक्तसमुच्चयार्थः। तेन[2]—

रय्या पोषे॑ण (पद० १२।७ सं० १२।७)
आ॒प्य्या॒य्यमा॑नो य॒म? (पद० ८।५१ सं० ८।५७)[3]
यम इति किम्—
आ॒प्य्याय्य॑मानो अ॒मृता॑य सोम[4] (पद० १२।१०४ सं० १२।११३)
[5]र॒य्यै॑ त्वा॒ पोषा॑य त्वा (पद० १४।१८ सं० १४।२२)
यजेति॑ धाय्या रू॒पम् (पद० १९।२२ सं० १९।२४)
तन्नो॑ गी॒र्भिः श्र॒वाय्य॑म् (पद० १९।६२ सं० १९।६४)
व्व॒र्त्ती रु॑द्रा नृ॒पाय्य॑म् (पद० २०।७२ सं० २०।८१)
पौरु॑षेय्या गृ॒भ? (पद० २१।४० सं० २१।४३)
नेमो॑ हृदय्या॒य च (पद० १६।४४ सं० १६।४४)
स॒ह र॒य्या निव॑र्त्त॒स्स्वा (पद० १२।१० सं० १२।१०)
अ॒ग्नेज्ज्यो॑ति॑र्नि॒चाय्य॑ं (पद० ११।१ सं० ११।१)
शर॑सि सन्ता॒य्यमा॑ने (पद० ३९।५ सं० ३९।५)

॥ इति द्वियकारप्रकरणम् ॥

## ❋ द्विकारप्रकरणम् ❋

### [३६३] द्विसकार ॐ शास्स्व-रास्स्वेति ।४।१४६॥

इमे द्वे द्विसकारे। 'स्वरात् संयोगादिः' (ज्यो० ३४५ प्रा० ४।१००) इति द्वित्वे प्राप्ते द्विसकारत्वविधानं ज्ञापकं 'सामान्यतः अन्तः स्थासु[6] सकारस्य द्वित्वं न' इति[7]। उक्तं च शिक्षायाम्—

'सकारस्य द्विरुक्तिर्या सा द्वयोरेव नान्यतः।
आ च शास्स्वा च, रास्स्वेति[8] सकारोऽत्र द्विरुक्तिजः॥'

१. निया घ.
२. तेन''''षेण इति नास्ति ज.
३. अत्र 'रय्या पोषेण' इति ज.
४. सोम नास्ति ख. ग. ज.
५. इत उत्तरमुदाहारणानि न सन्ति ख. ज.
६. स्थासु घ.
७. इति नास्ति. ख. ग. ज.
८. रास्वेति ज.

अत एव केशवेनापि—

'न सोर्व्यो[1]श्च' (नवाङ्कसूत्रम्)

इति सूत्रमकारि ।

[2]शास्स्व (पद० २१।६० सं० २१।६१)

रास्स्व (पद० ४।१६ सं० ४।१६)

[द्वित्वापवादः]

[३६४] न क्ष-वृ-चि-श्वि-स-त-येभ्यस्त्रैकम् ।६।२७॥

क्षादिभ्यः[3] सप्तभ्यः[4] 'त्र' इत्यत्र एकमेव व्यञ्जनं न द्वे ।

क्षत्रस्यं[5] (पद० १०।८ सं० १०।८)

[6]क्षत्रम् (पद० सं० )

वृत्रं व्वधेत्[7] (पद० १०।८ सं० १०।८)

चित्रं देवानाम्[8] (पद० ७।४० सं० ७।४२)

श्वित्रऽआदित्या[9]नाम् (पद० २४।३९ सं० २४।३९)

सत्रस्यऽऋद्धिः[10] (पद० १८।४६ सं० १८।५२)

लोके तत्र[11] (पद० १३।२९ सं० १३।३९)

'सचन्त[12] यत्र पूर्व्वे' (पद १३।२९ सं० १३।३९)

---

१. सोव्यो ज. घ.

२. उदाहरणद्वयमेतत् क एव.

३. रिभ्यः घ.

४. भ्यः परस्मिन् त्र इति ज.

५. उदाहरणमेतत् क. घ.

६. उदाहरणमेतत् ख. ग. ज.

७. वधेत् नास्ति ज. ख. ग.

८. देवानां नास्ति ख. ग. ज.

९. आदित्यानाम् न ख. ग. ज.

१०. ऋद्धिः नास्ति ख. ग. ज.

११. लोके नास्ति ख. ग. ज.

१२. यत्र इत्येवोदाहरणं ख. ग. ज.

[अर्थवशेन द्वित्वनिषेधः]

[३६५] वीद्[1]ध्या्य-वाद्ध्रीं[2]नसोद्रा[3]श्चराश्चेत् ।६।२८।।

एते[4]षां त्र[5]याणां द्वित्वं न प्राणिवाचकाश्चेत् ।

नमो[6] व्वीद्ध्या्य च (पद० १६।३८ सं० १६।३८)

वाद्ध्रीं[7]नसस्ते मत्यै (पद २४।३९ सं० २४।३९)

अपामु द्रोमा[8]साम् (पद २४।३७ सं० २४।३७)

चराः[9] किम्—

समु द्राय शिशु मारा न् (पद २४।२१ सं० २४।२१)

एतत्प्रकरणं ज्ञानार्थं क्वचिदुच्चारणार्थं ।

'न व्यञ्जनपरस्यैकस्या[10]नेकस्या[11]वोच्चारणे विशे[12]षोऽस्तीति'

श्रीभाष्योक्तेः ।

[ अङ्गत्व विचारः ]

[३६६] स्वरोऽक्षरम् ।१।९९।।

'सहाद्यैर्व्यञ्जनैः' (ज्यो० १५९ प्रा० १।१००) 'उत्तरैश्चावसितैः' (ज्यो० १६० प्रा० १।१०१) इत्युक्तम् । तत्र स्वरयोर्मध्ये यत्रानेकं व्यञ्जनं तत्र किं पूर्वस्याङ्गं[13] किं परस्येति निर्णयार्थमाह—

[ संयोगे प्रथमवर्णस्य पूर्वाङ्गत्वम् ]

---

१. ईध्याय घ. विध्र्या ज.
२. वाध्द्री ज. वार्ध्री घ.
३. द्रा नास्ति घ.
४. एषां क. घ. ग.
५. त्रयाणां घ.
६. नमो नास्ति ख. ग. ज.
७. वाध्री ज. वार्ध्रनिसस्ते घ. नसस्मे क. नसो मत्यै ख.
८. मासां नास्ति ख ग. ज.
९. चयः घ.
१०. कस्या ख.
११. स्योच्चा क. घ.
१२. विशोस्ती क. विशोषोस्नी शि.
१३. ङ्गं नास्ति ख.

[३६७] संयोगादिः पूर्वस्य १।१०२ ॥

संयोगस्यादि[1]वर्णः पूर्वस्याङ्गं भवति ।

इ॒षे[2]त्वा॑ (पद १।१ सं १।१)

अत्र द्वित्वे द्वौ तकारौ । तत्र प्रथमस्तकारः पूर्वस्य, द्वितीयस्तकारो वकारश्च परस्य ।

[ यमाक्षरस्य पूर्वाङ्गत्वम् ]

[३६८] यमश्च ।१।१०३ ॥

यमश्च पूर्वं[3]स्याङ्गम् ।

रु॒क्क्मः (पद १२।१ सं १२।१)

अत्र ककारो यमश्च पूर्वस्य[4], मकार उत्तरस्य ।

[ द्वित्वोत्पन्नाक्षरस्य पूर्वाङ्गत्वम् ]

[३६९] क्रमजं च ।१।१०४॥

संयोगादेः परस्य द्वित्वेन जातं व्यञ्जनं क्रमजं, तच्च पूर्वस्याङ्गम् ।

पा॒र्श्श्व्य॑म् (पद ३९।९ सं ३९।९)

रेफः एकः[5] शकारः पूर्वस्य, द्वितीय शकार[6]-वकार-यकारा[7] उत्तरस्य ।

वर्ष्ष्यी॑य (पद १६।३८ सं १६।३८)

रेफः एकः[8] षकारः पूर्वस्य । द्वितीय-ष[9]कार यकारौ उत्तरस्य ।[10]

ब्रा॒ह्वौ (पद १६।५३ सं १६।५३) ।

हकारः एको वकारः पूर्वस्य, द्वितीयो वकार उत्तरस्य ।

---

१. स्यादि वर्णः ख. घ. शि. स्यादिर्वणः क.

२. ईष त्वा घ.

३. पूर्वास्या घ.

४. स्याङ्गम्, शि०

५. एक ज.

६. शकारः घ.

७. कार ज.

८. एक ज एकः शका घ.

९. शकाखकारयकारा घ. क.

१०. इतउत्तरम्—'वर्ष्याय । रेफ एकः, षकारः पूर्वस्य, द्वितीयषकारमकारौ परस्य' इति पुनः पाठः घ. क.

[स्पर्शोदयस्य क्रमजोत्तरव्यञ्जनस्य पूर्वाङ्गत्वम्]

## [३६९] तस्माच्चोत्तर ँ स्पर्शे ॥१।१०५॥

क्रमजादुत्तरं व्यञ्जनं स्पर्शे परे पूर्वाङ्गं भवति।

पा[1]र्ष्ण्यां' (पद० २५।३८ सं० २५।४०)

अत्र[2] रेफो द्वौ षकारौ पूर्वस्य। ण[3]कार य[4]कारौ परस्य।

वर्ष्मं'न् (पद० ५।१७ सं० ५।१७)

रेफो द्वौ षकारौ पूर्वाङ्ग[5]म्, मकारः पराङ्गम्।

यदर्थं पूर्वाङ्गपरा-ङ्गत्वविचारस्तदाह—

[पूर्वाङ्गपराङ्गचिन्ताफलम्]

## [३७०] व्यञ्जनँ स्वरेण सस्वरम् ॥१।१०७॥

यद् व्यञ्जनं यस्य उदात्तादेः[6] स्वरस्य[7] अङ्गं तत्[8] तत्स्वरयुक्तं स्यात्। उक्तान्युदाहरणानि। उक्तं च—

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च।

स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम्॥ [या० शि० २।२९ पृ० ९५]

[ह्रस्वस्वराणां गुरुत्वम्]

## [३७१] संयोगपूर्वा[9] व्यञ्जनान्ता[10] अवसानगताः स्वरा द्विमात्राः ॥४।१०८॥

---

१. पार्ष्ण्यों घ. पार्ष्णाय क.

२. अत्र नास्ति क. घ. ज. घि.

३. एकार क.

४. स्यकारौ घ.

५. र्वागम् ज.

६. दात्तादेः घ.

७. स्वस्या घ.

८. तत्तत् क. घ. तत् नास्ति ख. ज.

९. पूर्वव्य क. घ.

१०. नात्ताव क. घ.

द्विमात्रा[1] इति ह्रस्वा[2]पेक्षया किंचित् कालाधिक्य[3]स्योपल[4]क्षणं न तु दीर्घत्वस्य । उक्तं च शिक्षायाम्—

स्वराः संयोगपूर्वा ये व्यञ्जनान्तास्तथान्तगाः ।
एषां कालो द्विमा[5]त्रः स्यान्न तु दीर्घा हि ते स्मृताः ॥

अ॒ग्निः॑ (पद० २३।१७ सं० २३।१७)
तत् (पद० ३२।१ सं० ३२।१)
जा॒तः॑ (पद० ३।१४ सं० ३।१४)
तम् (पद० १।८ सं० १।८)
उत्[6] (पद० १।१२ सं० १।१२)
च॒ (पद० १।२५ सं० १।२५)

॥ इति सामान्य विकाराः[7] ॥

## ❀ अथ स्वरप्रकरणम् ❀

[सामान्यतः पदस्यैकोदात्तत्वम्]

### [३७२] स्वरितवर्ज्जमेकोदात्तं पदम् ॥२।१॥

स्वरित[8]मक्षरं अस्ति यस्मिन्[9] तत् स्वरितम् स्वरितवत् । त[10]त्पदं वर्जयित्वा एकोदात्तं[11] पदं स्यात् । एकः स्वरः पदे उदात्तः[12] स्वरितो वा भवति । उत्सर्गोऽयम् । द्व्युदात्तादीनि[13] तु वाचनिकानि[14] वक्ष्यति ।

अवशिष्टं तु[15]—

---

१. मात्र ज.
२. ह्रस्व घ.
३. धिक घ.
४. पलुक्ष घ.
५. द्विमात्रं ख.
६. उत्त शि. उत्त क. उक्ताः घ.
७. विकरणाः ज.
८. रितवजमक्ष ज.
९. यस्मिंस्तत् शि.
१०. तत् नास्ति. ख. ग. ज. शि. स्वरितवेत्यदं घ.
११. दानं घ.
१२. उद्यात्तं घ.
१३. द्व्युदात्तानि क. घ.
१४. वाच्चिकानि घ. वाचकानि क.
१५. अवशिष्टं तु—नास्ति क. घ.

## [विहितशिष्टस्य अनुदात्तत्वम्]

### [अधिकारसूत्रम्]

### [३७३] अनुदात्तम् ॥२।२॥

अनुदात्तः[1] अस्ति य[2]स्मिन् त[3]दनुदात्तम् । त[4]त् स्वरविशिष्टं स्यात् ।

सा॒द॒न्यम् (पद० ३४।२१ सं० ३४।२१)

वी॒र्यं॒ सु॒[5] (पद० २।८ सं० २।८)

द॒वां[6] ÷ (पद० २।२१ सं० २।२१)

अ॒न॒मी॒वा? (पद० १।१ सं० १।१)

अनुदात्तमित्यधिकारः ।

## [अस्मदो विकाराणामनुदात्तत्वम्]

### [३७४] नो नौ मे मदर्थे त्रि-द्वेय-केषु ॥२।३॥

नः नौ मे एतानि पदानि अनुदात्तानि स्युः ।

आनं ÷ (पद० २५।१२ सं० २५।१४)

त[7]न्नो' (पद० ४।३४ सं० ४।३४)

यन्मे' (पद० ३६।२ सं० ३६।२)

'त्रि-द्वये-केष्वि'[8]ति स्पष्टार्थम् । 'मदर्थे' इत्युत्तरार्थम् । 'सन्देहे साहच[9]र्यं० नियामकम्' इति सर्वादेशस्यैव ग्रहणं तेन 'शे'[10] इत्यादेश विशिष्टस्य न ।

[11]रायो मे (पद० ४।२२ सं० ४।४४)

---

१. अनुदात्तोस्त्यस्मिन् शि.

२. अस्मि ज. ग.

३. तत् नास्ति. ग.

४. तत् नास्ति. क. ख. ग. ज. शि.

५. वीर्यः घ.

६. देवः घ. नैतदुदाहरणं शि.

७. नन्नो क.

८. केष्विसं कि घ.

९. चर्य घ. ज.

१०. शे नास्ति घ. क.

११. एयो क.

## [३७५] मा च ।।२।४।।

मा इत्येतत्पदमस्मदर्थे विद्यमानमनुदात्तं स्यात् ।
प्र मा' तिर (पद० ५।३३ सं० ५।३३)

मदर्थे किम्—
मा नो' मित्रः (पद० २५।२२ सं० २५।२४)

[युष्मदो विकाराणामनुदात्तत्वम्]

## [३७६] वो वां ते त्वदर्थे ।।२।५।।

वः वाम् ते इमानि पदानि युष्मदर्थे वि[1]द्यमानानि अनुदात्तानि स्युः ।
दे॒वो वं[2]ः (पद० १।१ सं० १।१)
सं व्वाम् (पद० १२।५० सं० १२।५८)
मा ते' (पद० १।१ सं० १।१)

त्वदर्थे किम्—
[3]ते नो' अवन्तु (पद० ४।११ सं० ४।११)
[4]ते नो॒ अर्व्वन्त'ः (पद० ९।१६ सं० ९।१७)

## [३७७] त्वा च ।।३।६।।

इदम[5]नुदात्तं स्यात् ।
भू॒ताय त्वा' (पद० १।११ सं० १।११)
ग॒न्ध॒र्व्वस्त्वा' (पद० २।३ सं० २।३)

[अन्वादेशस्यानुदात्तत्वम्]

## [३७८] पूर्ववाननुदेशः ।।२।७।।

पूर्वोक्तार्थवाचकं यत्[6] पश्चादुच्चारितं पदं तद[7]नुदात्तं स्यात् ।
घा॒सम॑स्मै (पद० ११।७० सं० ११।७५)
ए॑षां कृणुहि (पद० १०।३० सं० १०।३२)
आ[8]स्मिंन् (पद ३।१ सं० ३।१) ।

---

१. वर्तमानानि ख. ज. ग.
२. देवो चः घ.
३. इदमुदाहरणं क. घ.
४. ख. ग. ज. एव
५. म् अ, ख.
६. यत् नास्ति ख. ज.
७. 'द' नास्ति घ., 'तत्' न क. ग. ज. ख.
८. अ क. घ,

पूर्ववानिति किम्—

अ॒स्मै क्ष॒त्राय॒ (पद० ७।२० सं० ७।२१)

ए॒षां प॑शूनाम् (पद० १६।४७ सं० १६।४८)

अ॒स्मिन्त्स॒धस्त्थे[1] (पद० १५।५४ सं० १५।५४)

[सामान्यतः 'असि' पदस्य अनुदात्तत्वम्]

[३७९] असि ॥२।८॥

इदमनुदात्तं स्यात् ।

वे॒ष्पोसि[2] (पद० १।३० सं० १।३०)

कृ॒ष्णो॒सि (पद० २।१ सं० २।१) ।

[यथा पदस्यानुदात्तत्वम्]

[३८०] यथा गृभो-भुवोऽग्निभ्यः[3] ॥२।९॥

गृभ इत्यादि त्रिभ्यः[4] य[5]थेति पदमनुदात्तं स्यात् ।

जी॑व॒ गृभो॑ यथा (पद० १२।७६ सं० १२।८५)

अ॒क्षि॒ भुवो॑ यथा (पद० २३।२७ सं० २३।२९)

अ॒ग्नयो॑ यथा (पद० ८।३५ सं० ८।४०)

एभ्यः किम्—

कर्त्तुयथा (पद० ३।५७ सं० ३।५८) ।

[गिर्वणः इत्यस्यानुदात्तत्वम्]

[३८१] गिवर्णः[6] ॥२।१०॥

इति पद[7]मनुदात्तं स्यात् ।

परि॑त्वा[8] गिर्वणः[9] ६(पद० ५।२९ सं० ५।२९) ।

---

१. 'स्थे' क. ज., 'स्त्वे' घ.

२. वेदोऽसि क. ख. ज., वेष्योसि घ.

३. भ्याः घ.

४. त्रितस्य घ.

५. परं यथेति ज. एव

६. गिवर्ण घ., गीर्वणः ज.

७. 'इति पद' स्थाने 'इद' क. ख. ज.

८. 'त्व' ज.

९. गिवर्णः घ., गीर्वणः ज.

['घृतेन' पदस्वरः]

**[३८२] अग्ने घृतेनेति च ॥२।११॥**

अग्ने इत्येतत्पूर्वकं[1] घृतेनेत्येतद[2]नुदात्तं स्यात् ।

अग्ने' घृतेन ( पद० १७।४७ सं० १७।५०)

अग्ने किम्—

अंङ्गिरो घृतेनं (पद० ३।३ सं० ३।३) ।

['चिकितः' इत्यस्यानुदात्तत्वम्]

**[३८३] प्र-चिकितश्च ॥२।१२॥**

प्र इत्येतत्पूर्वकं चिकित इत्येतत्पदमनुदात्तं स्यात् ।

प्रचिंकितो मनीषा (पद० १९।५० सं० १९।५०)

['एनस्' इत्यस्य अर्थभेदेन स्वरभेदः]

**[३८४] एनोऽपापे ॥२।१३॥**

एन[3] इत्येतत्पदमनुदात्तं पापं अविद्यमानं[4] चेत् ।

उदे'नम् (पद० १७।४७ सं० १७।५०)

मैनाम् (पद० १२।१४ सं० १२।१५)

अप्स्वे[5]नत् (पद० १२।३० सं० १२।३५)

आविशेषात् सर्वलिङ्गम् ।

अपापे किम्—

यदेनंश्च[6] कृमा[7] (पद० ३।४४ सं० ३।४५) ।

['श्रुतम्' इत्यस्य विशिष्टस्थलेऽनुदात्तत्वम्]

**[३८५] इह पूर्वं ँ श्रुतम् ॥२।१४॥**

---

१. 'क' ज.
२. 'त्पदम' ख. ज., 'त्यनुदात्तं' घ. ज.
३. त. क.
४. ने ज.
५. श्वे क. ख.
६. 'एनश्च' ज.
७. म ज.

इहे[1]त्येतत्पूर्वं श्रुतमित[2]येत[3]त्पदमनुदात्तम्[4] ।

ममे[5]दि[6]ह श्रु॒त॒ ॐ हवं॑म्[7] (पद० ७।८ सं० ७।९)

एतस्याख्यातत्वाद् 'अनुदात्तमाख्यातम्' (ज्यो० प्रा० ६।१) । इत्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापकम् 'श्रुधातोराख्यातस्य तेन नानुदात्तत्वम् ।' इति[8] तेन

वरुण श्रु धी हवं॑म् (पद० २१।१ सं० २१।१)

इत्यस्य न निघा[9]तः । इह किम्—

शृ॒ण्वा॒ना श्रुतम् (पद० २१।८ सं० २१।९)

[विशेषस्थले मन्ये पदस्यानुदात्तत्वम्]

## [३८६] मन्ये पद पूर्वठं सर्वत्र ॥२।१५॥

पदपूर्वं मन्ये इत्येतत्पद[10]म[11]नुदात्तं स्यात्[12] ।

होतां॑रं मन्ये॒ (पद० १५।४३ सं० १५।४७)

'सर्व[13]त्र[14]' इति 'यदवृत्तोपपदाच्च' (ज्यो० ४४९ प्रा० ६।१४) इति निषेध-बाधनार्थम् ।

तं[15] मं॑न्ये॒ षः[16] (पद० १५।३७ सं० १५।३७)

---

१. ह घ.
२. म न ख.
३. त न घ.
४. इत्यनन्तरं 'स्यात्' इति पदं ज.
५. 'ममे' न ख. ज.
६. 'इ' ख. ज.
७. 'हवम्' न ख ज.
८. 'इति' न ज.
९. पा ख.
१०. 'द' नास्ति ख.
११. 'म' नास्ति क. ख.
१२. नास्ति क. ख. घ.
१३. व ज.
१४. त्रे घ.
१५. 'तत्' घ.
१६. चः घ.

[चतुर्दश निपातानामनुदात्तत्वम्]

[३८७] [1]वाच-क-मु-चित्-समस्माद्[2]-घह-स्म-त्व [3]ईम् मर्य्या-अरे-स्विन्-निपा[4]ताश्चेत् ॥२।१६॥

वा इत्यादयश्चतुर्दश शब्दा अनुदात्ताः [5]स्युः निपाताश्चेत्[5] ।
वातो' वा (पद० ९।७ सं० ९।७)
अग्निश्चं (पद० ४०।८ सं० ४०।९)
इमा नु कम् (पद० २४।४४ सं० २५।४६)
य उ सम्भूं त्या[7]म् (पद० ४०।८ सं० ४०।९)
हृंदयाविध[8]श्चित् (पद० ८।१९ सं० ८।२३)
[9]अघायत? संमस्मात् (पद० ३।२६ सं० ३।२६)
आघाव (पद० ७।३० सं० ७।३२)
दधेह गर्भं म् (पद० २३।५६ सं० २३।६३)
हिष्मंते (पद० ३।४५ सं० ३।४६)
पीयंति[10] त्वी अनुं त्वद्धं (पद० १२।३५ सं० १२।४२)
का ईमरे (पद० २३।४८ सं० २३।५५)
आविर्मर्य्या[11] (पद० १०।९ सं० १०।९)
अजारे' पिशङ्गिला[12] (पद० २३।५० सं० २३।५७)
कः स्विंवत् (पद० २३।७ सं० २३।९)

निपाताः किम्—
चिदंसि (पद० ४।१९ सं० ४।१९)
द्रविंण मष्टु[13] य कं (पद० ८।५४ सं० ८।६०)

---

१. वाचकमुचिदित्यादि इति ज. सूत्रसङ्केतः.
२. त् घ.
३. इम् घ.
४. निपाता घ.
५. स्युः नास्ति. क. घ.
६. श्चेदा क.
७. भूसाम् घ.
८. विपश्चि ज.
९. आघा ज.
१०. पोयति नास्ति ख.
११. मया ज.
१२ गिला घ.
१३. ष्टु य क ज.

अन्ये निपाता आद्युदात्ताः[१]—

'इतिं' (पद० ४।२४ सं० ४।२४)

'अथो' (पद० ३।४२ सं० ३।४३)

'निपाता आद्युदात्ताः' (फि० सू० ३।५) इत्यु[२]क्तत्वात् ।

[विशेषस्थले आमन्त्रितस्यानुदात्तत्वम्]

**[३८८] पदपूर्वमामन्त्रित[३]मनानार्थेऽपादादौ ॥२।१७॥**

पादादौ अविद्यमानं पदपू[४]र्वं सम्बो[५]धनविभक्त्यन्तमनुदात्तं स्यात्, तत्पदमामन्त्रितं च परस्प[६]रानन्वितं न चेत् ।

अरा॑तिमग्ग्ने (पद २।७६ सं० २।७६)

रोदं॑सी व्विष्ण्णो (पद० ५।१६ सं० ५।१६)

नियुद्भिं॑र्व्वायो (पद० २७।३२ सं० २७।३३)

तवे॑ पूरुष[७] (पद० १२। ८० सं० १२।८२)

पदपूर्वं किम्—

अ॒ग्ग्ने । व्व्र॒त॒पः॒[८] (पद० ४।१६ सं० ४।१६)

व्वायो॑ अ॒स्स्मिन् (पद० २७।२७ सं० २७।२८)

पूष॒न् तव॑ (पद० ३४।४० सं० ३४।४१)

अनानार्थं किम्—

अग्निं॑हि देवा॑ꣳ (पद० २२।१८ सं० २२।१९)

अपादादौ किम्—

व्वृष॒[९]न्नग्ग्ने (पद० १५।२६ सं० १५।३०)

[आमन्त्रितसंबद्धषष्ठ्यन्तस्य एकपदवद्भावः]

**[३८९] तेनानन्तरा षष्ठ्येकपदवत् ॥२।१८॥**

---

१. दात्ताः घ.

२. इत्युक्त्वात् घ.

३. मामन्त्रित इति द्विः ख.

४. पूव ज पूर्वे घ.

५. सम्बन्धन ख.

६. परस्य ए ज.

७. रुषः घ. रुषा ज.

८. व्रतपते इति घ. ज.

९. वृषभने घ.

आमन्त्रितेन अर्थतो[1] देशत[2]श्च संबद्धं षष्ठ्यन्तम् एकपदवत् स्यात् ।

व्विश्श्वा॑सां भुवाम्पते॒ (पद० ३७।११ सं० ३७।१८)

उ[3]त्तिं॑ष्ठ ब्ब्रह्मणस्पते (पद० ३४।५५ सं० ३४।५६)

देशतः पूर्वं[4] परं च । अत एव—'न पृथिवि' (ज्यो० ३९०-३९२ प्रा० २।१९-२२) इत्यादि निषेधः कृतः ।

अनन्तरं किम्—

पते॒ त्वम॒स्य (पद० ३४।५७ सं० ३४।५८)

यस्यौ॑षधीः (पद० १२।७७ सं० १२।८६)

—अत्र 'य[5]स्य' इति 'अङ्गमङ्गम्[6]' (पद० १२।७७ सं० १२।०६) इत्यनेन सम्बद्ध्यते ।

[एकपदवद्भावापवादः]

**[३९०] न (१) पृथिवि देवयजन्योषध्या[7] (२) देव भूरेः[8] (३) पवित्रपते पवित्रपूतस्या (४) पान्नपात् प्रतिरक्षन्[9] (५) नृणान्नृपते (६) सोमाग्नेः (७) सोमेन्द्रस्य (८) सोम सुवीर्यस्य (९) सोम विश्वे[10]षां देवानां (१०) प्रजापते यस्य (११) यस्य देवा—(१२) ग्ने तवा—(१३) ग्ने वाज[11]स्या—(१४) ग्ने वरुणस्या—(१५) पो अस्माकम् ॥२।१९॥**

एतानि पञ्चदश षष्ठ्यन्तानि नैकपदवत् स्युः । (४) प्रतिरक्षन्निति किम्—

अपा॑न्नपा॒द्यो वं÷ (पद० ६।२५ सं० ६।२७)

---

१. तः ख.

२. शनः घ.

३. उत् नास्ति ख. ज.

४. पूवं ज.

५. य नास्ति घ.

६. ङ्गत्य घ.

७. षध्याः देव क. घ.

८. भूरेः इत्यादि एव सूत्रनिर्देशः.

९. प्रतिरक्षन्नृणां इति नास्ति घ.

१०. विस्वैषां क.

११. वाजस्याग्ने नास्ति घ.
ज्योत्स्नायामेतान्युदाहरणानि स्पष्टत्वान्न पुनरावृत्तानि । परमस्माभिरनुसन्धातॄणां सौकर्यायैतेषां स्थलनिर्देश । उपास्थप्पते—
इमान्येकोनत्रिंशदामन्त्रितानि चतुर्दश स्थलान्येवाधिकुर्वन्ति यथा—

[३९१] (१) सुमङ्गल (२) सत्यराजन्[१] (३) विकिरिद्र[२] (४) विलोहित (५) दरिद्र (६) नीललोहित (७) श्रेयस्कर (८) भूयस्करा (९) म्बेऽ (१०) म्बिकेऽ (११) म्बालिके (१२) श[३]रव्ये (१३) ब्रह्मस[४] ऌँ शिते (१४) मरुतो (१५) अश्विना (१६) [५]यव्ये (१७) गव्ये (१८) द्यावापृथिवी (१९) उरो (२०) अग्ना[६]३ई (२१) पत्नीवँल् (२२) लार्जी३ (२३) च्छाची[७]३न्[८] (२४) मीढुष्टम (२५) शिवतम (२६) सहस्राक्ष (२७) शतेषुधे (२८) वसुपते (२९) वसुदावन् ॥२।२०॥

एतान्येकोनत्रिंशदामन्त्रितानि नानुदात्तानि स्युः[९]। अत्र यानि अपूर्वाणि

---

१. पृथिवि देवयजन्योषध्यास्ते (सं० १।२५)
२. वामस्य हि क्षयस्य देव भूरेः (सं० ८।१६)
३. तस्यं ते पवित्रपते पवित्रं पूतस्य (सं० ४।४)
४. अपान्नपा त्प्रति रक्षन्न सुर्य्यम् (सं० ८।२४)
५. त्वन्नृणान्नृपते जायसे शुचिः (सं० ११।२७)
६. उशिक् त्वं देव सोमाग्नेः (सं० ८।५०)
७. वशी त्वं देव सोमेन्द्रस्य (सं० ८।५०)
८. अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य (सं० ७।१४)
९. असमत्संखा त्वं देव सोम विश्वेषां देवानाम् (सं० ८।५०)
१०. नो भुवनस्य पते प्रजापते यस्य (सं० १८।४४)
११. यस्य देव दधिषे पूर्व पेयम् (सं० ७।७)
१२. अग्ने तव श्रवो वयः (सं० १२।१०६)
१३. अग्ने वाजस्य गोमतः (सं० १५।३५)
१४. त्वन्नोऽअग्ने वरुणस्य विद्वान् (सं० २१।३)
१५. आपीऽअस्माकं मन्तरु दरे सुशेवाः (सं० ४।१२)

---

१. सुश्लोक सुमङ्गल सत्यराजन् । [सं० २०।४।]
२. विकिरिद्र विलोहित नमस्ते । (सं० १६।५२)
३. अन्धसस्पते दरिद्र नीललोहित । (सं० १६।४७।)
४. बहु कार श्रेयस्कर भूयस्कर (सं० १०।२८।)
५. अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । (सं० २३।१८)
६. परापत शरव्ये ब्रह्म्म सशं० शिते । (सं० १७।४५।)
७. इता मरुतोऽ अश्विना (सं० ३३।४८।)
८. यव्ये गव्यऽएतदन्नं मत्त देवाः । (सं० २३।८।)
शेषमग्रिमपृष्ठे

पा[९]दादीनि वा तेषामनुदात्तत्वा[१०]भावः सिद्ध एव, अन्येषामनेन[११] निषेधः ।

**[३९२] इडोत्तराणि नव, स्वानोत्तराणि षड[१२]-ग्न्युत्तराणि चत्वारि भगोत्तराणि [१३]चेन्द्रोत्तरमेक ँ सिनीवाल्युत्तरं[१४] च प्रजापतये ब्रह्मन्नि[१५]ति च ।। २।२१।।**

इडा[१६]शब्दादुत्तराणि नव । स्वानशब्दादुत्तराणि षट् ।

अग्निशब्दादुत्तराणि चत्वारि । भगशब्दादुत्तराणि चत्वारि ।

इन्द्रशब्दादुत्तरमेकम् । सिनीवालि[१७]शब्दादुत्तरमेकम् ।

प्रजापतये शब्दादुत्तरे[१८] ब्रह्मन्निति । —एतानि षड्विंशतिरामन्त्रितानि नानुदात्तानि स्युः ।

---

९ द्यावा पृथिवीऽउरोऽ अन्तरिक्ष । (सं० ४।७)
१०. अग्ना ऽ३इ पत्क्नी वन्सजू? (सं० ८।१०)
११. भूर्भुवः स्वर्ल्लाजी३ न्छाचीऽ३न् । (सं० २३।८।)
१२. मीढुष्टम शिवतम शिवो नः (सं० १६।५१)
१३. धनुष्ट्वठं० सहस्राक्ष शतेषुधे (सं० १६।१३।)
१४. मघवा वसुपते वसुदावन् । (सं० १२।४३।)

---

१ जन् इत्यादि' सूत्रसङ्केतः ज.
२. रद्र घ.
३. सख्ये घ.
४. सशिते घ.
५. यत्ये घ.
६. अन्नाई ख.
७. छाचीन् घ लाजीन्छा ख.
८. स्युः नास्ति घ.
९. पदादी घ. ख.
१०. त्वा नास्ति ख.
११. मन्येन ख.
१२. षट् इत्यादि सूत्र संकेतः ज.
१३. च ख.
१४. रश् ख.
१५. नि घ.
१६. ड ख.
१७. ली ज.
१८. र ज.

इडे रन्ते हव्ये काम्ये चन्द्रे[1] ज्योते[2] दिति[3] सरस्वति[4] महि[5] विश्रुति [९] (पद० ८।३७ सं० ८।४३)

स्वान् भ्राजा—ङ्घा[6]रे बम्भा[7]रे हस्त सुहस्त कृशानो [६] (पद० ४।२७ सं० ४।२७)

अग्नऽ इन्द्र वरुण मित्र देवाः [४] (पद० ३३।४४ सं० ३३।४८)

भग[8] प्रणेत—र्भग[9] सत्यराधो भग [४] (पद० ३४।३५ सं० ३४।३६)

इन्द्र गोमन् [१] (पद० २६।४ सं० २६।४)

सिनीवालि[10] पृथुष्टुके [१] (पद० ३४।१० सं० ३४।१०)

प्रजापतये ब्रह्मन्[11] (पद० २२।४ सं० २२।४)

### [ भूतिशब्दस्याप्युदात्तत्वम् ]

## [३९३] भूतिराद्युदात्तम्[12] ।।२।२२।।

अथ आद्युदात्ताधिकारः ।

भूतिः इत्येतदाद्युदात्तं स्यात् ।

भूतिश्च मे (पद० १८।१४ सं० १८।१४)

नमो[13] भूत्यै येदम् (पद० १२।५६ सं० १२।६५)

### [ 'कदा' शब्दस्वरविधानम् ]

## [३९४] कदा न रिष्येम पूर्वम् ।।२।२३।।

'न रिष्येम' इत्येतत् पूर्वं 'कदा' आ[14]द्युदात्तं स्यात् ।

न रिष्येम कदा चन (पद० ३४।४० सं० ३४।४१)

---

१. द्रे ख.

२. ति घ.

३. मि घ.

४. ती ज.

५. ही ज.

६. अंघारे क.

७. म्वा क.

८. गः ज.

९. नास्ति क. ज.

१०. ली ज.

११. अत्र 'प्रभूत्यै चेदम्' क.

१२. इति सूत्रं नास्ति क.

१३. नमो न ख. ज.

१४. अ घ.

'न रिष्येम' किम्—

कुदा चुन स्तुरी[1]? (पद० ३।३२ सं० ३।३२)

[ आमन्त्रितस्याद्युदात्तविधिसूत्रम् ]

## [३९५] आमन्त्रितं च ।।२।२४।।

सम्बोधन[2]विभक्त्यन्तमाद्युदात्तम् ।

अग्ग्ने' गृहपते (पद० ३।३९ सं० ३।३९)

'ते नान[3]न्तरा[4]' (ज्यो० ३८९ प्रा० २।१८ ) इत्येकपदातिदेशाद्—'ऊर्ज्जो' नपात्[5]' (पद० १२।९९ सं० १२।१०८) इत्यत्र 'ऊर्ज्ज' शब्दः आद्युदात्तः। वस्तुतः[6] ऊर्ज्जशब्दस्तु अन्तो[7]दात्तः। ऊर्ज्जो नपा'तुम् (पद० १५।२८ सं० १५।३२) पदपूर्वमिति तु एतस्यापवादः। तस्य अप्राप्तिर्निषेधविषयश्चात्रोदाहरण[8]म् ।

[कृष्णशब्दस्वरविचारः ]

## [३९६] कृष्णो[9] मृगसंयोगे ।।२।२५।।

कृष्णशब्द आद्युदात्तः स्यात्, पशुवाचकस्य विशेषणं चे[10]त् ।

कृष्ण्णो'सि (पद २।१ सं० २।१)

कृष्ण्णो रात्र्यै (पद० २४।३६ सं० २४।३६)

मृगेति किम्—

श्वा कृ॒ष्ण्णः (पद० २४।४० स० २४।४०)

अत्र 'श्वा' इत्यस्य 'कृष्ण' इति विशेषणम् ।

---

१. रोः क.
२. नं ख.
३. न क. घ.
४. रो घ.
५. नपात् घ.
६. तस्तु ज.
७. त्तो घ.
८. णे ज.
९. ष्णे क.
१०. 'न चेत्' क. घ.

[अन्तः शब्दस्वरविचारः ]

**[३९७] व्ययवाँश्चान्तः ॥२।२६॥**

विकारवान् अन्तः शब्द आद्युदात्तः स्यात् ।
परोऽ अन्तं ÷ (पद० २३।५५ सं० २३।६२)

व्यय[1]वान् किम्—
अन्तर्म्महति (पद० २३।५६ सं० २३।६३)

—अ[2]यमव्ययम् ।
अन्तं ÷ [3] (पद० ७।४ सं० ७।४)
वचनादिकृतो विकारो न ।

[ परशब्दस्वरविचारः ]

**[३९८] परः प्रधाने ॥२।२७॥**

अयमाद्युदात्तः स्यात्[4] प्रधानवाचकश्चेत् ।
जातः परोऽ अन्न्यः (पद० ८।३१ सं० ८।३६)
परोऽ अन्तं ÷ (पद० २३।५५ सं० २३।६२)

प्रधाने किम्—
परो दिवा (पद० १७।२६ सं० १७।२९)
अत्र 'पर[5]' शब्दोऽन्यवचनः ।

[ मात्राशब्दस्वरविचारः]

**[३९९] मात्रा च परिमाणे ॥ २।२८॥**

मात्राशब्दः आद्युदात्तः परिमाणवाचक[6]श्चेत् ।
कस्य मात्रा (पद० २३।४२ सं० २३।४७)

परिमाणे किम्—
विभूर्म्मात्रा (पद० २२।१८ सं० २२।१९)
—इदं 'मातृ' शब्दस्य तृतीयैकवचनम् ।

---

१. व घ.
२. इद ख. ज.
३. तो ज.
४. ज. एव
५. रः क. ख.
६. वच क., वचन घ.

[ दक्षिणाशब्दस्याद्युदात्तस्वरविचारः ]

## [४००] दक्षिणा च ॥२।२९॥

अयमाद्युदात्तः ।

दक्षिणामारोह (पद० १०।११ सं० १०।११)

[ दक्षिणाशब्दस्याद्युदात्तस्वरापवादः ]

## [४०१] न दश विश्व[1]कर्मा निषद्येन्द्रस्य पातुः सदः सद्भ्येषु ।२।३०॥

दशेत्यादिसप्तसु दक्षिणाशब्द आद्युदात्तो न । निषद्यादिषु[2] त्रिषु अव्यवहितस्या[3]सम्भवेऽपि निषेधो भवत्येव । 'तस्मिन्' (ज्यो० ८० प्रा० १।३४) इति व[4]र्ण सप्तमीनिर्देशविषयम्, 'पदे च' (ज्यो० २६० प्रा० ३।३६) इति ज्ञापकात् ।

दक्षिणा दश (पद० १६।६३ सं० १६।६४)

दक्षिणा विश्वकर्म्मा (पद० १३।५० सं० १३।५५)

दक्षिणतो निषद्य[5] (पद० १९।६० सं० १९।६२)

दक्षिणतऽ इन्द्रस्य (पद० ३७।५ सं० ३७।१२)

दक्षिणतः पातु (पद० ५।११ सं० ५।११)

'तसि[6]लादिषु' (पा० ६।३।३५) इति पुंवद्भावः । अत्र दीर्घान्तत्वाभावात् पूर्व[7]सूत्रस्याप्राप्तौ निषेधो ज्ञापकः ।

यत्किञ्चिदवयवभेदेऽपि का[8]र्यं प्रवर्तत एवेति । अत एव 'एनोऽपापे[9]' (ज्यो० ३८४ प्रा० २।१३) इति—

अप्स्वेनत् (पद० १२।३० सं० १२।३५) इत्यत्र भवत्येव ।

दक्षिणासदं (पद० ९।३५ सं० ९।३३)

दक्षिणासद्भ्यः (पद० ९।३४ सं० ९।३५)

---

१. इत्यादि सूत्रम् ज.
२. विश्वादिषु ख. ज.
३. स्य ज.
४. ववर्ण ख., वर्णा घ.
५. द्या ज.
६. शि ख.
७. वं ख.
८. र्यं ज.
९. प ख.

[ कर्णशब्दस्वरविचारः ]

**[४०२] कर्णः स्वाङ्गे ।।२।३१।।**

कर्णशब्द आद्युदात्तः स्वाङ्गवाचकश्चेत् ।

कर्ण्णौ'[1] तेदनी[2]म् (पद० २५।२ सं० २५।२)

स्वाङ्गे किम्—

कर्ण्णा गर्द्दभः (पद० २४।४० सं० २४।४०)

[महःशब्दस्वरविचारः]

**[४०३] महो नपुंसके ।।२।३२।।**

मह इत्येतदाद्युदात्तं नपुंसकलिङ्गं चेत् ।

महस्त्थ (पद० ३।२० सं० ३।२०)

महश्च मे (पद० १८।५ सं० १८।५)

नपुंसके किम्—

महोऽ अग्ग्ने[3]ः (पद० ३३।१४ सं० ३३।१७)

—अयं पुंल्लिङ्गः ।

[ श्रवः शब्दस्वरविचारः ]

**[४०४] श्रवश्च ।२।।३३।।**

अयं च[4] आद्युदात्तो[5] नपुंसकश्चेत् ।

तव श्श्रवः (पद० १२।९७ सं० १२।१०६)

नपुंसके किम्—

श्श्रवश्च' मे (पद० १८।१ सं० १८।१)

—अयं पुंसि ।

['अन्धः' शब्दस्वरविचारः ]

**[४०५] अन्धो वीर्ये ।।२।३४।।**

'अन्ध' शब्द आद्युदात्तो वीर्यवाचकश्चेत् ।

अन्ध[6]'स्त्थ (पद० ३।२० सं० ३।२०)

---

१. र्णौ घ.

२. तेदनी

३. ग्ने ज.

४. च न ज

५. त्तः ज.

६. अन्तस्था ज.

वीर्ये[1] किम्— अन्धन्तमः (पद० ४०।९ सं० ४०।९)

—अत्र अन्धशब्दो निबिडार्थः।

['एता' शब्दस्वरविचारः]

[४०६] एता वर्णे ॥२।३५॥

अयमाद्युदात्तो वर्णवाचकश्चेत्।

एताऽऐन्द्राग्नाः (पद० २४।८ सं० २४।८)

—एताः[2] = (श्वि)चित्राः। वर्णे किम्[3]—

एता मे (पद० १७।२ सं० १७।२)

['रोहित' शब्दस्वरविचारः]

[४०७] रोहित[4]श्च केवलः ॥२।३६॥

केवलो[5] 'रोहित' शब्द आद्युदात्तः।

रोहितः (पद० २४।२ सं० २४।२)

केवलः किम्—

धूम्ररोहितः (पद० २४।२ सं० २४।२)

['यन्त्री' शब्दस्वरविचारः]

[४०८] यन्त्री राट् ॥२।३७॥

'यन्त्री' [6]शब्द आद्युदात्तो राट्शब्दः[7] परश्चेत्।

यन्त्री राट् (पद० १४।१८ सं० १४।२२)

राट् किम्—

यन्त्र्य[8]सि (पद० १४।१८ सं० १४।२२)

---

१. वीर्य्ये ज.

२. एतः घ.

३. एतदनन्तरं 'एताश्चित्राः' इति ज.

४. त नास्ति घ.

५. केवलरोहित इति ग. ज अतिरिक्तेषु

६. यन्त्रीराट् शब्द इति घ. शब्दो ज.

७. : नास्ति घ.

८. यन्त्र्यसि घ.

['ओषधी' पदस्वरविचारः ]

[४०९] ओषधीरनामन्त्रिते ।।२।३८।।

अनामन्त्रित 'ओषधी' शब्द आद्युदात्तः ।

याऽ ओषधीः (पद० १२।६६ सं० १२।७५)

अनामन्त्रिते[1] किम्—

यस्यौषधीः (पद० १२।७७ सं० १२।८६)

[सर्वाद्यष्टशब्दानामाद्युदात्तविधानम् ]

[४१०] सर्वं विश्व[2] मानुषा—शाः स्वाहा वाजः पयो नमः ।।२।३९।।

सर्वाद्यष्टशब्दा आद्युदात्ताः ।

सर्व्वं यत् (पद० ३१।२ सं० ३१।२)

यत्र व्विश्श्वम् (पद० ३२।८ सं० ३२।८)

धर्षा[3] मानुषः (पद० ६।७ सं० ६।८)

व्विश्श्वाऽ आशाः (पद० २७।७ सं० २७।७)

स्वाहा य[4]ज्ञम् (पद० ४।६ सं० ४।६)

व्वाज[5]श्श्च मे (पद० १८।१ सं० १८।१)

पयः पृथिव्व्याम् (पद० १८।३५ सं० १८।३६)

नमः पूर्ण्णा[6]य (पद० १६।४६ सं० १६।४६)

['असि' पदस्य आद्युदात्तस्थलानि ]

[४११] असि शिवा-सुष[7]दा[8]-पयस्वतोयत्ते - मधुमती - वर्चस्वानो[9]-जिष्ठो[10]-भ्राजिष्ठः[11]-शुष्मिणी-भद्रवाच्याय-वन्द्यो- मेध्यो-यम-आदित्य-स्त्रितः-सोमेन-स्वसेत्येतेषु ।।२।४०।।

---

१. तेति ज.

२. —इति सूत्रम् ज.

३. र्षं ज.

४. व ख.

५. च क; त ज.

६. र्ण क.

७. ख ज.

८. दा इत्यादि' सूत्रं ज.

९. हं क.

१०. ष्ठ ख.

११. ष्ठ ख.

शिवादिषु सप्तदशसु 'असि' शब्द आद्युदात्तः स्यात् ।

असिं शिवा (पद० १।२७ सं० १।२७)

असिं सुषदा' (पद० १।२७ सं० १।२७)

असि पर्यस्वती च (पद० १।२७ सं० १।२७)

अ[1]सि ब[2]त्ते (पद० ५।९ सं० ५।९)

भा[3]गोसि[4] मधुमतीन्न[5]हं (पद० ७।१२ सं० ७।१२)

असि व्वर्चस्स्वानहम्[6] (पद० ८।३२ सं० ८।३८)

असस्योजिंष्ठो हम्[6] (पद० ८।३३ सं० ८।३९)

असि भ्राजिष्ठो हम्[7] (पद० ८।३४ सं० ८।३९)

असिं शुष्मिम्मणी (पद० १२।५ सं० १९।७)

असिं भद्द्रवाच्च्याय (पद० २१।५७ सं० २१।६१)

असि व्वन्दर्य[8]श्च (पद० २९।३ सं० २९।३)

असि मेद्ध्यंश्च्च (पद० २९।३३ सं० २९।३३)

असिं यम? (पद० २९।१४ सं० २९।१४)

असस्यादित्य? (पद० २९।१४ सं० २९।१४)

असिं ति त्रतः? (पद० २९।१४ सं० २९।१४)

असि सोमेन (पद० २९।१४ सं० २९।१४)

असि स्स्वसा (पद० ३४।३२ सं० ३४।३३)

अत्र[9] 'सन्निकृष्टविप्रकृष्टयोः' (ज्यो० ९४ प्रा० १।१४४) इत्यनेन व्यवहितस्य—

असि स्योना (पद० १।२७ सं० १।२७)

---

१. म. घ.

२. यत्तो ज.

३. भ घ.

४. 'असि' न क., ख. ज.,

५. अहं न ख. ज.

६. अहं न ख. ज.

७. इत्युदाहरणं न ज.

८. न्घ घ.

९. अत्र न ख. ज.

इत्यसिशब्दस्य 'सु[1]षदा' परत्वेऽपि आद्युदात्तं[2] न, 'पयस्वती' सहचरितत्वात् ।

सु॒षदा॑ चा॒सि (पद० १।२७ सं० १।२७)

इति[3] सुषदाशब्दस्य आद्युदात्तनिमित्तत्वम्, तेन असहचरितस्य—

स्योनासिं सु॒षदा॑सि (पद० १०।२६ सं० १०।२६) इति सुषदाशब्दे परे असिशब्दो

ना[4]द्युदात्तः ।

**[४१२] धनदा-रत्नधा[5]भ्यां च ॥२।४१॥**

आ[6]भ्यां च परः असि शब्द आद्युदात्तः ।

धंन॒दा असिं (पद० ९।२७ सं० ९।२८)

रत्न॒धा असिं (पद० २६।२० सं० २६।२१)

**[४१३] रायो ऽ पोषे ॥२।४२॥**

राय[7] इत्येतत्पदमाद्युदात्तं स्यात् पोष शब्दः परो न चेत् ।

रा[8]यो॒ मे (पद० ४।२२ सं० ४।२२)

तो[9]तो॒ रायं ÷ (पद० ४।२२ सं० ४।२२)

अपोषे किम्—

रा॒यस्पोष॑म् (पद० ३।२० सं० ३।२०) ।

**[४१४] न भागे[10] शिष[11]योः[12] ॥२।४३॥**

एतयोः परयोः[13] राय इत्येतदाद्युदात्तो[14] न ।

---

१. शुषदाशब्दपर ज.

२. त्तत्वं ज.

३. सुषदाचासीति न ज.

४. न आ ख. उदाहरणस्य द्विर्लेखनं घ. ज.

५. द्दा क. घ.

६. अ ज.

७. 'राय' न घ.

८. र घ.

९. त क. घ.

१०. गमी क., गेमी घ.

११. ष्ट घ.

१२. यो घ., —(भिशिषयोः) = ज.

१३. परयोः ज. एव नान्यत्र

१४. त्तं क. घ. ज.

रायो भागम् (पद ३४।२३ सं० ३४।२३)

रायऽईशिषे (पद० १७।६५ सं० १७।७१)

[ त्रिधा' पदस्वरविचारः]

[४१५] त्रिधा बद्ध[1]-हितयोः ।।२।४४।।

एतयो स्त्रिधा शब्द आद्युदात्तः ।

त्रिधा बद्धः (पद० १७।८४ सं० १७।९१)

त्रिधा हितम् (पद० १७।८५ सं० १७।९२) ।

[सुकृत शब्दस्वरविचारः]

[४१६] सुकृतं भूते ।।२।४५।।

सुकृत पदमाद्युदात्तं भूतकालवाचकं चेत् ।

पृथुः सुकृतः (पद० ७।३७ सं० ७।३९)

भूते किम्—

सुकृतं च मे (पद० १८।५ सं० १८।५)

अयं पुण्य वाचकः ।

[द्विरुदात्ताधिकारसूत्रम्]

[४१७] द्विरुदात्तानि ।।२।४६।।

अधिकारोऽयम् ।

[४१८] बृहस्पतिर्वनस्पतिर्न[2]राशंठ.[3] सस्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवा अनन्वेतवा इति च ।।२।४७।।

चकारादु[4]त्तर सूत्राद[5]नामन्त्रितानी[6]त्यपकृष्यते । अनामन्त्रितानि बृहस्पतिरित्यादि द्वादशपदानि द्विरुदात्तानि भवन्ति[7] ।

१. ध ख.

२. नरा ज.

३. शमित्यादि सूत्रम् ज.

४. त् उ ख.

५. त् अ ख. ज.

६. नि अपकृष्यते ज.

७. ति ज.

अनामन्त्रितानि किम्—

तनू॑नपात्पथ? (पद० २९।२६ सं० २९।२६)

बृहस्पते अति (पद० १७।३७ सं० १७।४०)

वन॑स्पते वी॒ड्व॒ङ्ग॒॑[1] (पद० २९।५२ सं० २९।५२)

द्यावा॑पृथि॒वी उरो॑ (पद० ४।७ सं० ४।७)।

[अनामन्त्रित देवताद्वन्द्वपदानां द्विरुदात्तत्वम्]

[४१९] देवता द्वन्द्वानिचानामन्त्रितानि ॥२।४८॥

आमन्त्रितानि वर्जयित्वा देवताद्वन्द्ववाचकानि पदानि[2] द्विरुदात्तानि।

अ॒ग्नी षोमौ॑ (पद० २।१५ सं० २।१५)

मि॒त्रावरु॑णौ (पद० २।३ सं० २।३)

'देवता' इति किम्—

दी॒क्षा॒त॒पसो॑ (पद० ४।२ सं० ४।२)

'अनामन्त्रितानि' किम्—

धे॒नुर्म्मि॑त्रावरुणा (पद० ७।१० सं० ७।९)।

[त्रीणि त्र्युदात्तपदानि]

[४२०] इन्द्रा बृहस्प[3]तिभ्यामिन्द्रा बृहस्पती इति त्रीणि ॥२।४९॥

अनयोः शब्दयोस्त्रीणि अ[4]क्षराण्यु[5]दात्तानिस्युः[6]।

इन्द्रा॒बृहस्पतिभ्यां॑ त्वा देवा॒व्य॒म्। (पद० ७।२२ सं० ७।२३)

इन्द्रा॒बृहस्पती॑ ऊ॒रुभ्या॑म्। (पद० २५।६ सं० २५।६)।

[सर्वोदात्तपदानि]

[४२१] सर्वमग्ना[7]३ ई लाजी[7]३ञ्छाचीनिति त्रिमात्राणि च ॥२।५०॥

---

१. वीण्ड्वङ्गः क.

२. 'पदानि' नास्ति ज.

३. तीति सूत्रमेतावत् ज.

४. प्य ख. ज.

५. णि उ ख.

६. इत उत्तरमुदाहरणानि न सन्ति ज.

७. ०' इत्येव सूत्रम् ज.

'अग्ना ३[1] ई' इत्यादिपदत्रयं सर्वमुदात्तं स्यात्। त्रिमात्रः[2] अस्ति येषु तानि त्रमात्राणि = त्रिमात्रस्वरविशिष्टानि, निपा[3]त्यन्ते।

अग्ना ३ ई (पद० ८।९ सं० ८।१०)

शाची ३ न् (पद० ८।१ सं० ८।१)

लाजी ३ न् (पद० २३।६ सं० २३।८)

[प्रणव स्वरः—उदात्तः]

## [४२२] प्रणवश्च ॥२।५१॥

अयं च सर्वोदात्तः त्रिमात्रश्च स्यात्।

मादयन्ता[4]मों[5] ३ प्रतिष्ठ (पद० २।१३ सं० २।१३)

ॐ३क्र[6]तो (पद० ४०।१४ सं० ४०।१७)।

[प्लुतान्तस्यविवेशपदस्यसर्वानुदात्तत्वम्]

## [४२३] विवेशा३ इति चानुदात्तम् ॥२।५२॥

'उत्तरं' 'पूर्वं' इत्युत्तरसूत्राभ्याम् (ज्यो. ४२४, ४२५ प्रा. २।५३-५४) अपकृष्यते। अव[7]साने विद्यमानमनुदात्तं विवेशा३ इति पूर्वं त्रिमात्रस्वरविशिष्टं निपात्यते।

विश्वम्भुवनमाविवे[8]शा३ (पद० २३।४४ सं० २३।४९)

उत्तरं किम्—

आविवेश का[9]न्यन्त? (पद० २३।४६ सं० २३।५१)

अनुदात्तं किम्—

येषु विश्वम्भुवनमाविवेश (पद० २३।४५ सं० २३।५०)

---

१. ३ न ख.
२. त्रिभागः घ.
३. या घ.
४. मादयन्ताम् न ख, ज.
५. मो घ.
६. ऋतो घ.
७. शा ज.
८. न क. घ.
९. 'कान्यन्तः इत्यारभ्य 'ये विवेश' इत्येतावान् पाठः नास्ति ज.

'हिरण्यगर्भं' (सं० २३ अ) इत्यध्याये 'विवेश' पदस्य चतुर्वारं[1] एकस्मिन् सन्दर्भेपठितत्वात्, पूर्वत्व[2]स्य सापेक्षत्वादध्यायस्थस्यैव प्लु[3]त[4]त्वम् । तेनान्यत्र—

अवं॑रां॑३॒[5] आविंवेश[6] (पद० १७।१७ सं० १७।१७)

अभि[7]संविंवेश, (पद० ३२।११ सं० ३२।११)

इ[8]त्यादौ न ।

[विचारार्थकस्य द्वितीयस्य आसीत् पदस्य सर्वानुदात्तत्वम्]

## [४२४] आसीदिति चोत्तरं विचारे ।।२।५३।।

विचारे वर्तमान[9] मवसानस्थं आसीदिति पदमनुदात्तं प्लु[10]तविशि[11]ष्टं निपात्यते ।

उपरिंस्विदासी३[12]त् । (पद० ३३।६५ सं० ३३।७४)

विचारे किम्—

सिंवत् कथासी॑त् (पद० १७।१८ सं० १७।१८)

## ❀ अन्तोदात्तपदाधिकारः ❀

[विचारार्थस्य प्रथमस्य आसीत् पदस्यान्तोदात्तत्वम्]

## [४२५] पूर्वमन्तोदात्तम् ।।२।५४।।

विचारे वर्तमानं पूर्वं[13] मन्त्रमध्य[14]स्थं आसीत् इति पदमन्तोदात्तं स्यात् त्रिमात्रं च निपात्यते ।

---

१ वा ज.
२. × ज.
३. ह्लु ज.
४. तव घ.
५. रा २ ख. ज.
६. शो ज.
७. मी ज.
८. न घ.
९. मवसानमवस्थानस्थं ज.
१०. ह्लु ज.
११. सि ज.
१२. ३ न ख.
१३. वं ख. ज.
१४. ध्ये ज.

अ॒धः॑ स्वि॑दा॒सी३॑त् । (पद० ३३।६५ सं० ३३।७४)

विचारे किम्—

अन्तोदात्त[2]म् इत्यधिकारः ।

कास्विंदासीत् (पद० २३।९ सं० २३।११)

[द्वन्द्वसमासे अन्तोदात्तस्थलानि]

[द्विरुदात्तत्वापवादः द्र० ४०३ सू०]

## [४२६] द्वन्द्वं[3] चेन्द्रसोमपूर्वं पूषा[4]ग्निवायुषु ।।२।५५।।

पू[5]षादित्रिषु उत्तरपदभूतेषु इन्द्रसोमपूर्वपदकं द्वन्द्वम[6]न्तोदात्तं स्यात् ।

इ॒न्द्रा॒पू॒ष्णोः॑ (पद० २५।२३ सं० २५।२५)

इ॒न्द्रा॒[7]ग्नीतम (पद० २।१५ सं० २।१५)

इ॒न्द्र॒वा॒यु[8]भ्यां॑म् (पद० ७।६ सं० ७।८)

सौ॑मापौ॒ष्ण॑ (पद० २४।१ सं० २४।१)

## [४२७] अग्निश्चेन्द्रे ।।२।५६।।

इन्द्रशब्दे उत्तरपदे सति अग्निपूर्वो द्वन्द्वः अन्तोदात्तः स्यात् ।

अ॒ग्नी॒न्द्राभ्यां॑म् (पद० ७।३० सं० ७।३२)

## [४२८] ऋक्साम्नि च[9] ।।२।५७।।

सामशब्दे उत्तर[10]पदे[11]सति ऋक्पूर्वो[12] द्वन्द्वः अन्तोदात्तः स्यात् ।

ऋ॒क्सा॒म॒यो॒ᳬ शिल्पे[13] । (पद० ४।१ सं० ४।१)

---

१. ३ न ख.
२. त्ता घ.
३. द्वं घ., न्द्वे ज.
४. ख्णा ज.
५. पु ज.
६. -अ ख.
७. न्दागी ज.
८. यू ज.
९. न क. घ., 'ऋक् च साम्नि' इति ज.
१०. रे क. ख.
११. 'पदे' न क. ख.
१२. र्वौ ज.
१३. 'शिल्पे' न ख. ज.

[यतः पदस्य स्वरविचारः]

**[४२९] यतो गतौ ।।२।५८।।**

यत इत्येतत्पदमन्तोदात्तं स्यात् गत्यर्थकं चेत् ।

स्वंश्च॒ तोधि॒या (पद० ११।२ सं० ११।३)

गतौकिम्—

यतो॑ जा॒तः॒ (पद० २३।५६ सं० २३।६२)

[विशः पदस्य स्वरविचारः]

**[४३०] पायोर्विशः ।।२।५९।।**

पायुशब्दात् वि[1]शइत्यय[2]मन्तोदात्तः स्यात् ।

पा॒युर्वि॒शः (पद० १३।१० सं० १३।११)

पायोः[3] किम्—

दैवी॒र्वि॒शः॑ (पद० १७।७९ सं० १७।८६)

[आयुशब्दस्य स्वरविचारः]

**[४३१] आयुरर्य्यमोर्व॑श्यस्तिभ्यः ।।२।६०।।**

अर्यमादिभ्यः त्रि[4]भ्यः परः आयुशब्दः[5] अन्तोदात्तः स्यात्[6] ।

अर्य॒ मायुरिन्द्रः[7] (पद० २५।२२ सं० २५।२४)

उ॒र्वश्यं स्या॒युः॒ (पद० ५।२ सं० ५।२)

विधानसामर्थ्याद् व्यवधानेऽपि ।

कृ॒ष्णम॑स्ति । (पद० १५।५१ सं० १५।६२)

आ॒योष्ट्वा॑ । (पद० १५।५२ सं० १५।६३)

---

१. विं ज.
२. तं अ० घ.
३. यो घ.
४. व ज.
५. न क. घ.
६. द्वो ख.
७. न क. घ. ज.
८. रिन्द्र न क. ख. घ. ज.

एभ्यः किम्—

आयु॑र्मे । (पद० १४।१३ सं० १४।१७)

[अस्य पदस्य स्वरविचारः]

[४३२] अस्यरोचना[1]सौ बौधा मे पारम् पुर एतारोदिवः कोऽहं त्वं महीं यईश ईशानेभ्यः ॥२।६१॥

रोचनादि द्वादशभ्यः परः अस्यशब्दोऽन्तोदात्तः स्यात्[2] ।

रोचनास्य (पद० ३।७ सं० ३।७)

अ[3]सावस्य पिता (पद० १०।१८ सं० १०।२०)

बोधा मे अस्य (पद० १२।३५ सं० १२।४२)

तमसस्पारमस्य (पद० १२।६४ सं० १२।७३)

पुरएतारो अस्य (पद० १७।१३ सं० १७।१४)

दिवो अस्य पृष्ठम् (पद० २३।५० सं० २३।५०)

को[4]ऽ अस्यव्वेद (पद० २३।५२ सं० २३।५९)

व्वेदाहमस्य (पद० २३।५३ सं० २३।६०)

त्वमस्यब्‌न्ता (पद० ३४।५७ सं० ३४।५८)

महीमस्य स्तोत्रे (पद० ३३।२६ सं० ३३।२९)

यऽईशेऽस्य (पद० २३।२ सं० २३।३)

[5]ईशानमस्य (पद० २७।३४ सं० २७।३५)

[४३३] प्रत्नां यज्ञस्य हविषः[6] पाहीत्पातं मध्वो यजमानस्य होतुरजरासो लोकेषु[7] च[8] ॥२।६२॥

प्रत्ना[9]मित्याद्येकादशसु अस्येत्यन्तोदात्तं स्यात् ।

अस्य प्रत्नाम् (पद० ३।१६ सं० ३।१६)

अस्य[10]यज्ञस्योदृचः (पद० ४।९ सं० ४।९)

अस्य हविषस्त्मना (पद० ६।९ सं० ६।११)

---

१. सावित्यादि सूत्रमेतावत् ज.
२. 'स्यात्' न क. घ. ज.
३. 'असा''''पुर एतारो अस्य' पर्यन्तं केवलं ज. एव
४. करे घ.
५. इ ज.
६. ०इति 'सूत्रमेतावत् क.
७. लाकोषु घ.
८. न ख.
९. त्न ख.
१०. अस्य न. घ.

सु मनां अस्य पांहि (पद० २६।२२ सं० २६।२३)
अस्येदिन्द्रो ब्वावृधे (पद० ३३।८७ सं० ३३।९७)
अस्य पातम्[1] (पद० ७।२९ सं० ७।३१)
अस्यमध्वं ÷ पि[2]बतम् (पद० ९।१७ सं० ९।१८)
अस्य यजमानस्य (पद० २२।२० सं० २२।२२)
अस्य होतु ÷ प्रदिशि[3] (पद० २९।३६ सं० २८।३६)
अस्याजरासः (पद० ३३।१ सं० ३३।१)
अस्यलोक? सु तावंतः[4] (पद० ३५।१ सं० ३५।१)

**[४३४] अनुदात्तमन्यत् ।।२।६३।।**

उक्तपदादन्यत्[5] अस्येतिपद मनुदात्तम् ।
कत्यस्य विष्ठा[6]? (पद० २३।५० सं० २३।५७)
षडस्य विष्ठा?[7] (पद० २३।५१ सं० २३।५८)

[आख्यातस्य अनुदात्तत्वम्]

**[४३५] अनुदात्तमाख्यातमामन्त्रितवत् ।।६।१।।**

तिङन्त[8]मामन्त्रितवत् पदपूर्वमपादादौ विद्यमानं परस्प[9]रान्वितार्थकं चेदनुदात्तम् ।
पशून् पांहि (पद० १।१ सं० १।१)
हव्य ँ रक्ष (पद० १।४ सं० १।४)
पदपूर्वं किम्—
व्यन्तु व्वयं ÷ (पद० २।१६ सं० २।१६)
विदेदग्नि? (पद० ५।९ सं० ५।९)
अपादादौ किम्—
अरांतीं सहंस्वा (पद० १२।८० सं० १२।९९)
परस्प[10]रान्वितार्थकं किम्—
विष्णो पाहि पाहि य ज्ञम् (पद० २।६ सं० २।६)

---

१. 'अस्य' पातमित्यनन्तरं 'अस्य यन्ता' क. ख. घ. ज
२. पिवता न ख. ज.
३. 'प्रदिशि' नास्ति ख.
४. 'सुतावतः' नास्ति ख. ज.
५. उक्तपदादन्यपदस्येति क., उक्तपदान्यस्येति घ., उक्तादन्यत ज.
६. विष्ठाः नास्ति ख. ज.
७. विष्ठाः नास्ति ख.
८. त ख.
९. स्य अ ज.
१०. स्य अ ज.

[उपसर्गसङ्ख्यानम्]

**[४३६] परोपापावप्रतिपर्यन्वप्यत्यध्याङ्प्रसन्निर्दुरुन्निविस्वभि ।६।२४।।**

परा, उप, अप[1], अव, प्रति, परि, अनु, अपि, अति, अधि, आङ्, प्र, सम्, निर्, दुर्, उत्, नि, वि, सु, अभि-एते विंशतिरुपसर्गाः ।

तथा चोक्तम्—

विंशतेरुपसर्गाणामुच्चाएकाक्षरानव ।
आद्युदात्ता दशैतेषामन्तोदात्तस्त्व[2]भिस्त्वयम् ।। [उव्वटभाष्ये प्रा० ६।२४]

[उपसर्गस्वरविचारः]

**[४३७] उपसर्ग उपसर्गे ।६।२।।**

उपसर्ग उपसर्गे परे अनुदात्तः स्या[3]त् ।

सुम्प्रच्यवध्वम् (पद० १५।४८ सं० १५।५३)

सुम्प्रयात (पद० १५।४८ सं० १५।५३)

[द्विरुच्चारितोपसर्गस्वरविचारः]

**[४३८] आम्रेडिते चोत्तरः ।।६।३।।**

द्विरुच्चारणेप[4]र उपसर्गोऽनुदात्तः ।

प्रप्रयज्ञपतिम् (पद० ५।३८ सं० ५।४१)

सᳫंसमित् (पद० १५।२६ सं० १५।३०)

[कृदन्ताऽऽख्यातपरोपसर्गस्वरविचारः]

**[४३९] कृदाख्यातयोश्चोदात्तयोः ।।६।४।।**

उदात्तः अस्ति ययोः = उदात्तवति कृदन्ते, उदात्तवति आख्याते च परे उपसर्गोऽनुदात्तः स्या[5]त् ।

विभ्रा[6]जमानः (पद० १५।४७ सं० १५।५२)

सुम्भरन्ति (पद० २५।२७ सं० २५।२९)

---

१. पा ज.
२. म क., रुभीत्ययम् घ.
३. 'स्यात्' ज. एव
४. 'पर' न क. घ.
५. 'स्यात्' न घ.
६. भा ज.

उदात्तयोः किम्—

उत्पु॑नामि (पद० १।१२ सं० १।१२)

अवं॑धूतम् (पद० १।१४ सं० १।१४)

[आख्यातपरस्य एकाक्षरस्य अभेरुपसर्गस्य च स्वरविचारः]

## [४४०] नाभ्येकाक्षरश्चस्वरे सन्धे॑येऽकृति ।।६।५।।

अभिरेकाक्षरश्चोपसर्गः[२] स्व[३]रात्मके उ[४]पसर्गे उपसर्गेण सन्धिमति कृदन्तभिन्ने परे अनुदात्तो[५] न[६] स्यात् ।

अ॒भ्यादं॑धामि[७] (पद० २०।१९ सं० २०।२४)

अ॒भ्यषिं॑ञ्चन् (पद० १०।१ सं० १०।१)

व्याकं॑रोत् (पद० १९।७५ सं० १९।७७)

न्यसी॑दत् पि॒ता (पद० १७।१६ सं० १७।१७)

व्यदं॑धुः (पद० ३१।१० सं० ३१।१०)

अकृति किम्—

ए[८]ज्या॒ इषं॑ ÷ (पद० २१।४३ सं० २१।४७)

["आ" उपसर्गस्य स्वरविचारः]

## [४४१] आ पूतजातयोः ।।६।६।।

'आ' इत्ययमुपसर्गः पूतजातयोः परयो[९]रनुदात्तो न स्यात् ।

आपू॑तः (पद० ४।२ सं० ४।२)

आजा॒तः (पद० १२।१३ सं० १२।१३)

---

१. न्ध्ये क.
२. र्गे ख.
३. 'स्वरात्परे' इति क. घ.
४. 'उपसर्गे' न क. घ.
५. त्तः ख.
६. 'न' नास्ति ख.
७. नि घ., 'अभिरेकाक्षर' इत्यारभ्य 'अभ्यादधामि' इति पर्यन्तं द्विरुक्तिः क.
८. पू घ.,—'रात्र्या इव' ज.
९, 'परयोः' न ज.

[अधि-नि-प्र-प्रत्युपसर्गाणां पदविशेषे परे स्वरविचारः]

**[४४२] अधि-नि-प्र-प्रति-श्रिता-त्रिणं[1]-भानवः[2] पचतेषु ।६।७।।**

अधीत्यादयश्चत्वारः यथासंख्यं श्रिता[3]दिषु चतुर्षु नानुदात्ताः।

अधिंश्रिताः (पद० २०।२६ सं० २०।३२)

विश्वं[4] न्यत्रिणंम् (पद० १७।१५ सं० १७।१६)

प्रभानवं? सिस्रते (पद० १५।२१ सं० १५।२४)

प्रतिंपचताग्र[5]भीषत (पद० २१।५६ सं० २१।६०)

['अनु' उपसर्गस्य पदविशेषपरकत्वे स्वरविचारः]

**[४४३] उज्जेषमावर्त्त आपनीफण[6]त् सनिष्यदत् संवतं प्रयाणं सञ्चरन्तं सं[7]रमध्वं प्र[8]सितिं विक्रमस्वेत्येते[9]ष्वनु ।६।८।।**

उज्जेषमित्यादि[10] दशसु अनुः[11] अनुदात्तो न।

अनू[12]ज्जेंषम् (पद० २।१५ सं० २।१५)

अन्वावंर्त्ते (पद० २।२७ सं० २।२७)

अन्वापनींफणत् (पद० ९।१३ सं० ९।१४)

अनुंस॒ꣳसनिंष्यदत् (पद० ९।१३ सं० ९।१४)

अनुंसंवतंम् (पद० ११।१० सं० ११।१२)

अनुंप्रयाणंम् (पद० १२।३ सं० १२।३)

अनुंसञ्चरंन्तम् (पद० १३।४ सं० १३।५)

---

१. ण घ.
२. व क. घ. ज.
३. त घ.
४. श्वा क. घ.
५. ग्र घ.
६. —दिति सूत्रमेतावत् ज.
७. संभ ख.
८. 'प्रसिति' नास्ति घ.
९. ते नास्ति ख.
१०. पु ज.
११. अनु ख.
१२. नु ज., न्न क.

अनु सᳫँरभध्वम् (पद० १७।३५ सं० १७।३८)

अनु प्रसितिम् (पद० १३।८ सं० १३।९)

अनु विक्रमस्व (पद० १२।५ सं० १२।५)

[उपसर्गं उपसर्गे इत्यस्यापवादप्रकरणम्]

[प्रोपसर्गपरयोः 'आ' 'उप' उपसर्गयोः स्वरविचारः]

**[४४४] ओप प्रोदात्ते ॥६।९॥**

'आ' 'उप' एतौ उदात्ते प्रशब्दे नानुदात्तौ।

आप्रयच्छ (पद० ५।१९ सं० ५।१९]

उ[1]पप्रयाहि (पद० १५।४७ सं० १५।५२)

उ[2]प प्रागात् (पद० २९।२३ सं० २९।२३)

[परिगणितस्थलेषु उपसर्गसमुदाये स्वरविचारः]

**[४४५] अभिप्रेह्यु[3]पसंप्रयात प्रत्यातनुष्वासुषाव ॥६।१०॥**

अभिप्रेहीत्यादी[4]नि चत्वारि निपात्यन्ते।

[5]अभिप्रेहि (पद० १७।४१ सं० १७।४४)

उपसं प्रयातम् (पद० १५।४८ सं० १५।५३)

प्रत्यातनुष्व (पद० १३।११ सं० १३।१२)

आसुषाव (पद० १९।२ सं० १९।२)

[आख्यातस्य प्रकृतिस्वरप्रकरणम्]

[आख्यातपूर्वाख्यात स्वरविचारः]

**[४४६] प्रकृत्याख्यातमाख्यातपूर्वम् ॥६।११॥**

नानुदात्तम्।

पिबन्तु मदन्तु व्यन्तु हो[6]तर्यज (पद० २१।३९ सं० २१।४२)

---

१. नेदमुदाहरणं क ख. घ. ज.

२ नेदमुदाहरणं क घ

३. ह्य ज.

४. अभिप्रेहीत्यादि क. ख. घ.

५. उदाहरणानि न क. घ

६. 'होतर्यज' नास्ति क. ख. ज.

[उदात्तामन्त्रितपूर्वस्याख्यातस्य प्रकृतिस्वरविधानम्]

## [४४७] उदात्ताच्चामन्त्रितादनन्तरम्[1] ॥६।१२॥

उदात्तं[2] अस्ति यस्मिन्नुदात्तवतः[3] आमन्त्रितात्परम् आख्यातं नानुदात्तम् ।

अग्ने_ पवस्व् (पद० ८।३३ सं० ८।३८)

होत् य[4]जं (पद० २१।२९ सं० २१।२९)

## [४४८] एकान्तरादपि ॥६।१३॥

ए[5]कपदान्तरितादपि उदात्तवतः आमन्त्रितात्परम् आख्यातं नानुदात्तम् ।

ब्रह्मन्त्वं[6] भ[7]न्त्स्यामिं (पद० २२।४ सं० २२।४)

अपि शब्दात् क्वचिदनुदात्तम् ।

इन्द्रायाहि (पद० २०।७८ सं० २०।८७)

एत[8]न्निर्णये सम्प्रदाय एव शरणम् ।

[यद्वृत्तसंबद्धाख्यातस्वरविधानम्]

## [४४९] यद्वृत्तोपपदाच्च ॥६।१४॥

चः[9] अप्यर्थे । यदा यच्छब्देन वृत्तं = सम्पादितं यं[10] यत् यदि यतः यत्र यथा ये इत्यादि सर्वविभक्त्यन्तं य[11]द्वृत्तं तद्[12] उपपदं अ[13]र्थतः सम्बद्धं येन पदेन तस्मादपि परम् आख्यातं नानुदात्तम् । अपिना यद्वृत्तादपि ।

यमाहु? (पद० १५।४४ सं० १५।४९)

---

१. 'तादनन्तरम्' इत्येव सूत्रं घ.
२. त्तः ज.
३. त् घ.
४. षर्जं ज.
५. रा घ.
६. स्वं ज.
७. भन्त्स्यामि क., भर्नस्यामि घ.
८. तं ज.
९. च क.
१०. 'यं' न क. घ.
११. 'यद्वृत्तं' न ज.
१२. त् ख.
१३. अर्थतः ज. एव.

मण्डूकप्लुत्या 'अयुक्तान्यहल' ( प्र० प० २।३ ज्यो० ५५७) इत्यत्रापि सम्बध्यते। अथ ऋकारकथनानन्तरं अन्तस्थानामन्त्यस्य[1] वकारस्य आदौ मध्ये अन्ते च विद्यमानस्य यथाक्रमं गुरुवृत्या मध्यम[2]वृत्या लघुवृत्या च उच्चारणम्।

व्वायवं ÷ (सं० १।१ पद० १।१)।

व्वायवृतस्पते (सं० २७।३४ पद० २७।३३)।

अत्रापि कश्चन विशेषः अमोघनन्दिन्याम्—

'ये ये पदादिस्थयकारविषये[3] नि[4]षेधास्ते वकारेऽपि।'

प्र'वायुम् (सं० ३३।५५ पद० ३३।५०।

अर्थांव्वयम् (सं० १२।१२ पद० १२।१२)।

विशेषस्तु संहितापाठे—वः। वाम्। [5]वा। वै। वि। वौ। अत्र वकारो लघु—

देवो वं ÷ (सं० १।१ पद० १।१)।

षा[6] वां (सं० ७।११ पद० ७।१०)।

चक्षुंषो वा (सं० १८।५८ पद० १८।५४)।

न वा उं (सं० २३।१६ पद० २३।१४)।

ता वि मुंञ्च (सं० २७।३३ पद० २७।३३)।

पदपाठे तु गुरुः—

व्वः (पद० १।१)।

व्वा[7]म् (पद० ७।१०) इत्यादि।

### [षकारस्योच्चारणे विशेषविधानम्]

**[५६१] अथो मूर्धन्योष्मणो[8]ऽसंयुक्तस्य, टु[9]मृते संयुक्तस्य च रवकारोच्चारणम्॥प्र. प. २।७॥**

---

१. स्य नास्ति क. घ.

२. म न ख. मध्यमवृत्या नास्ति क.

३. विषये नास्ति घ. विशेये क.

४. क्निषेधा घ.

५. वा नास्ति क.

६. यवां क.

७. व्वाम् नास्ति घ.

८. ष्मणे घ.

९. दुमृते घ.

अथान्तस्थकथ[1]नानन्तरम्, मूर्धस्थानस्योष्मणः = षकारस्यासंयुक्तस्य, टवर्गं विना अन्यहला संयुक्तस्य च, खकारोच्चारणम् ।

इ॒षेत्वा॑ (सं० १।१ पद० १।१) ।

बि॒भर्ष्यं॑सं॒तवे (सं० १६।३ पद० १६।३) ।

शुष्क्या[2]॑य (सं० १६।४५ पद० १६।४५) ।

टुमृते किम्—

प्रत्यु॑ष्टम् (सं० १।२९ पद० १।२९) ।

श्रेष्ठ॑[3]तमाय (सं० १।१ पद० १।१)

श्वा[4] कृ॒ष्ण? (सं० २४।४० पद० २४।४०) ।

क्षकारे खकारवत् अवयव संभावने[5]ऽपि मातृकादौ गणनात् एकवर्णत्वात् अवयवविभागाभावेन खकारोच्चाणं न[6] भवति । 'ककारयोगे खकारोच्चारणाभावः' इति नियमस्तु न,

शुष्कंम् (पद० १३।११) इत्यादौ विपरीतसंयोगे ककारयोगे[7]ऽपि खकारोच्चारण-सत्वात् (सं० १३।१२) ।

[विशेषोच्चारणस्य व्यवस्थापनम्]

**[५६२] अध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ प्र. प. २।८॥**

अयमुच्चारणे विशेषः अध्ययने[8] ब्रह्मयज्ञे[9] तदादिषु कर्मसु पारायणादिषु । अर्थविचारे तु—ये व॑र्णास्ति एव न त्वर्थभेदः ।

॥इति कात्यायनीये प्रतिज्ञापरिशिष्टे द्वितीया कण्डिका॥

---

१. कथ नास्ति घ.

२. शुष्याय क.

३. ष्ठ ख.

४. श्वा न ख.

५. संभवने क. घ.

६. न नास्ति क. ख. घ.

७. ककारयोगे नास्ति क. घ.

८. यनं क. घ.

९. यज्ञः घ.

# ❀अथ तृतीया कण्डिका❀

## [अनुस्वारस्य विशेषादेशविधानम्]

### [५६३] अथानुस्वारस्य ꣳ[1]इत्यादेशः श–ष–स–ह–रेफेषु ।।प्र.प. ३।१।।

स-ष-स-ह रेफे[2]ष्विति सम्भवाभिप्रायं, तत्रैवानुस्वारविधानात् । अथोष्मकथनानन्तरम् अनुस्वारसंज्ञकस्यायोगवाहस्य ꣳ कारादेशः स्यात् शकारादिषु ।

त्रिꣳशत् (सं० ३।८ पद० ३।८)

हुवीꣳषिं (सं० ८।१८ पद० ८।१५)

पर्याꣳसि (सं० १२।११३ पद० १२।१०४)

दृꣳहस्व (सं० १।२ पद० १।२)

स ꣳ राय? (सं० ३।१९ पद० ३।१९)

## [अनुस्वारसंबन्धिविशेषादेशस्य भेदाः]

### [५६४] तस्य त्रैविध्यमाख्यातं[3] ह्रस्व-दीर्घ-गुरुभेदैर्दीर्घात् परो ह्रस्वो, ह्रस्वात् परो दीर्घो, गुरौ परे गुरुः ।।प्र. प. ३।२।।

तस्य ꣳ इत्यस्य तिस्रः विधाः = प्रकाराः, यस्य, तस्य भावः = त्रिविधत्वमुक्तं स्यात् । किं तदित्याह—दीर्घादक्षरात्परो ह्रस्वः[4] = एकमात्राकालः । ह्रस्वात्परो दीर्घः = द्विमात्राकालः । संयुक्ताक्षरे परे गुरुः द्विवर्णात्मकः ।

तपूꣳषि (सं० १३।१० पद० १३।९)

शतꣳहिमाः (सं० २।२७ पद० २।२७)

भेषजꣳश्रिया (सं० २१।३८ पद० २१।३५)

प्यायताꣳ[5]श्रोत्रम् (सं० ६।१५ पद० ६।१३)

अत्रापि कश्चिद् विशेषोऽमोघनन्दिन्याम्—

'अनुस्वारो द्विमात्रः द्विमात्रात् परोऽपि ऋकारो[6]दये व्यञ्जनपरे' ।

---

१. ꣳ मित्या ङ क. घ.

२. फे न ख

३. तꣳ प्राचीनपाठः

४. ह्रस्वो क. घ.

५. यना घ.

६. कावो क.

दे॒वाना॒ ꣳ हृद॑ये (सं० १६।४६ पद० १६।४६)

'मा॒ꣳस॑[1]पच॑न्या' (सं० २५।३६ पद० २५।३४)

इत्यत्र तु न ꣳ कारोच्चारणम्, अनुस्वाराभावात् ऋक् प्रातिशाख्ये नकारलोपादिस्वरानुनासिकत्वयोर्विधानात्तदनुसरणस्यैवौचित्यात्, अत्र विशेषानुक्तेः।

**[५६५] परसवर्णेष[2]त्प्रकृत्या चान्यत्र ।।प्र. प. ३।३।।**

श-ष-स-हेभ्योऽन्यत्र तु मकारस्य परपंचमविधानात् (शु० प्रा० ज्यो०) तस्य स्पष्टमुच्चारणे प्राप्ते परस्य वर्णस्य स[3]वर्णो यः पंचमः तस्य ईषत्सादृश्येन उच्चारणं स्यात्।

तञ्जा॒[4]नन् (सं० ३।१४ पद० ३।१४)

इत्यादौ

वाजाञ्जयतु[5] (सं० ५।३७ पद० ५।३७)

इत्यादिवत् [6]ञकारादेर्न स्पष्टमुच्चारणम्।

[विसर्गे विशेषधर्मकथनम्]

**[५६६] विसर्गेष्वी[7]षद्विरामः ।।प्र. प. ३।४।**

विसर्गेषु नान्तरीयका[8]र्द्धमात्राकालापेक्ष[9]या किंचिदधिको विरामः। अवसानं कृत्वाग्रिमवर्णोच्चारणं कार्यम्।

व्वसो॑ꣳ प॒वित्र॑मसि[10] (सं० १।२ पद० १।२)

याः फ॒लिनी॒ꣳ (सं० १२।८९ पद० १२।८०)

[अकारोच्चारणे विशेषधर्मकथनम्]

**[५६७] पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवति ।।प्र. प. ३।५।।**

---

१. पांस्य क.
 न्या''''स्वारा नास्ति घ
२. वर्सेषत् क.
३. स नास्ति क. घ
४. तज्जा क.
५. यनु घ.
६. भ घ.
 अ ख.
७. गेंषीष घ.
८. यार्द्धमा क. घ.
९. पेक्ष्या घ.
१०. असि न ख

पदस्यादिभूतस्य हल्संयुक्तस्य अकारस्य ह्रस्वस्य[1] ईषद्दीर्घता च एकमात्राकालापेक्षया किंचिदधिककालोच्चारणं स्यात् ।

व्व[2]सोः' पुवित्रम् (सं० १।२ पद० १।२)

पदादिस्थस्येति किम्—

व्वायवं÷ (सं० १।१ पद० १।१)

हल्[3]संयुक्तस्य किम्—

अ[4]नु' नुद्व (सं० ३४।९ पद० ३४।९)

अकारस्येति किम्—

ध्रुवा (सं० २।६ पद० २।६)

॥ इति कात्यायनीये प्रतिज्ञापरिशिष्टे अन्तिमा तृतीया कण्डिका ॥

## ॥ अथ याज्ञवल्क्यशिक्षोक्ता हस्तेन प्रदर्शनीया विषयाः लिख्यन्ते ॥

मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः ॥

[ या० १।६१ पृ० ४८ ]

[5]पञ्चाङ्गुल्यं पकारे च, तकारे कुण्डलाकृतिः[6] ॥
ककारान्ते टकारान्ते ड-णेतर्जनिकां नमेत् ।

[ या० शि० १।६२ पृ० ४८ ]

अनुस्वारेऽङ्गुलि[7]क्षेपश्चाङ्गुष्ठाकुञ्चनं लघौ ॥
दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तितः ।

[ या० शि० १।६४ पृ० ५० ]

---

१. स्य नास्ति घ.

२. वासोः घ.

३. सं० न ख

४. अनु''''स्य किम् नास्ति क. घ.

५. पञ्चा''''नमेत् नास्ति क.
मुद्रित या० शि० पुस्तके अयमर्धः अग्रेतनार्धानन्तरमस्ति ।

६. कृति घ.

७. लि नास्ति क.
मुद्रित या० शि०—'अङ्गुष्ठाकुञ्चनं लघावनुसारे त्वपाॐरसम्' इति पाठः ।

ऊर्ध्वंक्षेपाच्च [1]यश्चोष्मा अधःक्षेपाच्चयो भवेत् ॥
एकैकामुत्सृजेदधीरः स्वरिते तूभयं क्षिपेत् ।
[ या० शि० १।६३ पृ० ४९ ]

द्विमात्रिके क्षिपे[2]देकां मात्रिके तूभयं क्षिपेत् ।
[ या० शि० १।६७ पृ० ५२-५३ ]

[3]स्वरितं यद्भवेत्किंचित् वकारं ह्रस्व संयुतम् ।
तत्रोष्मणि[4] विजानो[5]यान् निक्षेप उभयो रपि ।
[ या० शि० १।६६ पृ० ५२ ]

जात्ये च स्वरिते चैव वकारो यत्र दृश्यते ।
कर्त्तव्यस्तूभयोः क्षेपः सदस्यैरिति दर्शनम् ।
[या० शि० १।६८ पृ० ५३ ]

अस्यार्थः—मकारे मुष्टिः ।
नकारे अगुष्ठेन[6] तर्जनीनखग्रहणम् ।
पकारे पंचागुलीमेलनम् ।
तकारे कुंडलाका[7]रः ।
ककारे टकारे[8] ङकारे[9] णकारे च तर्जनीमधोनामयेत् ।
एते प्रकाराः अवसानस्थ[10] वर्णेषु ।
सर्वत्रानुस्वारे अङ्गुष्ठा कुंचनम् । गुरौ तु अङ्गु[11]लिप्रसारणम् ।
स्वरपरम् अनुनासिकं 'रङ्ग' इति शिष्टा व्य[12]वहरन्ति ।

---

१. योष्मा स्यादधः''''या''''इति मुद्रिते पाठः ।
२. भवेदेकां क.
३. 'स्वरितं यद्भवेत्किन्चित् सवकारोष्मकं ततः ।
ह्रस्वं वा यदि वा दीर्घं निक्षेप उभयोरपि ॥' इति मुद्रित पाठः ।
४. त्रोष्मा घ.
५. तीयात् घ.
६. न नास्ति क. घ.
७. करः
८. टकारे नास्ति घ. क.
९. उकारे घ
१०. नस्य क.
११. अङ्गुष्ठप्रसारणम् क.
१२. व्याहरन्ति क. घ.

उक्तं च पाणिनीयशिक्षायाम् :—

यथा सौराष्ट्रिकानारी तक्राँ इत्यभिभाषते ।
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ।

[२६ श्लो०] [या० शि० २।७० पृ० १२७]

रङ्गे तर्जनीप्रसारणम् ।

उदात्तात् परे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात् प्रचयाच्च परे कनिष्ठिकायाः । ह्रस्वात् स्वरितात् परे उभयोः । दीर्घात् परे कनिष्ठिकायाः । वकारयुक्ताद्दीर्घादपि परे उभयोः । यकारयुक्तजा[1]त्यस्वरिताद्दीर्घादपि द्वयोरेव ।

## अथ अष्टविकृतिलक्षणप्रकरणम्[2]

### [ विकृति पाठप्रकरणप्रतिज्ञा ]

**अथ जटाद्यष्टविकृतीनां लक्षणानि लिख्यन्ते ।**

---

१. जातपर क.

२. अथ जटाद्यष्टविकृतिलक्षण प्रकरणे टिप्पणी

अवधेयम्—

I. प्रकरणमिदं 'ज' पुस्तके नास्ति ।

II. 'ङ' संज्ञके वाराणसीमुद्रिते सभाष्ये शुक्लयजुःप्रातिशाख्ये ४७१ पृष्ठतः ४९२ पृष्ठपर्यन्तं यत् 'जटाद्यष्टविकृतिलक्षणं' मुद्रितं तेन ज्योत्स्नापाठः संवदतीति तस्यापि पाठभेदोऽत्र समावेशितः ।

III. प्रतिशाख्यप्रदीपिकाशिक्षायामप्येष ज्योत्स्नापाठः उद्धृत इति तस्य पाठभेदाः 'शि' सङ्केतेन प्रदर्शिताः ।

IV. एतत्प्रकरणोदाहरणेषु द्वित्व स्वरादिकं नास्ति ख पुस्तके । 'घ' 'शि०' पुस्तकयोः स्वराभावः द्वित्वादयोऽपि यत्र कुत्रचिदेव । अतः सम्प्रदायमनुसृत्य द्वित्व—स्वरादि सन्निवेशोऽत्र सम्यग्ज्ञानाय मया कृतः । 'ङ' पुस्तके स्वरसत्त्वेऽपि सर्वत्र द्वित्वाद्यादरो नास्ति । पुस्तकेषु लेखकप्रमादात्कुत्रचित् स्वरभेदेऽपि वैदिकेषु नैयत्येन ये स्वराः प्रदर्श्यन्ते तेषामेवात्राङ्कनं विहितम् ।

V. पूर्वरूपसन्धौ लौकिकवाक्येषु सर्पाकृति 'ऽ' सङ्केतं शिष्टाः प्रयुञ्जते । परमयं सङ्केतो माध्यन्दिनीयवेदे विवृत्तिबोधकः अनवान मात्राविराम-

[ विकृतिपाठाध्ययनमहिमा ]

**तत्र विकृतीनां पाठे फलं पङ्क्तिपावनत्वम्,**

**"जटादिविकृतीनां ये पारायणपरायणाः ।**
**म[1]हात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः ।।"**

इत्यादित्यपुराणात् । अन्यान्यपि विष्णुलोकादि[2] फलानि वाराहपुराण-पा[3]राशर स्मृत्यादिषु ।

[ अष्टविकृतिनामानि ]

तासां विकृतीनां[4] नामानि प्रदर्श्यन्ते[5]—

**जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।**
**अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ।। १ ।।**

[6]क्रमः पूर्वो यासां ताः । आसां क्रमः प्रकृतिरित्यर्थः ।

[ जटाविकृतिलक्षणम् ]

तत्र प्रथमत्वाज्जटालक्षणमाह[7]—

**क्रमं यथोक्तं प्रब्रूयाद् व्युत्क्रमेण क्रमेण च ।**
**सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः ।। २ ।।**

---

फलकश्च सम्प्रदाये व्यवह्रियत इति तत्रैव विवृत्तिस्थलेषु समादृतोऽयं] सङ्केतः । कारिकासु व्याख्याग्रन्थे तु लोकवदेव पूर्वरूपसन्धिपरिचायकत्वेन 'ऽ' सङ्केतोऽप्यमादृत इति ध्येयम् ।

VI. जिज्ञासूनां सुखबोधाय येषां मन्त्राणामत्र उदाहरणत्वेन विकृतपाठो दत्तोऽस्ति तेषां कृत्स्नतया संहितापाठः पदपाठः—क्रमपाठः अपेक्षितस्थलेषु जटापाठश्च निर्दिश्यते ।

१. माहात्मा ख,
२. कानिफ शि.
३. पराश. घ.
४. विकृतीनां नास्ति घ. शि.
५. दर्शयन्ते ख.
६. क्रमः''''रित्यर्थः नास्ति शि०
७. आह नास्ति शि.

[1]क्रमं यथोक्तं द्वि-त्रि-चतुष्क[2]मात्मकं पुनश्च तमेव[3] वैपरीत्येन[4] पुनश्च क्रमेण एवं त्रिवा[5]रं सर्वसन्धिषु लक्षणयुक्तं पठेत्, सा[6] जटा इति तत्वज्ञैरुच्यते। [7]उदाहरणं यथा—

व्वा॒यवं॑स्थ स्थ व्वा॒यवो॑ व्वा॒यवं॑स्थ ॥ ( पद. १।१; सं. १।१ ) इत्यादि।[8]

**स्वापूर्वांशं पदद्वन्द्वं स्वागर्भे त्रि-चतुष्क्रमे।**
**पुनरुक्तमसन्देहार्थं जटात्वं न चार्हति ॥ ३ ॥**

'सु-आ' इति पदद्वयगर्भे त्रिक्रमे

'मो षू णं ÷' (पद ३।४५ सं० ३।४६)

'सोमे॑नातनच्मि' (पद १।४; सं० १।४) 'इत्यादौ,

तथा चतुक्रमे

'गोम॑दू षुणा॑ सत्या' (पद २०।७२ सं० २०।८१)

इत्यादौ-'सु-आ' पूर्वांशं पदद्वयं असन्देहार्थं द्विपदत्व[9]भ्रमवारणाय

'सुनः' (पद ३।४५ सं० ३।४६ पद २०।७२ सं० २०।८१;) इत्यत्र क्रमपाठे

आतंनच्मि (पद १।४; सं० १।४) इत्यत्र क्रमपाठे इति पुनरुच्चारितं जटाभावं नार्हति।

'असन्देहार्थम्' इति हेतुगर्भं विशेषणम्। [10]यथा—'उदुत्यम्, (पद ७।३९ सं० ७।४१) इत्यत्र क्रमपाठे द्विपदत्वभ्रमवारणाय 'ॐ इत्यूँ' इति मध्यस्थ[11]स्य वेष्टनम्

---

१. इत-पूर्वं 'अस्यार्थः' इति शि.

२. चतुः क्रमा ख.

३. मे वं ख.

४. त्येत घ.

५. पुनरपि 'त्रिवारं' ङ.

६. स्मा शि.

७. उदा····यथा नास्ति ख. शि.

८. इत्यादि शि. एव।

९. त्व नास्ति ख.

१०. तथा ख.

११. स्थ नास्ति ख.

तथा। इदं तु न[१] क्रमः। अतो न[२] जटा कार्या[३]।

[ जटाविकृतौ पञ्चानां क्रमाणां निर्देशः ]

अथ जटायां [४]कति सन्धय इति प्रदर्शनार्थं जटायां पठ्यमानान् क्रमान् नामतो निर्दिशति—

**अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा।**
**सङ्क्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ॥ ४ ॥**

व्वायवं स्त्थ—इत्यनुक्रमः।

स्त्थ स्त्थ —इत्युत्क्रमः।

स्त्थ व्वायवं ÷ —इति व्युत्क्रमः।

व्वायवो' व्वायवं ÷ —इत्यभिक्रमः।

व्वायवं[५] स्त्थ (पद १।१ सं० १।१)—इति स[६]ङ्क्रमः।

इमे पञ्च क्रमा एव पृथक् पृथक् पठनेन 'पञ्चसन्धिः' इति वैदिकैः पठ्यन्ते[७] ॥ ४ ॥

[ व्युत्क्रमे स्थितोपस्थितपाठव्यवस्था ]

[८]कस्मिन् क्रमे किं प्रमाणमित्याह—

**न स्थितोपस्थिते ये स्युर्जटायां व्युत्क्रमे न ते।**

ये विधयः स्थितोपस्थिते न भवन्ति ते जटायां व्युत्क्रमे न पठनीयाः। [९]उदाहरणं यथा—

---

१. 'तु' इत्यतः पूर्वं 'न' घ. ङ.
२. जटा इत्यतः परं 'न' शि.
३. क. शि. पुस्तकयोः श्लोकोऽयं सव्याख्यश्चतुर्थत्वेन दृश्यते.
४. 'कति''''जटायाम्' इत्यधिकः पाठः क घ. ङ.
५. व नास्ति ख
६. स ङ् मः ङ
७. 'इमे''''पठ्यन्ते' पर्यन्तं शि. एव। पठ्यते शि. पाठः।
८. इत आरम्य ['माला' लक्षणात्पूर्वं] 'विकृतिषु बोध्यः' इति पर्यन्तं पाठः शि. नास्ति।
९. 'उदाहरणं यथा' इति ङ. एव

१. जा॒स्प्पृत्त्य ꣳ सु॒ यमं ꣳ सु॒ यमंञ्जा ꣴ पृ॒त्त्यञ्जांस्प्पृ॒त्त्य ꣳ सु यमंम् ॥ (पद० ३३।९ सं० ३३।१२ जटापाठः)

२. व्वसंवेहु॒प्पंतंयेहꣴ पतंये॒ व्वसंवे॒ व्वसंवेहु॒प्पंतंये ॥ ( पद ९।१९ सं० ९।२० जटापाठः )

३. इ॒त॒न्धू॒ षा॑हौ धू॒ः स॒हा॒वि॒त॒मि॒त॒न्धू॒ षा॑हौ ॥ ( पद ४।३३ सं० ४।३३ जटापाठः )

४. दा॒व्वा॒र्घा॒टस्ते ते दांर्वाघा॒तो दांर्वाघा॒टस्ते (पद २४।३५ सं० २४।३५ जटापाठः) ।

५. व्वा॒यवो॑ व्वन॒षंदो॑ व्वन॒सदो॑ व्वा॒यवो॑ व्वा॒यवो॑ व्वन॒षंदं ÷ (पद ३३।१ सं० ३३।१ जटापाठः)

६. ऋ॒त॒स्प॒ते॒ त्वष्टु॒ स्त्वष्टु॑ऋतंपतऽऋतस्पते॒ त्वष्टु॑ ÷ (पद २७।३४ सं० २७।३४) ।

७. उ॒भे सु॑श्चन्द्र सुचन्द्रो॒भ[1] उ॒भे सु॑श्चन्द्र (पद १५।३९ सं० १५।४३) ।

८. बृ॒ह॒ तीन्दु॒दु॑क्ष॒न् दुघु॑क्षन् बृह॒ तीम्बृ॑ह॒ तीन्दु॒दु॑क्षन्(पद ३३।२५ सं० ३३।२८)।

९. श्रेयंस्कर॒ भूयंस्क्कर॒ भूयंꣴ कर॒ श्रेयंꣳकर॒ श्रेयंस्क्कर॒ भूयंस्क्कर (पद १०।२६ सं० १०।२८)

१०. आ॒यु॒ ष्प्पाऽआयु॒ रायु॑रायु॒ः पाऽआयु॒ ष्प्पाऽआयु॑ ÷ (पद २२।१ सं० २२।१)

११. सिषांसन्तो व्वनामहे व्वनामहे॒ सिसांसन्तꣳ सिषांसन्तो व्वनामहे (पद २६।१७ सं० २६।१८) ।

१२. अ॒ग्ने॒ऽ पु॑रीष॒वाहंणꣳ पुरीष॒ वाहंनो॒ ग्नेर॒ग्नेऽ पु॑रीष॒वाहंणꣳ ॥ (पद ११।४१ सं० ११।४४) ।

१३. एन॒मायु न॒गयु॒, न॒गे॒ न॒मे॒ न॒मायु नुक् (पद २९।१३ सं० २९।१३) ।

१४. मा॒म॒हन्ता॒मदिंति॒रदिंतिर्मंमहन्तां मामहन्ता॒मदिंतिꣳ (पद ३३।३८ सं० ३३।४२) ।

१५. दे॒वी उ॒षासा॑ उ॒षसौ दे॒वी दे॑वी उषासौ (पद २१।४६ सं० २१।५०) ।

१६. प॒र्जन्यो॑ वृष्टि॒मां इ॑व वृष्टि॒मानिंव प॒र्जन्यंꣳ पर्ज्जन्यो॑ व्वृष्टि॒मां इ॑व (पद ७।३८ सं० ७।४०) ॥

---

१. न्द्रोभे॒ ख.

[ स्थितोपस्थितपाठव्यवस्थापवादः ]

एतस्यापवादमाह—

**वर्ज्जयित्वा विश्प्पतीव—**

इदमुदाहरणं[1] वर्ज्जयित्वा। अत्र स्थितोपस्थिते अनुच्चार्यमाणे[2]ऽपि एकादेशो[3] व्युत्क्रमे उच्चारणीयः।

विश्पती'व बीरिटे बीरिटे व्विश्प्पती'व व्विश्प्पती'व बीरिटे (पद ३३।४० सं० ३३।४४)

[मध्यसन्धित्रये व्याकरणप्रामाण्येन सन्धिपाठः]

**............विशेषविषयान् विधीन् ॥ ५ ॥**

**वैकल्पिकान् व्याकरणं प्रमाणं मध्यगत्रये ॥**

सन्धौ। उत्क्रम-व्युत्क्रमा-ऽभिक्रमेषु सन्धिविषये व्याकरणे वैकल्पिकान् जिह्वा-मूलीयो-पध्मानी[4]यादीन् प्रातिशाख्ये विशेषविषयान् 'प्रकृत्या क-खयोः फफयोश्च' (ज्यो० २३८ प्रा० ३।११) इत्यादिविशेषविहितान् त्यक्त्वा अन्यत्र व्याकरणं प्रमाणम्। पूर्वोक्तेषु तु[5] प्रातिशाख्यमेव।

१. काम॑धुक्षोऽधुक्ष॒ꣳ काङ्कामं॑धुक्षꣳ। (पद० १।३ सं० १।३)

च पु॒ष्प्पणी॑ꣳ पु॒ष्पिणी॑श्च च पु॒ष्प्पणी॑ꣳ। (पद० १२।८० सं० १२।८९)

—अत्र[6] जिह्वामूलीयोपध्मानीयौ न।

२. स॒हस्र॑धारन्दे॒वोदे॒वः स॒हस्र॑धारꣳ स॒हस्र॑धारन्दे॒वः (पद १।३ सं० १।३)।

—अत्र 'वाशरि' (पा० ८।३।३६) इत्यस्य वैकल्पिकत्वात् पक्षे सत्वम्, 'अविकारꣳ शाकल्यः शषसेषु[7]' (ज्यो० २३७ प्रा० ३।१०) इति विशेष विहितत्वात्[8] न।

---

१. उदाहरणं नास्ति घ. ङ

२. माणो ख.

३. शः घ.

४. नीया नास्ति ङ.

५. तु नास्ति ङ.

६. अत्रोदाहरणद्वये इति ङ पाठः।

७. शषसेषु नास्ति क. ख. घ.

८, त्वान्न इति ङ,

३. स्थ महो महं स्स्थ स्स्थ महं÷ (पद ३।२० सं० ३।२०)

—अत्र 'शर्परे खरि विसर्ग'स्य विसर्गः' (पा० ८।३।३५) इत्यस्य वैकल्पिकत्वात् पक्षे सत्व-विसर्गौ 'लुङ्मुदि जित्परे[२]' (ज्यो० २३९ प्रा० ३।१३) इत्युक्तत्वान्न।

४. चक्रे व्वायव्व्यान् व्वायव्व्याँश्चक्रे चक्रे व्वायव्व्यान् (पद ३।१६ सं० ३।१६)।

—अत्र 'अनुनासिकात्परोऽनुस्वारः[३]' (पा० ८।३।४) इति पक्षेऽनुस्वारः 'अनुनासिकमुपधा' (ज्यो० १९१ प्रा० ३।१३१) इत्युक्तत्वान्न।

५. श्रौत्र्य नु ष्टुबंनु स्तुप् श्रौत्री श्रौत्र्यनु ष्टुप् (पद १३।५२ सं० १३।५७)

—अत्र 'शश्छोटि' (पा० ८।३।६३) इति तवर्गात् 'परश्चास्पर्शपरश्छम्[४]' (ज्यो० १८९ प्रा० ४।९७) इति विशेषविधानान्न।

६. सम्भ्रियमाणᳪ सम्म्राट् सम्म्राट् संम्मिभ्र यमाणᳪ सम्भ्रियमाणᳪ सम्म्राट् (पद ३९।५ सं० ३९।५)

—अत्र 'ङः सि धुट्' (पा० ८।३।२९) इति 'ङ्नौक्काभ्याᳪसकारे[५]' (ज्यो० २२२ प्रा० ४।१०७) इति नकारे[६] विशेषविहितत्वान्न।

उदु त्यन्त्यम्वुदुदु त्यम् ( पद ७।३९ सं० ७।४१ )।

—अत्र 'मय उञो' वो वा'[७] ( पा० ८।३।३३ ) इत्यस्य वैकल्पिकत्वात् पक्षे प्रकृतिभावः 'उकारोऽपृक्तो[८] स्पर्शात्' ( ज्यो० १५६ प्रा० ४।९० ) इत्युक्तत्वान्न।

ऋत्तसदंन्यृतसदंनमृतसदंनमृतसदंन्यृतसदंन्यृतसदंनम् (पद० ४।३६, सं० ४।३६)

—अत्र 'ऋत्यक' ( पा० ६।१।१२८ ) इति पाक्षिकः प्रकृतिभावो न 'कण्ठ्य ऋकारे ह्रस्वम्[९]' ( ज्यो० १२२ प्रा० ४।४९ ) इति विशेष विधानात्। अत एव—

---

१. विसर्गस्य विसर्ग इति नास्ति क. ख.
२. जित्परे नास्ति ख. क.
३. परः इत्यन्तमेव क. ख.
४. छम् नास्ति क. ख.
५. सकारे नास्ति क. ख.
६. न कारे इति नास्ति ङ
७. मय उञ इत्येव क. ख
८. पृक्तौ ख
९. ह्रस्वम् इति नास्ति क. ख.

ऋ॒ता॒षा॒ड्ऋ॒तधा॑मऽऋ॒तधा॑मऽऋ॒ता॒षा॒ड्ता॒षा॒ड्ऋ॒तधा॑मा (पद० १८।३६ सं० १८।३८)

—अत्र पाक्षिको गुणो न।

ऋ॒श्या॒नाल॑भते लभत॒ अऽऋ॒श्या॒नृ॒श्या॒नाल॑भते ( पद २४।२७ सं० २४।२७ )

—अत्र 'आर्' इति न प्रातिशाख्यस्थत्वात्। 'उपसर्गादृति धातौ'[1] ( पा० ६।१।९१ ) इत्यस्य तु धातुत्वाभावान्न प्राप्तिः[2]। अतः[3] 'ऋत्यकः' ( पा० ६।१।१२८ ) इति सूत्रेण अत्र प्रकृतिभावः।

पोषे॑ण॒ रा॒यो रा॒यः पोषे॑ण॒ पोषे॑ण रा॒यः ( पद १५।७ सं० १५।७ )

—अत्र 'रायः सहस्पोषपुत्रयोः'[4] ( ज्यो० २५० प्रा० ३।२५ ) इति न प्रातिशाख्यस्थत्वात्।

यूप॑ऽआप्यत ऽआप्यते॒ यूपो॒ यूप॑ऽआप्यते ( पद १९।१५ सं० १९।१७ )।

ऊ॒रू पादौ॒ पादा॑ ऽऊ॒रूऽऊ॒रूपादौ॑ ( पद ३१।१० सं० ३१।१० )।

—अत्र 'लोपः शाकल्यस्य' (पा० ८।३।१९) इत्यस्य वैकल्पिकत्वात् पक्षे यवयोः[5] श्रवणं प्राप्तं 'यवयोः पदान्तयोः स्वरमध्ये लोपः[6]' ( ज्यो० १२० प्रा० ४।१२७ ) इत्युक्तत्वान्न भवति।

अ॒स्मिन्योनौ॒ योना॑व॒स्मिन्न॒स्मिन्योनौ॑ ( पद १२।४६ सं० १२।५४ )।

—अत्र पूर्वोक्तेन वकारलोपः प्राप्तः 'न वकारस्यासस्थान एकेषाम्[7]' ( ज्यो० १२१ प्रा० ४।१२८ ) इति विशेष[8]विहितत्त्वान्न भवति[9]।

छ॒न्द॒स्य॒ख्व॑न्नु॒व्वं॒श्छ॒न्दि॒स॒ छ॒न्द॒स्य॒ख्व॑न् ( पद २९।१५ सं० २९।१५ )।

रु॒क्मोऽअ॒न्तर॒न्ता रु॒क्मो रु॒क्मोऽअ॒न्तः ( पद १२।२ सं० १२।२ )।

---

१. धातौ नास्ति क. ख.

२. प्राप्तः ङ

३. 'अतः' इत्यारम्य 'प्रकृतिभावः' पर्यन्तं पाठो नास्ति ङ

४. स्पोषपुत्रयोः इति नास्ति क. ख.

५. यवयोः इति नास्ति ङ

६. स्वरमध्ये लोपः इति नास्ति क. ख.

७. न वकारस्य इत्येव सूत्रसङ्केतः क. ख.

८. विशेष इति नास्ति ङ

९. भवति इति नास्ति क. ख. घ.

'षोडंशाक्षरेण षोडुशꣳ[1] षो'डुशꣳ षोडंशाक्षरेणु षोडंशाक्षरेण षोडुशम्'[1] (पद ९।३३ सं० ९।३४)।

—इत्यादौ व्याकरणानुसृतत्त्वाच्च 'चछयोः शम्' (प्रा० ३।१३३) 'रेफे[2] लुप्यते दीर्घं चोपधा[3]' (ज्यो० २२५ प्रा० ४।३५)

'अनुस्वारꣳ रोष्मसु मकारः'[4] (ज्यो० २१३ प्रा० ४।१) इत्यादि भवति। एवमन्यदप्यूह्यम्।

[ आद्यन्तक्रमयोः प्रातिशाख्यस्य प्रामाण्यम् ]

**आद्य[5]न्तयोः प्रातिशाख्यं मानम्,……………।**

अनुक्रम—सङ्क्रमयोस्तु प्रातिशाख्यं प्रमाणं, संहिताधर्मवत्त्वात्। उक्तान्युदाहरणानि।

सर्वे[6]ष्वपि प्रतिज्ञासूत्रगा धर्माः।

सर्वेष्वपि पञ्चसु क्रमेषु जकारादिपठनरूपाधर्माः[7] ज्ञेयाः। 'प्रतिज्ञासूत्रगा' इत्युपलक्षणं, शिक्षास्थस[8]र्वधर्माणामपि। उक्तान्येवोदाहरणानि।

[ उदात्तादिस्वरविषये प्रामाण्यनिर्देशः ]

**……सर्वस्वरेषु च[9] ॥ ६ ॥**

सर्वेषु[10]स्वरविषयेषु[11] च [12]पुनः प्रातिशाख्यमेव प्रमाणम्। तद्विचारस्तु स्वर-

---

१. ङातिरिक्त पुस्तकेषु—षोडशꣳ षोडशाक्षरेण षोडशाक्षरेण षोडशꣳ षोडशꣳ षोडशाक्षरेण। इत्युदाहरणपाठः स माध्यन्दिनीय शाखायामनुपलब्ध एव भवति।
२. रेफो ख
३. दीर्घं चोपधा इति ङ. एव
४. मकारः नास्ति क. ख.
५. अद्यान्तयोः ङ
६. समेष्वपि ङ
७. धर्मा इति नास्ति क. ख. घ.
८. सर्वं नास्ति ङ
९. तु इति ख. ङ पाठः
१०. सर्वेषु नास्ति क. ख. घ.
११. विषये इति क. ख. घ
१२. च पुनः नास्ति ख. घ

प्रकरणे उक्तः। यान्युदाहरणानि संहितायां न दृश्यन्ते तानि प्रदर्श्यन्ते—

अञ्जानाऽअभ्यभ्यञ्जानाऽअञ्जानाऽअभि। (पद १७।९० सं० १७।९७)।

व्विस्वं÷स्वव्विं विस्वं÷ (पद ७।४१ सं० ७।४५)।

यज्ञो भ्यभि यज्ञो यज्ञोऽभि (पद १७।९० सं० १७।९७)

तेऽप्सरसामप्सरसां ते तेऽप्सरसाम् (पद २४।३७ सं० २४।३७)

अभीन्धताभिन्धतामभ्यभीन्धताम् (पद० ११।५८ सं० ११।६१)

इत्यादिप्रकारेण बोध्यम्।

[ विकृतिपाठेषु विशेषोपलब्ध संस्कारनिर्देशः ]

[ उकारस्य 'व' भावः ]

प्रातिशाख्येऽनुक्तत्वाद् व्याकरणस्थान् विधीन् दर्शयति—

**सवर्णेऽपृक्त उः स्पर्शात् स्वरे याति वतामिह॥**

जटायां सवर्णे स्वरे परे स्पर्शात् परः 'उ' इति शब्दो वकारभावं याति। यथा[1]—

उदु त्यन्त्यम्वुदुदुत्यम् (पद० ७।३९ सं० ७।४१)

—अत्र 'मय उञो वो वा' (पा० ८।३।३३) इति वकारः[2]।

[ उकारस्य प्रगृह्यत्वम् ]

**स एव सन्धिनान्यैक्यमापन्नोऽपि प्रगृह्यकः॥ ७॥**

सन्धिविधायकेन शास्त्रेण अन्येन सहैक्यमापन्नोऽपि 'उ' इति शब्दः प्रगृह्यः। यथा[3]—

१. ऊर्द्ध्वऽऊ षु णो' नूर्द्ध्वं सूऽ ऊर्द्ध्वऽऊर्द्ध्वऽ ऊ षु णं÷। (पद ११।३९ सं० ११।४२)

२. उदु' त्वा त्वोऽउदुदु' त्वा (पद० १२।२७ सं० १२।३१)

अत्र [4]ऊकारस्य (१ उदाहरणे) ओकारस्य (२ उदाहरणे) च 'अन्तादिवच्च' (पा० ६।१।८५) इति[5] परादि[6]त्वात् एकाज्निपातत्वेन 'निपात एकाजनाङ्' (पा० १।१।१४) इति प्रगृह्यत्वम्।

---

१. यथा नास्ति क. ख. घ

२. भवतीति विशेषः ङ

३. यथा नास्ति क ख. घ.

४. उकारस्य ङ

५ चेत्यनेन पाठः ङ

६. परादिवत्वात् ङ

[ओकारस्य प्रगृह्यत्वम् ]

## ओकारान्तनिपातानां व्युत्क्रमेऽस्ति प्रगृह्यता ॥

यथा[1]—

१—उपो' ते तुऽ उपोऽउपो'ते (पद० ७६ सं० ७७)

२—अथो षं ये थोऽ अथो षं (पद० १६।८ सं० १६।८)

'ओत्' (पा० १।१।१५) इत्यनेन प्रगृह्यत्वम् । 'ओकारश्च' (ज्यो० ५१६ शु० प्रा० ४।९२) इत्यनेन विहितप्रगृह्यत्वनिमित्तप्रकृतिभावस्तु इतौ (ज्यो० ५१६ शु० प्रा० ४।९१ अनुवृत्तिः) प्रकृतिभावविधानादन्यत्र न । अत एव—

ठिन्नष्णवे ते (सं० ५।१६ पद० ५।१६)

इत्यत्र[2]अवादेशः ।

[3]अथो षे ऽ अंस्य (सं० १६।८ पद० १६।८)

[4]अथोऽ अन्नस्य (सं० ३।४३ पद० ३।४२)

—इत्यादौ तु 'प्रकृतिभावऽ ऋक्षु' (ज्यो० १३३ प्रा० ४।८१) इत्यनेन प्रकृतिभावत्वम्[5] ।

[आ + ॐ एतयोः पूर्वरूपसन्धिविधानम् ]

## सपूर्वाकार ओङ्कारः प्रयात्योम्भावमत्र हि ॥८॥

पूर्वेण अकारेण सहित ॐ शब्दो जटायाम् ओम्भावं प्रयाति । यथा[6]—

ओम्प्रप्रोमोम्प्र०[7] (पद० २।१३ सं० २।१३ जटा)

अत्र 'ओमाङोश्च' (पा० ६।१।९५) इत्यनेन पररूपत्वम्[8] ।

---

१. नैतत्पदं क. ख.

२. इत्यवादेशः क. ख. घ.

३. नैतदुदाहरणं ङ

४. एतदुदाहरणं ङ एव

५. नैत पदं ख.

६. यथा नास्ति क. ख. घ.

७. ॐ प्र द्वयोरप्युदात्तत्वात्स्वरचिन्हाभावः ।

८. पररूपम् इति क. ख. घ.

[प्रोक्तनियमानां सर्वासु विकृतिषु व्यवस्थापनम्]

**अयमेव हि शास्त्रार्थः सर्वासु विकृतिष्वपि ॥८॥**

जटोक्त एव शास्त्रार्थो मालादिसप्तसु विकृतिषु बोध्यः ।

[मालाख्यविकृतिलक्षणम्]

[मालाभेदौ, सामान्य माला लक्षणम् च]

[1]अथ माला । सा द्विविधा—पुष्पमाला क्रममाला च । पुष्पमालालक्षणमाह—

**माला मालेव पुष्पा[2]णां पदानां ग्रन्थिनो हि सा ।**
**आवर्त्तन्ते त्रयस्तस्यां क्रम-व्यु[3]त्क्रम-सङ्क्रमाः ॥**

[4]अस्यार्थः—यथा पुष्पाणां माला ग्रन्थिनो परस्परसम्बन्धकारिणी तथा पदानां परस्परसम्बन्धकारिणो या विकृतिः सा माला । तस्याः पठनप्रकारमाह—तस्यां मालायां जटोक्तपञ्चक्रममध्ये त्रयः क्रम-व्युत्क्रम-सङ्क्रमाः आवर्त्तन्ते = पदावृत्त्या पठ्यन्ते ।

यथा[5]—

सुसंमिद्धाय शोचिषे' ।शोचिषे सुसंमिद्धाय[6] । सुसंमिद्धाय शोचिषे' । सुसंमिद्धायेति सु । संमिद्धाय। शोचिषे'घृ तम्। घृ त ठं० शोचिषे'। शोचिषे'घृ तम् । घृ तन्तीव्रम्। तीव्रङ्घृतम् । घृ तन्तीव्रम् । तीव्रं जु'होतन । जु होतनतीव्रम् । तीव्रञ्जु'होतन । जु होतनेतिं जुहोतन ॥

अग्नये' जातवे'दसे । जातवे'दसे ग्नये' । अग्नये' जातवे'दसे । जातवे'दसऽ इतिं जात । व्वे'दसे ॥ [पद० ३।२ सं० ३।२ ]

---

१. अथ ...माह इति पाठः नास्ति ङ पुस्तके ।

२. पुष्पाणां ङ

३. व्यत्क्रम ख.

४. 'अस्यार्थः'....इत्यारभ्य 'पदावृत्त्या पठ्यन्ते' पर्यन्तं पाठः नास्ति शि.

५. यथा नास्ति क. ख. घ.

६. इत उत्तरम् 'इत्यादि' इति लिखित्वा उदाहरणपरिसमाप्तिः शि.

[क्रममालालक्षणम्]

अथ क्रममाला[1]लक्षणमाह—

**ब्रूयात्क्रम—विपर्य्यासावर्द्धर्च्चस्यादितोऽन्ततः ।**
**अन्तं चादिनयेदेवं क्रममालेति गीयते ।। ९ ।।**

[2]अस्यार्थः—अर्द्धर्च्चस्य आदितः क्रमं, अन्ततः विपर्यासं क्रमेण पठेत् । अनेन प्रकारेण क्रमम् अन्तं नयेत्,[3] विपर्यासम् आदिं प्रापयेत् सा क्रममालेति ऋषिभिरुच्यते । यथा[4]—

त्रिꣳ॰ शद्धाम' । धीयतऽइतिं धीयते ।
धाम'व्वि । धीयते पतङ्गाय॑ ।
व्विरा'जति । पतङ्गाय व्वाक् ।
राजति व्वाक् । व्वग्रा'जति ।
व्वाक्पतङ्गाय॑ । राजतिव्वि ।
पतङ्गाय॑ धीयते । व्विधाम॑ ।
धीयतऽइतिं धीयते । धाम॑ त्रिꣳ॰ शत्[5] ॥

प्रति वस्तो'ꣳ । द्युभिरिति द्यु । भिः ।
व्वस्तोरह॑ । द्युभिरह॑ ।
अह द्युभिꣳ । अहर्व्वस्तो'ꣳ ।
द्युभिरितिद्यु । भिं ÷ । व्वस्तोꣳ [6]प्रतिं ॥ (पद० ३।८ सं० ३।८)

[शिखा विकृतिलक्षणम्]

अथ शिखा । [7]तल्लक्षणमाह—

**पदोत्तरां[8] जटामेव शिखामार्य्याः प्रचक्षते ।।**

---

१. लक्षणमाह नास्ति शि.
२. अस्यार्थः नास्ति शि.
३. येद् ङ
४. यथा नास्ति शि.
५. इत उत्तरम् 'इत्यादि' ना उदाहरणसमाप्तिः । शि.
६. प्रति नास्ति ङ
७. तत् नास्ति ङ, तल्लक्षणमाह नास्ति शि.
८. त्तरं ख.

अस्यार्थः[1]—पूर्वोक्तां जटामेव अन्ते एकपदाधिकां शिखां विकृतिं मुनयः[2] आहुः।

यथा[3]—

अन्तश्च॑रति चरत्य॒न्तर॒न्तश्च॑रति रोच॒ना[4]। अ॒न्तरित्य॒न्तः। च॒र॒ति॒ रोच॒ना रो॑च॒ना च॑रति चरति रोच॒नास्य। [5]रोच॒नास्यास्य रोचना रो॑च॒नास्य प्प्रा॒णात्। अ॒स्य प्प्रा॒णात्प्रा॒णादस्यास्य प्प्रा॒णाद॑पान॒ती। प्रा॒णाद॑पान॒त्यपा॑न॒ती प्प्रा॒णात्प्रा॒णाद॑पान॒ती। अ॒पा॒न॒तीत्य॑प। अन॒ती॥

व्व्य॑क्ख्यदक्ख्य॒द्द्विव्व्य॑क्ख्यन्न्महि॒षः। अक्ख्॒यन्न्म॒हि॒षो म॑हि॒षोक्ख्य॑दक्ख्यन्न्म॒हि॒षो दिव॑म्। म॒हि॒षो दिव॒न्दिव॑म्महि॒षो म॑हि॒षो दिवम्। दिव॑मिति॒ दिव॑म्॥ (पद० ३।७ सं० ३।७)

## [ रेखा विकृतिलक्षणम् ]

अथ रेखा। त[6]ल्लक्षणमाह—

**क्रमाद् द्वि-त्रि-चतुः-पञ्चपदक्रममुदाहरेत्।**
**पृथक् पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात्॥ १०॥**

अस्यार्थः–[7] क्रमेण द्विपद—त्रिपद-चतुष्पद-पञ्चपद—क्रमानुक्त्वा[8] प्रतिक्रमे पृथक्-पृथक् विपर्यासेन पठित्वा पुनः क्रमं पठेत्, तां विकृतिं रेखामाहुः।

## [ पूर्णमन्त्रानुसृतो रेखापाठः[9] ]

यथा[10]—(२ पदे) मधुनक्त॑म्। नक्त॒म्मधु॑। मधु॒ नक्त॑म्।

(३ पदानि—) नक्त॒मुतोषस॑ः। उ॒षस॒ऽउ॒त नक्त॑म्। नक्त॑मु॒त। उ॒तोषस॑ः।

(४ पदानि—) उ॒षसो॒ मधु॑म॒त्पार्त्थि॑व॒ꣳ रज॑ः। रजः पार्थि॑वम्मधु मदु॒ षस॑ः। उ॒षसो॒ मधु॑मत्। मधु॑म॒त्पार्थिवम्। मधु॑म॒दिति॒ मधु॑। मत्। पार्त्थि॑व॒ꣳ रज॑ः रज॒ऽइति रज॑ः॥

१. अस्यार्थः नास्ति शि.
२. बुद्धिमन्तः इति ङ
३. नैतत्पदं क. ख. घ. शि.
४. इत उत्तरं 'इत्यादि' शब्देनोदाहरणपूर्तिरनुध्याता। शि.
५. 'रोचना''''प्राणात्' नास्ति ङ
६. तत् नास्ति ङ तल्लक्षणमाह नास्ति शि.
७. पदद्वयमेतन्नास्ति शि.
८. नुक्त्वा शि.
९. पूर्णमन्त्रानुसृतो रेखापाठः शि० नास्ति। तस्मात्तत्र नैतदुदाहरणम्।
१०. यथा नास्ति शि०

[२—अर्द्धर्चगामी रेखापाठः][1]

[ऋचः पूर्वार्द्धे रेखापाठः]

(२ पदे—) व्विद्माते । ते व्विद्म । व्विद्माते ।

(३ पदानि-) तेऽअग्ने त्रेधा । त्रेधाग्नेते । तेऽअग्ने । अग्ने त्रेधा । ।

(४ पदानि—) त्रेधा त्रयाणि व्विद्माते । ते व्विद्म त्रयाणि त्रेधा[2] ।

त्रेधा[3] त्रयाणि । त्रयाणि व्विद्म । व्विद्माते ।

[५ पदानि[4]-] ते धाम व्विभृता पुरुत्रा । पुरुत्रा व्विभृता धाम ते ।

ते धाम । धाम व्विभृता । व्विभृता पुरुत्रा । व्विभृतेति वि । भृता ।

पुरुत्रेति पुरु । त्रा ।

[ऋचः उत्तरार्द्धे रेखापाठः]

(२ पदे-) व्विद्माते । ते व्विद्म । व्विद्माते ।

(३ पदानि—) ते नाम परम[5]म् । परमन्नाम ते । ते नाम । नाम परमम् ।

(४ पदानि ·) परमङ्गुहा यद्विद्म । व्विद्म यद्गुहा परमम् । परमङ्गुहा ।

गुहा यत् । यद्विद्म ।

(५ पदानि—) व्विद्मा तमुत्संयतं आ जगन्थ । आजगन्थ यतऽउत्सन्तंव्विद्म ।

व्विद्मातम् । तमुत्सम् । उत्संयतं ÷ । यतंऽआजगन्थ । आजगन्थेत्या ।

जगन्थ ॥ (पद० १२।१८ सं० १२।१९ )

[ध्वजविकृतिलक्षणम्]

अथ ध्वजः । [6]तल्लक्षण[7]माह—

**[8]ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेदिति ॥**

**वर्गे[9] वा ऋचि वा यस्य पठनं स ध्वजः स्मृतः ॥११॥**

अस्यार्थः[10]-वर्गे वा[11] ऋचि वा आदेः क्रमं अन्तपर्य्यन्तं ब्रूयात् । अन्तात्सम्यग् =

---

१. अर्द्धर्चगामी रेखापाठः घ. क. ङ पुस्तकेषु नास्ति । शि. पुस्तकेऽस्ति । तत्रापि स्वराभावः । विदुषां तोषायास्माभिः स्वरसन्निवेशः कृतः ।

२. 'त्रेधा' पदं 'त्रयाणि' इत्यतः पूर्वं शि. तदशुद्धम् ।

३. 'त्रेधा त्रयाणि' अयं क्रमो नास्ति शि. । स आवश्यकः ।

४. अत्र पञ्च पदानि न सन्ति । तस्मात् प्रतिशाख्यप्रदीपशिक्षाकृता कथमेतदुदाहरणं गृहीतमिति सुधियो विचारयन्तु ।

५. 'परम्' इति शि.

६. तत् नास्ति ङ घ.

७. ण नास्ति ख.

८. बूया घ.

९. वर्ग शि.

१०. अस्यार्थः नास्ति शि.

११. वा नास्ति ङ. घ.

यथोक्तं क्रममेव उत्तारयेत् = आदि पर्य्यन्तं पठेत्। एवं यस्य पठनं स ध्वजः[1] = ध्वजाख्यविकृतिर्बोध्या । यथा[2]—

विष्णोः कर्म्माणि । सखेति सखा ।
कर्माणि पश्यत । युज्यᳫं सखा ।
पश्यत यतः । इन्द्रस्य युज्यः ।
यतो व्रतानि । पस्पृशऽइति पस्पृशे[3] ।
व्रतानि पस्पृशे । व्रतानि पस्पृशे ।
पस्पृशऽ इति पस्पृशे । यतो व्रतानि । इन्द्रस्य युज्यः । पश्यत यतः । युज्यᳫं सखा । कर्माणि पश्यत । सखेति सखा । विष्णोᳫं कर्म्माणि ॥ (शु० य० सं० १।६।४ पद० ६।३) ।

## [ दण्डविकृतिलक्षणम् ]

[4]अथ दण्डः । तल्लक्षणमाह—

**क्रममुक्त्वा विपर्य्यस्य पुनश्च क्रममुत्तरम् ।**
**आ[5]ऽर्द्धर्चादेवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ १२ ॥**

क्र[6]ममुक्त्वा, अर्धर्चात् = अर्द्धर्चादिपर्यन्तं पुनः पुनः विपर्यस्य, पुनः क्रमं अर्द्धर्च-समाप्तिपर्यन्तं पठेत् । एवमुक्तोविकृतिविशेषः 'क्र[7]मदण्ड' इत्युच्यते ॥
[8]स यथा—

---

१. 'स' इत्यनन्तरं 'ध्वजनामा विकृतिः' इति वाक्यपरिसमाप्तिः शि.
२. 'यथा' नास्ति शि.
३. इत उत्तरम् ङ पाठः सस्वरः एवम्—व्रतानि पस्पृशे । व्रतानि पस्पृशे । यतो व्रतानि । पस्पृश इति पस्पृशे । व्रतानि पस्पृशे । व्रतानि पस्पृशे । यतो व्रतानि । पस्पृश इति पस्पृशे । पश्यत यतः । इन्द्रस्य युज्यः । कर्माणि पश्यत । युज्यᳫं सखा । विष्णोᳫं कर्म्माणि । सखेति सखा ॥
—अयं पाठः ध्वजनियमेन न संवदतीत्यशुद्धः ।
'व्रतानि पस्पशे'....'इति पस्पशे' इत्याद्यो भागो नास्ति घ । अन्यत्सर्वं ङ पुस्तकेन समानमेव घ पुस्तके ।
४. अथ क्रमदण्डलक्षणमाह घ. ङ., 'तल्लक्षणमाह' नास्ति शि.
५. अर्द्धर्चा ख. शि.
६. क्रममनुलोममुक्त्वा, विपर्य्यस्य विलोममुक्त्वा पुनः क्रमं पठित्वा चकारादनुलोमविलोमैः अर्द्धर्च्चसमाप्तिपर्यन्तं ब्रूयात् । द्वितीयार्द्धर्चादेवमेवोक्त्वाऽनुलोमविलोमैरर्द्धर्चान्तम्पठित्वा एवं क्रमदण्ड इत्युच्यते ।—श्लोकस्यैतद् व्याख्यानं घ. ङ. उपलभ्यते ।
७. क्रमशब्दो नास्ति शि.
८. स यथा नास्ति शि.

यजा॑ नह्ं । नो यज॑ । यजा॑ नह्ं ।

नो मि॒त्रा वरु॑णा । मि॒त्रा वरु॑णा नो यज॑ । यजा॑ नह्ं । नो मि॒त्रावरु॑णा[1] ।

मि॒त्रावरु॑णा यज॑ । यज॑ मि॒त्रावरु॑णा नो यज॑ । यजा॑ नः । नो मि॒त्रावरु॑णा ।

मि॒त्रावरु॑णा यज॑ ।

यजा॑ दे॒वान्[2] । दे॒वान्यज॑ मि॒त्रावरु॑णा नो यज॑ । यजा॑नह्ं । नो मि॒त्रावरु॑णा ।

मि॒त्रा वरु॑णा यज॑ । यजा॑ दे॒वान् ।

दे॒वाँ २ ॥ ऽऋ॒तम् । ऋ॒तन्दे॒वान्यज॑ मि॒त्रावरु॑णा नो यज॑ । यजा॑ नह्ं । नो

मि॒त्रा वरु॑णा । मि॒त्रावरु॑णा यज॑ । यजा॑ दे॒वान् । दे॒वाँ २॥ऽ ऋ॒तम् ।

ऋ॒तम्बृ॒हत् । बृ॒हदृ॒तं दे॒वान्यज॑ मि॒त्रावरु॑णा नो यज॑ । यजा॑नह्ं । नो

मि॒त्रावरु॑णा । मि॒त्रावरु॑णा यज॑ । यजा॑ दे॒वान् । दे॒वाँ २॥ ऽऋ॒तम् ।

ऋ॒तम्बृ॒हत् । बृ॒हदिति॑ बृ॒हत् ॥

अग्ग्ने यक्षि॑ । यक्ष्यग्ग्ने॑ । अग्ग्ने॒ यक्षि॑ ।

यक्षि॒ स्वम् । स्वँय्यक्ष्यग्ग्ने॑ । अग्ग्ने॒ यक्षि॑ । यक्षि॒ स्वम् ।

स्वन्दम॑म् । दम॒ᳫं स्वँय्यक्ष्यग्ग्ने॑ । अग्ग्ने॒ यक्षि॑ । यक्षि॒ स्वम् । स्वन्दम॑म् ।

दममिति॒ दम॑म् ॥ (पद० ३३।३ सं० ३३।३)

[रथविकृतिलक्षणम्]

अथ रथः । [3]तल्लक्षणमाह—

**[4]समे ऋचौ गृहीत्वा च रथवच्चलति क्रमः ।**

**पादशोऽर्द्धर्चशो वाऽपि सहोक्त्या दण्डवद्रथः ॥ १३ ॥**

[5]पादे पादे अर्द्धर्चि वा क्रमविपर्य्यासौ दण्डवत्सह उक्तौ चेत्स विकृतिविशेषो 'रथ' इत्युच्यते[6] । [7]यथा—

---

१. इत उत्तरं शि. पाठः—'मित्रावरुणा नो यज । यजानः । नो मित्रावरुणा' इति पाठः अशुद्धः ।

२. इति उत्तरं 'अनेन प्रकारेण अर्द्धर्चं समाप्तिपर्यन्तं पठेत्' ङ. इत्युपसंहृतम् शि

३. तत् नास्ति घ. ङ 'तल्लक्षणमाह' नास्ति शि

४. 'समे ऋचौ' इत्यर्धो नास्ति ङ.

५. 'ऋचि अर्द्धर्चि पादे वा' इति शि

६. इत उत्तरं शि. पुस्तके केवलं 'अर्द्धर्चसहचारिणः समक्रमस्य रथस्य उदाहरणं दत्तं तदत्र अग्रे प्रदर्शितम् । उदाहरणान्ते—'ज्योत्स्नायां प्रकारत्रयेण रथ उक्तः स तत्रैव द्रष्टव्यः ।' इति लिखितम् ।

७. इतः पूर्वं 'समिधेति सम् । इधा' इत्यवग्रहपाठः ङ । स सम्प्रदायविरुद्धत्वादशुद्धः ।

### [ पादसहचारी व्युत्क्रमावसानको रथः ]

समिधाग्निम् । अग्न ᳪ समिधा । 

घृतैर्बोधयत । बोधयत घृतैः ।

समिधाऽग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यताग्नि ᳪ समिधा । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिम्बोधयत घृतैः ।

समिधाग्निम् । समिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत घृतैः । घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमित्यतिथिम् ॥[1] (शु० य० सं० ३।१ । पद ३।१) इति पादानुसृतः ॥[2]

### [ अर्द्धर्चसहचारी व्युत्क्रमावसानको रथः ]

[3]अथार्द्धर्चानुसृतः लिख्यते ।[4]

[5]ऋधगित्था । इत्थ ऋधक् ।

यो नूनम् । नूनं यः ।

ऋधगित्था । इत्था सः । स इत्थ ऋधक् ।

यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणौ नूनं यः । ऋधगित्था । इत्था सः । स मर्त्यः । मर्त्य ᳪ स इत्थ ऋधक् । यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टये मित्रावरुणौ नूनं यः ।

ऋधगित्था । इत्थासः । स मर्त्यः । मर्त्यः शशमे । शशमे मर्त्य ᳪ स इत्थ ऋधक् ।

---

१. मन्त्रगतशिष्टांशस्य पाठः प्रभायां द्रष्टव्यः ।

२. 'इति पादानुसृतः' नास्ति घ; सारतः ङ. ।

३. अथ नास्ति ख. ।

४. 'लिख्यते' नास्ति ख. घ. ।

५. ङ पुस्तके मन्त्रस्यास्य रथपाठोऽधोलिखितः । सचाशुद्धः ।

ऋधगित्था । इत्थऋधक् । योनूनम् । नूनंय्यः । ऋधगित्था । इत्थासः । स इत्थ ऋधक् । योनूनम् । नूनं मित्रावरुणौ । मित्रावरुणौ नूनय्यः । ऋधगित्था । इत्थासः । समर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातये शशमे । मर्त्यः सइत्थऋधक् । यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टयऽ आचक्रे । आचक्रे हव्यदातये । हव्यदातयऽआचक्रेऽभिष्टये मित्रावरुणौ नूनं य्यः । ऋधगित्था । इत्था सः । समर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातयऽइति देव । तातये ॥ यो नूनम् । नूनं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टयऽ आचक्रे । आचक्रेहव्यदातये । आचक्रइत्या । चक्रे । हव्यदातय इति हव्य । दातये ।

षो नू नम् । नू नं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टय आचक्रे । आचक्रेभिष्टये मित्रावरुणौ नू नं षड्‌ ।

ऋधग्गित्था । इत्था सः । स मर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातये शशमे मर्त्यः स इत्थ ऋधक् ।

षो नू नम् । नू नं मित्रावरुणौ । मित्रावरुणावभिष्टये । अभिष्टय आचक्रे । आचक्रे हव्यदातये ।[1] हव्यदातय आचक्रे भिष्टये मित्रावरुणौ नू नं षः ।

ऋधग्गित्था । इत्था सः । समर्त्यः । मर्त्यः शशमे । शशमे देवतातये । देवतातय इति देव । तातये ॥

षो नू नम् । नू नं मित्रावरुणौ । मित्रावरुणावभिष्टये ।

अभिष्टय आचक्रे । आचक्रे हव्यदातये ।

आचक्र इत्या । चक्रे । हव्यदातय इति हव्य । दातये । (पद ३३।७७ सं० ३३।८७)

उभयोः[2] पादार्द्धर्चयोरपि द्वितीयः प्रकारः कथ्यते—

## [ पादसहचारी सङ्क्रमानुक्रमयोगी रथः ]

मित्रꣳ हुवे । व्वरुणञ्च ।

हुवे मित्रम् । च व्वरुणम् ॥

मित्रꣳ हुवे । हुवे पूतदक्षम् ।

व्वरुणञ्च । च रिशादसम् ॥

पूतदक्षꣳ हुवे मित्रम् । रिशादसञ्च व्वरुणम् ।

मित्रꣳ हुवे । हुवे पूतदक्षम् । पूतदक्ष व्वरुणम् ।

पूतदक्षमिति पूतदक्षम् ।

व्वरुणञ्च । च रिशादसम् । रिशादसमिति रिशा । दसम् ॥[3] (पद० ३३।५१ सं० ३३।५७) इत्येकः[4] ।

अथ द्वितीयः[5]—

---

१. आचक्र इत्या । चक्रे । अपेक्षितम् ।

२. विसर्गो नास्ति घ.

३. शिष्टस्य पादस्य पूर्त्तिविषये प्रभा द्रष्टव्या ।

४. प्रकारः इत्यधिकम् घ. ङ

५. प्रकारः इत्यधिकम् घ ङ ।

[ अर्द्धर्चं सहचारी सङ्क्रमानुक्रमयोगी रथः ]

मि॒त्रो व्वरु॑णः । इन्द्रो॒ बृह॒स्पति॑ः ॥
व्वरु॑णो मि॒त्रः । बृह॒स्पति॒रिन्द्र॑ः ॥
मि॒त्रो व्वरु॑णः । व्वरु॑णो भवतु[1] ।
इन्द्रो॒ बृह॒स्पति॑ः । बृह॒स्पति॒ व्विष्णु॑ः ॥
भ॒वतु॒ व्वरु॑णो मि॒त्रः । व्विष्णु॒र्बृह॒स्पति॒रिन्द्र॑ः ॥
मि॒त्रो व्वरु॑णः । व्वरु॑णो भवतु । भ॒वत्त्व॒र्य्य॒मा ।
इन्द्रो॒ बृह॒स्पति॑ः । बृह॒स्पति॒र्व्विष्णु॑ः । व्विष्णु॑रुरुक्र॒मः ॥
अ॒र्य्यमा भ॑वतु॒ व्वरु॑णो मि॒त्रः । उ॒रु॒क्र॒मो व्विष्णु॒र्बृ॑ह॒स्पति॒रिन्द्र॑ः ॥
मि॒त्रो व्वरु॑णः । व्वरु॑णो भवतु । भ॒वत्त्व॒र्य्य॑मा ।
अ॒र्य्य॑ मेत्त्य॑र्य्य॒मा । इन्द्रो॒ बृह॒स्पति॑ः ।
बृह॒स्पति॒र्व्विष्णु॑ः । व्विष्णु॑रुरुक्र॒मः ॥
उ॒रु॒क्रमऽ इत्त्यु॑रुक्र॒मः ॥ (पद ३६।५ सं० ३६।९)
उभयोरपि तृतीयः प्रकारः—

[पादसहचारी सङ्क्रमावसानको रथः]

अ॒न्तश्च॑रति । च॒र॒त्य॒न्तः । अ॒न्तश्च॑रति ।
अ॒स्य प्प्रा॒णात् । प्रा॒णाद॒स्य । अ॒स्य प्प्रा॒णात् ।
च॒र॒ति॒ रोच॒ना । रो॒च॒ना च॑रत्य॒न्तः । अ॒न्तश्च॒च॑रति[2] । अ॒न्तरित्य॒न्तः ।
च॒र॒ति॒रो॒च॒ना ।
प्रा॒णाद॑पान॒ती । अ॒पा॒न॒ती प्प्रा॒णाद॒स्य ।
रो॒च॒नास्य ।
अ॒स्य प्रा॒णात् । प्प्रा॒णाद॑पान॒तो । अ॒पा॒न॒तोत्य॑प । अन॒ती । (पद० ३।७ सं० ३।७)
इत्येकः ।

[अर्द्धर्चसहचारी समक्रमो रथः ]

[[1]द्वितीयमुदाहरणम्]

धा॒नाना॑ᳬ रू॒पम् । सक्तू॑ना ᳬ रू॒पम् ॥

---

१. 'इन्द्रो वृहस्पतिः' इत्यनन्तरं 'वरुणोभवतु' घ.

२. ङ—अन्तश्चरति इति द्विरावृत्तम्, तदशुद्धम् ।

१ इदमेकमेवोदाहरणं शि. पुस्तके । अन्यत्र पुस्तकेषु नैतदुदाहरणं दृश्यते । शि. पुस्तकेऽपि स्वराङ्कनं नास्ति । तदत्रास्माभिर्विदुषां सन्तोषाय स्वराङ्कनं विहितम् ।

रूपन्धानाना॑म् । रूप ६ सक्तू॑नाम् ॥
धाना॒ना॑ ३ रूपम् । सक्तू॑ना ३ रूपम् ॥
रूपङ्कुव॑लम् । रूपम्बद॑रम् ॥
कुव॑ल ६ रूपन्धानाना॑म् । बद॑र ६ रूप ६ सक्तू॑नाम् ॥
धानाना॑ ३ रूपम् । सक्तू॑ना ३ रूपम् ॥
रूपङ्कुव॑लम् । रूपम्बद॑रम् ॥
कुव॑लम्परीवापस्यं । बद॑रमुपवाका॑ ६ ॥
परिवापस्य कुव॑ल६ रू॑पन्धानाना॑म् ।
उपवाकाबद॑र ६ रूप ६ सक्तू॑नाम् ॥
धानाना॑ ३ रूपम् । सक्तू॑ना ३ रूपम् ।
रूपङ्कुव॑लम् । रूपम्बद॑रम् ॥
कुव॑लम्परीवापस्यं । बद॑रमुपवाका॑ ६[२] ॥
परीवापस्यं गोधूमा॑ ६ । उपवाका॑ ६ करम्भस्यं ॥
गोधूमा॑ ६ परिवापस्य कुव॑ल ६ रूपन्धानाना॑म् ।
करम्भस्यो॑पवाका बद॑र ६ रूप ६ सक्तू॑नाम् ॥
धानाना॑ ३ रूपम् । सक्तू॑ना ३ रूपम् ॥
रूपङ्कुव॑लम् । रूपम्बद॑रम् ॥
कुव॑लम्परीवापस्यं । बद॑रमुपवाका॑ ६ ॥
परीवापस्य॑ गोधूमा ६ । उपवाका॑ः करम्भस्यं ।
परिवापस्येतिं परि । व्वापस्यं । उपवाकाऽइत्यु॑प । व्वाका॑ ६ ॥
गोधूमा इतिं गोधूमा॑ ६ । करम्भस्येतिं करम्भस्यं ॥
[ सं० १९।२२ पद० १९।२० ]

## [ अर्द्ध॑र्चं सहचारी सङ्क्रमावसानको रथः ]

अथ द्वितीयः[३]—

धानाव॑न्तं करम्भिणम् । करम्भिणन्धानाव॑न्तम् । धानाव॑न्तं करम्भिणम्[४] ।
इन्द्र॑प्प्रातः । प्रातरिन्द्रः । इन्द्र॑ प्प्रातः ।

---

१. 'रूपन्धानानाम् । ........बदर ६ रूप ६' अयं पाठस्त्रुटितः शि.
२. इत उत्तरम् 'परीवापस्य गोधूमाः । उपवाकाः' इत्यंशस्त्रुटितः शि.
३. प्रकारः इत्यधिकं घ
४. धानावन्तमिति धाना । व्वन्तम् । अपेक्षितम्

करम्भिणंमपूपवंन्तम् । अपूपवंन्तं करम्भिणं धानावंन्तम् । धानावंन्तं करम्भिणंम् । धानावंन्तमिति धाना । वंन्तम् [1] । करम्भिणंमपूपवंन्तम् [2] ।
प्रातर्जुंषस्व । जुषस्व प्प्रातरिन्द्रं । इन्द्रं प्प्रातः । प्रातर्ज्जुंषस्व ।
अपूपवंन्तमुक्क्थिनंम् । उक्क्थिनंमपूपवंन्तं करम्भिणं धानावंन्तम् । धानावंन्तं करंभिणंम् । धानावंन्तमितिंधाना । व्वंन्तम् । करम्भिणंमपूपवंन्तम् ।
अपूपवन्तमुक्क्थिनंम् । अपूपवंन्तमित्यंपूप । व्वंन्तम् । उक्क्थिनमित्यु-क्क्थिनंम् । जुषस्वनः । नो जुषस्व प्प्रातरिन्द्र । इन्द्रंप्प्रातः ।
प्रातर्जुंषस्व । जुषस्वनः । नऽइति नः ॥ (पद २०।२३ सं० २०।२९) ।

## ॥ घनविकृतिप्रकरणम् ॥

अथ घनः । स द्विविधः[3]—

### [विपरीतक्रमोच्चारणात्मकोघनः]

अन्तात्क्रमं पठेत्पूर्वमादिपर्य्यन्तमानयेत् ।
आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः ॥ १४ ॥

[4]यथोक्तं क्रममेव अन्तमारभ्य आदिपर्यन्तं पूर्वं पठेत् । तत आदिमारभ्य अन्तपर्यन्तं क्रमं पठेत्, पण्डितास्तं घनमाहुः । यथा—

अतिंथिमित्यतिंथिम् । बोधयतातिंथिम् ।
घृतैर्बोधयत । दुवस्यतघृतैः ।
अग्गिनन्दुंवस्यत । समिधाग्गिनम् ।
समिधेति सम् । इधा ।
अग्गिनन्दुंवस्यत । दुवस्यत घृतैः ।
घृतैर्बोधयत । बोधयतातिथिंम् ।
अतिंथिमित्यतिंथिम् ।।[5]

---

१. धानावन्तमिति धाना । व्वन्तम् । नास्ति घ.
२. 'अपूपवन्तं करम्भिणम् ।' इत्यारभ्य 'मपूपवन्तम्' । इत्यन्तः पाठो द्विरावृत्तः ख.
३. अथ.........द्विविधः नास्ति घ., एतत्स्थाने 'अथ द्विविधघनलक्षणमाह' ङ
४. व्याख्या नास्ति शि.
५. 'इत्यादि' ना उदाहरणसमाप्तिः शि.

जु॒हो॒त॒नेति॑ जुहोतन । ह॒व्याजु॑होतन ।

अ॒स्मिन् ह॒व्या । आस्मिन् । आस्मि॑न् । अ॒स्मि॒न्ह॒व्या ।

ह॒व्याजु॒होतन । जु॒हो॒त॒नेतिं॑जुहोतन (पद ३।१ सं० ३।१) इति प्रथमः प्रकारः ।

## (शिखामूलको घनः)

अथ द्वितीयः । तल्लक्षणमाह[1]—

**शिखामुक्त्वाविपर्य्यस्य तत्पदानि पुनः पठेत् ॥**

**अयं घन इति प्रोक्तऽइत्यष्टौविकृतीः पठेत् ॥ १५ ॥**

अस्यार्थः[2]—शिखां पूर्वोक्तामुच्चार्य विपर्य्यासेन तानि पदानि उच्चार्य्य पुनः क्रमेण तानि पदान्युच्चारयेत्, अयं विकृतिविशेषो 'घन' इति प्रोक्तो[3]महर्षिभिः व्याडिभिरिति ।

उदाहरणं यथा[4]—

दस्रा॑ यु॒वाकं॑वो यु॒वाकं॑वो दस्रादस्रा॑ यु॒वाक॑वः॒ सु॒ताः सु॒ता यु॒वाकं॑वो दस्रादस्रा॑ यु॒वाकवः॒सु॒ताः । [5]यु॒वाकं॑वः॒सु॒ताः सु॒ता यु॒वाकं॑वो यु॒वाकं॑वः॒ सु॒तानास॑त्या नास॑त्या सु॒ता यु॒वाकं॑वो यु॒वाकं॑वः॒सु॒तानास॑त्या । सु॒तानास॑त्या नास॑त्यासु॒ताः सु॒तानास॑त्या व्वृ॒क्तब॑र्हिषो वृ॒क्तब॑र्हिषो नास॑त्या सु॒ताःसु॒ता नास॑त्या व्वृ॒क्तब॑र्हिषः ।

नास॑त्याव्वृ॒क्तब॑र्हिषो वृ॒क्तब॑र्हिषो नास॑त्या नास॑त्या व्वृ॒क्तब॑र्हिषः ।

व्वृ॒क्तब॑र्हिष॒ऽइति॑ वृ॒क्त । ब॑र्हिषः ।

आया॑तं॒ य्यात॒माया॑तः रुद्रवर्त्तनी रुद्रवर्त्तनी यात॒माया॑तः रुद्रवर्त्तनी ।

या॒तः रु॒द्र॒व॒र्त्त॒नी रुद्रवर्त्त॒नीया तं॒ य्यातः रु॒द्रव॒र्त्तनी । रु॒द्रवर्त्त॒नी॒ऽइति॑- रुद्रव्वंर्त्तनी । (पद० ३३।५२ सं० ३३।५८)

एवं प्रकारेण [6]अष्टौ विकृतीः पठेत् ॥ इति[7] ॥

---

१. 'अथ द्वितीयः' इति शि. अथ लोकप्रसिद्धद्वितीयघनलक्षणमाह घ.ङ ।

२. अस्यार्थः नास्ति शि. ।

३ 'प्रोक्तो·······यथा' इति स्थाने 'प्रोक्तः ऋषिभिः' इति ख ।

४ 'अयं·······यथा' स्थाने अयं घन इत्यृषिभिः प्रोक्तः । शि.

५ 'इत्यादि' ना उदाहरणोपसंहारः । ततः 'शेषं ज्योत्स्नादिषु ज्ञेयम् ।' इति प्रकरण-समाप्तिः—शि.

६. प्रकाराष्टौ इति घ.

७. एतदन्तो भाग एव ङ

**अथास्मिन् ग्रन्थे कानिचित् प्रतिशाख्यसूत्राणि त्यक्तानि गृहीतानि च। तेषां हेतून् प्रदर्शयामः—**

[१] कानिचिदुच्चारणे अनुपयुक्तानि ज्ञानमात्रफलानि—'यत्तन्न' (शु० प्रा० १।५) इत्यादीनि।

[२] कानिचिद् व्याकरणसिद्धानि—
'नर-हा-मित्रेषु' (शु० प्रा० ३।१०३ ) इत्यादीनि।

[३] कानिचिदन्यथासिद्धानि—'शि-लि-सि-वर्गमध्यमव्यवहितोऽपि' (शु० प्रा० २।९६) इत्यादीनि।

[४] कानिचित् शाखान्तरविषयाणि—
'नाशे च' (शु० प्रा० ३।४३ ) इत्यादीनि।

[५] कानिचिद् व्याकरणसिद्धान्यपि स्थिनोपस्थितादौ विधिप्रदर्शनार्थं लिखितानि 'अहः पतौ रेफम्' (शु० प्रा० ३।३९ ज्यो० २६३) इत्यादीनि।

[६] अथापि 'हुँ इति नासिक्यः' (शु० प्रा० ८।२३ ज्यो० ३३) एवमादीनि कानिचन प्रसङ्गाद् व्याख्यातानि।

**अङ्काग्निसप्तकुमिते[१७३७] शक ईश्वरवत्सरे।**
**इषशुक्लदशम्यां श्री—सिद्धेश्वरतनूभुवा ॥ १ ॥**

**रामेण रचिता प्राति–शाख्यज्योत्स्ना समर्पिता।**
**श्रीराम—सिद्धेशगुरु–चरणाम्बुरुहद्वये ॥ २ ॥**

**इति श्रीमद्विद्वन्मुकुटरत्न—श्रीसिद्धेश्वयोगिवरसूनु–रामचन्द्रपण्डितविरचिता ज्योत्स्नाख्या प्रातिशाख्यविवृतिः समाप्ता।**

**ज्योतिर्वित् कुलसम्भूतो वैराजक्षेत्रसंस्थितः।**
**रघुनाथस्तस्य कृते[१] ज्योत्स्ना विरचिता मया ॥**

●

१. कृतेयं ख.

## प्रथमं परिशिष्टम्

## शुक्लयजुः प्रातिशाख्यसूत्राणां

# ज्योत्स्नावृत्त्यनुसारी पाठः

| सङ्ख्या | सूत्रम् | आर्षपाठाङ्काः |
|---|---|---|
| १. | स्वरसंस्कारयोश्छन्दसि नियमः । | १।१ |
| २. | लौकिकानामर्थपूर्वकत्वात् । | १।२ |
| ३. | ॐकारं वेदेषु । | १।१८ |
| ४. | शुचिना । | ८।२८ |
| ५. | शुचौ देशे । | ८।२९ |
| ६. | शूद्रपतितयोरस ॳ श्राव ॳ् स्वाध्यायोऽध्येतव्यः । | ८।३० |
| ७ | त्रीणि स्थानानि । | १।१० |
| ८. | सवनक्रमेणोरः कण्ठ-भ्रूमध्यानि । | १।३० |
| ९ | अथातो वर्णसमाम्नायं व्याख्यास्यामः । | ८।१ |
| १०. | तत्र स्वराः प्रथमम् । | ८।२ |
| ११. | अ इति, आ इति, आ ३ इति; इ इति ई इति, ई३इति; उ इति, ऊ इति, ऊ३ इति; ऋ इति, ॠ इति, ॠ३ इति; ऌ इति, ॡ इति, ॡ३ इति । | ८।३ |
| १२. | अथ सन्ध्यक्षराणि । | ८।४ |
| १३. | ए इति, ए३ इति; ऐ इति, ऐ३ इति; ओ इति, ओ३ इति; औ इति, औ३ इति । | ८।५ |
| १४. | इति स्वराः । | ८।६ |
| १५. | सिमादितोऽष्टौ स्वराणाम् । | १।४४ |
| १६. | अकण्ठ्यो भावी । | १।४६ |
| १७. | अमात्रस्वरो ह्रस्वः । | १।५५ |
| १८. | मात्रा च । | १।५६ |
| १९. | द्विस्तावान् दीर्घः । | १।५६ |
| २०. | प्लुतस्त्रिः । | १।५८ |
| २१. | अथ व्यञ्जनानि । | ८।० |
| २२. | किति खिति गिति घिति ङिति इति कवर्गः । | ८।८ |

| | | |
|---|---|---|
| २३. | चिति छिति जिति झिति ञिति इति चवर्गः। | ८।९ |
| २४. | टिति ठिति डिति ढिति णिति इति टवर्गः। | ८।१० |
| २५. | तिति थिति दिति धिति निति इति तवर्गः। | ८।११ |
| २६. | पिति फिति बिति भिति मिति इति पवर्गः। | ८।१२ |
| २७. | इति स्पर्शाः। | ८।१३ |
| २८. | अथान्तःस्थाः। | ८।१४ |
| २९ | यिति रिति लिति विति। | ८।१५ |
| ३०. | अथोष्माणः। | ८।१६ |
| ३१. | शिति षिति सिति हिति। | ८।१७ |
| ३२. | अथायोगवाहाः। | ८।१८ |
| ३३. | अः इति विसर्जनीयः। | ८।२२ |
| ३४. | ≍क इति जिह्वामूलीयः। | ८।१९ |
| ३५. | ≍प इत्युपध्मानीयः। | ८।२० |
| ३६. | अं इत्यनुस्वारः। | ८।२१ |
| ३७. | हुं इति नासिक्यः। | ८।२३ |
| ३८. | कुं खुं गुं घुं इति चत्वारो यमाः। | ८।२४ |
| ३९. | इति व्यञ्जनानि। | ८।८५ |
| ४०. | व्यञ्जनमर्धमात्रा। | १।५९ |
| ४१. | अनन्तर ६ संयोगः। | १।४८ |
| ४२. | तस्मिन् ळ-ळ ह्-जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दि-नानाम्। | ८।३९ |
| ४३. | ऌकारो दीर्घः प्लुताश्चोक्तवर्जम्। | ८।४० |
| ४४. | उपदिष्टा वर्णाः। | १।३४ |
| ४५. | निर्देश इतिना। | १।३६ |
| ४६. | कारेण च। | १।३७ |
| ४७. | अव्यवहितेन व्यञ्जनस्य। | १।३८ |
| ४८. | स्वरैरपि। | १।४० |
| ४९. | र एफेन च। | १।३९ |
| ५०. | नानुस्वार-विसर्ग जिह्वामूलीयोपध्मानीययमाः। | १।४१ |
| ५१. | स्थाने। | १।६२ |
| ५२. | ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात्। | १।६३ |
| ५३. | प्रथमग्रहणे वर्गम्। | १।६४ |
| ५४. | इ-च-शी-यास्तालौ। | १।६६ |
| ५५. | ऋ ≍ क्कौ जिह्वामूले। | १।६५ |
| ५६. | ष-टौ मूर्धनि। | १।६७ |
| ५७. | रो दन्तमूले। | १।६८ |

| | | |
|---|---|---|
| ५८. | ऌ-ल-स-ता दन्ते। | ११६९ |
| ५९. | उ-वौ-पो-पध्मा ओष्ठे। | ११७० |
| ६०. | अ-हु-विसर्जनीयाः कण्ठे। | ११७१ |
| ६१. | ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा। | ११७३ |
| ६२. | यमा-नुस्वार नासिक्यानां नासिके। | ११७४ |
| ६३. | दन्त्या जिह्वाग्रकरणाः। | ११७६ |
| ६४. | र श्च। | ११७७ |
| ६५. | मूर्धन्याः प्रतिवेष्ट्याग्रम्। | ११७८ |
| ६६. | तालुस्थाना मध्येन। | ११७९ |
| ६७. | समानस्थानकरणा नासिक्यौष्ठ्याः। | ११८० |
| ६८. | वो दन्ताग्रैः। | ११८१ |
| ६९. | नासिकामूलेन यमाः। | ११८२ |
| ७०. | जिह्वामूलीयानुस्वारा हनुमूलेन। | ११८३ |
| ७१. | कण्ठ्या मध्येन। | ११८४ |
| ७२. | समानस्थान-करणास्यप्रयत्नः सवर्णः। | ११४३ |
| ७३. | स्पर्शेष्वेव संख्या। | ११४९ |
| ७४- | द्वौ द्वौ प्रथमौ जित्। | ११५० |
| ७५. | उष्माणश्च हवर्जम्। | ११५१ |
| ७६. | मुच्च। | ११५२ |
| ७७. | धि शेषः। | ११५३ |
| ७८. | द्वितीय-चतुर्थाः सोष्माणः। | ११५४ |
| ७९. | मुखनासिका-करणोऽनुनासिकः। | ११७५ |
| ८०. | अनुनासिकाश्चोत्तमाः। | ११८९ |
| ८१. | अन्त्याद् वर्णात् पूर्वं उपधा। | ११३५ |
| ८२. | वर्णस्यादर्शनं लोपः। | ११४१ |
| ८३. | दन्त्यस्य मूर्द्धन्यापत्तिर्नतिः। | ११४२ |
| ८४. | एकवर्णं पदमपृक्तम्। | ११५१ |
| ८५. | स एवादिरन्तश्च। | ११५२ |
| ८६. | द्विरुक्तमाम्रेडितम् पदम्। | ११४६ |
| ८७ | स ठं॰ हितᳬंस्थितोपस्थितम्। | ११४७ |
| ८८. | वर्णानामेकप्राणयोगः संहिता। | ११५८ |
| ८९. | तमिति विकारः। | ११३३ |
| ९०. | तस्मिन्निति निर्दिष्टे पूर्वस्य। | ११३४ |
| ९१. | तस्मादित्युत्तरस्यादेः। | ११३५ |
| ९२. | षष्ठी स्थाने योगा। | ११३६ |
| ९३. | तेनेत्यागमः। | ११३७ |

१२९. ह्यन्तराः कालाः । ३१५

१३०. न परकालः पूर्वकाले पुनः । ३१४

१३१. आरम्भकारोऽपृक्तात् । ४१५९

१३२. एदोद्भ्यां पूर्वमकारः । ४१६१

१३३. प्रकृतिभाव ऋक्षु । ४१८१

१३४. जुषाणश्चानध्वनि । ४१८२

१३५. ते चानुदात्तमनुदात्ते । ४१८३

१३६. हेड-आपो-ऽग्रेगुवो ऽपाग्ने-धीरासो-देवास-उरो-रक्षाणो-मो-वैश्वानरो-वृषभो-वचः-प्राण-उदानो-अङ्ग-इमा मे-वृष्णो-दशमास्योऽन्ध-आवित्तो-ऽरिष्टो अर्जुनः-प्रत्याश्रावः-स्विष्टो-घासे-प्रणीतस्-तेभ्यो नमो अस्तु-दूरे-नो अद्य-यज्ञे-सधस्थे-सोमध्वराये-न्द्रे-हिरण्यपर्णो-द्वारो-देवो-ब्दो-रथिभ्यो-महद्भ्यः-सꣳ सदः । ४१८४

१३७. छन्दो अङ्कुप-मङ्काङ्क-मस्त्रीवयः । ४१८५

१३८. गाहमानः-शिवो-भरन्तो-द्वेषोभ्यो-जम्भयन्तो-वाजे वाजे-वाजजितो-मदन्तः-शोचे-ऽवसे-सुषुवे-ज्योते-सुपर्णो-वीरुधः-सुवीरो-धातवे-सूनवे-द्रूणान-आशवो-वहतः सङ्क्रन्दनो-बाहवो-ऽयुध्यो-ऽद्रुहः । ४१६४

१३९. वोऽहꣳ सोऽहꣳ सोऽस्माकं, तेऽभिगरो, वोऽर्वाची । ४१६५

१४०. येऽन्ना-त्रयोः । ४१६६

१४१. अविद्या-सम्भूत्योश्च । ४१६७

१४२. उपस्थेऽन्तस्तेभ्योऽकरम् । ४१६८

१४३. नमोऽस्त्वसौत्रामण्याम् । ४१६९

१४४. विश्वे-ऽग्ने-विशो-रामो-ऽग्नौ । ४१७०

१४५. सूर्येऽग्ने-ऽभौ । ४१७१

१४६. रिषो-यवसे-पुरुप्रियो-ऽन्नपते-ऽर्णवे । ४१७२

१४७. व्यपरे च । ४१७३

१४८. गवे-मे-मनसो-वाजयन्तः-सोम्यासः-पाशिनो-विद्मनो-ऽनृते-मूजवतो-वृष्णे-ऽपाको-दीदिवस्-त्रयस्त्रिꣳशे-ब्रह्मणो-यको-रथो-विश्वतःपादो-वसन्तः । ४१७४

१४९. अवो-ऽस्त्व-ग्ने गृहपतेभि-सत्वानोहं-नोऽजस्रः-सुतेऽश्विना-नमोऽग्नये-तेऽग्रं-तेऽग्रेवृक्षस्य-प्रथमोऽन्तस्-तेऽन्येन । ४१७५

१५०. पणयो-जहीमो-ऽम्बिके । ४१७६

१५१. नोनुमोऽ दुग्धा इव-प्रचेतसोऽश्वान्-नरोऽस्माकं-वृषपाणयोऽश्वाः-प्रदिशोऽनू-दितेऽनागा-अन्धसोऽर्च्चा-पनस्य तेऽद्धा-यज्ञियेभ्योऽमृतत्वं-विपश्चितोऽभि-जनोऽनमीव-आयवोऽनु-नोऽद्य-देशोऽभवद्नो - वयुने-ऽजनिष्ट-विद्मनापसोऽजायन्त-पूर्व्यासोऽरेणवो-नोऽस्माऽदितिर्नोऽहिः । ४१७७

१५२. ब्राह्मणः । ४।७८
१५३. यजुष्षु च । ४।७९
१५४. का ध्रुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमे-म-सदन्न-श्यामा-कर्मो-ध्वंमि-यम-वस्तादु-ता-स्तिषु । ४।८६
१५५. प्रगृह्यं स्वरे । ४।८७
१५६. उकारोऽपृक्तोऽस्पर्शात् । ४।९०
१५७. न रोदसीमे । ४।८८
१५८. स्वरोऽक्षरम् । १।९९
१५९. सहाद्यैर्व्यञ्जनैः । १।१००
१६०. उत्तरैश्चावसितैः । १।१०१
१६१. उच्चैरुदात्तः । १।१०८
१६२. नीचैरनुदात्तः । १।१०९
१६३. उभयवान् स्वरितः । १।११०
१६४. एकपदे नीचपूर्वः सयवो जात्यः । १।१११
१६५ तौ चेदुदात्तावनुदात्ते स्वरितौ । ४।६२
१६६. एदोद्भ्यामकारो लुगभिनिहितः । १।११४
१६७. न देशोऽभवति । ४।६३
१६८. उदात्तस्यान्तस्थीभावे परमनुदात्तं स्वरितम् । ४।४८
१६९. युवर्णौ य-वौ क्षैप्रः । १।११५
१७०. इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तपरं स्वरितम् । ४।१३४
१७१. इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः । १।११६
१७२. वीक्षितायेति च । ४।१३५
१७३. उदात्ताच्चानुदात्तं स्वरितम् । ४।१३६
१७४. स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः । १।११७
१७५. उदवग्रहस्तैरोविरामः । १।११८
१७६. विवृत्तिलक्षणः पादवृत्तः । १।११९
१७७. हृस्तेन ते । १।१२१
१७८. अनुदात्तं चेत् पूर्वं तिर्यङ् निहत्य काण्वस्य । १।१२३
१७९. ऋजुं निहत्य प्रणिहन्यते उदात्ते । १।१२४
१८०. निहितमुदात्त स्वरितपरम् । ४।१३७
१८१. चत्वारस्तिर्यक् स्वरिताः । १।१२२
१८२. स्वरितात्परमनुदात्तमुदात्तमयम् । ४।१४०
१८३. अनेकमपि । ४।१४१
१८४. नोदात्तस्वरितोदयम् । ४।१४२
१८५. स्वरितवान् स्वरितः । ४।१३२
१८६. उदात्तवानुदात्तः । ४।१३३

१८७. तकारवर्गश्चकारवर्गे चकारवर्गम् । ४।९५
१८८. शकारे च । ४।९६
१८९. परश्वास्पर्शंपरश्छम् । ४।९७
१९०. नुः । ३।१३४
१९१. अनुनासिकमुपधा । ३।१३१
१९२. चच्छयोः शम् । ३।१३५
१९३. त-थयोः सम् । ३।१३६
१९४. दधन्वान्-स्ववान्-यकारे लोपम् । ३।१३७
१९५. रयिवृधे च । ३।१३८
१९६. नृन् पकारे विसर्जनीयम् । ३।१४१
१९७. शत्रून्-परिधीन्-क्रतून्-वनस्पतीन् स्वरे रेफम् । ३।१४२
१९८. आकारोपधो यकारम् । ३।१४३
१९९. न तमे । ३।१४४
२००. निर्जगन्वान् तमसि । ३।१४५
२०१. धामञ्-छन्नँश्-चिकित्वान्त्वं-पूषन्-नर्व्वन्निति च । ३।१४६
२०२. अश्वादी चाध्याये । ३।१४७
२०३. मनुष्याँस्ताँल्लोकानमित्रानुदि । ३।१४८
२०४. आप्नोतीत्योश्च । ३।१४९
२०५. गृहानैमि-गृहानुपह्वयामहे-वर्च्चस्वानहं मनुष्यानन्तरिक्ष-मग्निष्वात्तानृतुमतः-पयस्वानग्ने-तानश्विना-पतङ्गानसन्दितः-सपत्नानिन्द्रः-सपत्नानिन्द्राग्नी-नभस्वानार्द्रदानु-विद्वानग्ने-देवानस्त्रेधता-नड्वानाशु-रथैतानष्टौ-विरुपानालभते-एतावानस्या-युष्मानग्ने-वायव्यानारण्या-प्रविद्वानग्निनानड्वानघोरामौ-शत्रूननुयं-यातुधानानस्थादस्मानरिष्टेभिरिति । ३।१५१
२०६. प्रथमोत्तमाः पदान्तीया अचञो । १।८५
२०७. विसर्जनीयः । १।८६
२०८. स्पर्शोऽपञ्चमः स्वरधौ तृतीयम् । ४।११९
२०९ असस्थाने मुदि द्वितीयꣳशौनकस्य । ४।१२१
२१०. पञ्चमे पञ्चमम् । ४।१२२
२११. हश्च तस्मात् पूर्वं चतुर्थम् । ४।१२३
२१२. नान्तः पदे स्वर-पञ्चमा-न्तस्थाषु । ४।११८
२१३. अनुस्वार ꣳ रोष्मसुमकारः । ४।१
२१४. नुश्चान्तः पदेऽरेफे । ४।२
२१५. प्रकृत्या सम्राट्-साम्राज्ये । ४।५
२१६. स्पर्शे परपञ्चमम् । ४।११
२१७. अन्तःस्थामन्तःस्थास्वनुनासिकां परसमानस्थानाम् । ४।९

२१८. तकारो ले लम् । ४।१२
२१९. नुश्चानुनासिकम् । ४।१३
२२०. स्वरश्छकारे चकारेण सर्वत्र । ४।२४
२२१. यस्यातिहायसहेति न । ४।२५
२२२. ङ्नौकाभ्याऽंसकारे । ४।१४
२२३. उदः स्तभाने लोपम् । ४।९८
२२४. भाव्युपधश्च रिद्विसर्जनीयः । ४।३४
२२५. रेफे लुप्यते दीर्घं चोपधा । ४।३५
२२६. रेफऽंस्वरधौ । ४।३६
२२७. कण्ठ्यपूर्वो यकारमरिफितः । ४।३७
२२८. लोपं धौ । ४।३८
२२९. भूमेश्चाकारेऽपृक्ते । ४।३९
२३०. सर्वो अकार ओकारम् । ४।४२
२३१. अकारे च । ४।४३
२३२. एषो ह च । ४।४४
२३३. स्वोरुह्वावहश्च रात्र्याम् । ४।४५
२३४. विसर्जनीयः । ३।६
२३५. चछयोः शम् । ३।७
२३६. तथयोः सम् । ३।८
२३७. अविकार ऽं् शाकल्यः सशषेषु । ३।१०
२३८. प्रकृत्या करवयोः पफयोश्च । ३।११
२३९. लुङ् मुदिजित्परे । ३।१३
२४०. उपवसने पीवः । ३।१४
२४१. स ओषधीमयोः । ३।१५
२४२. व्यञ्जने च । ३।१६
२४३. स्य एष च । ३।१७
२४४. अनितावध्याये । ३।१९
२४५. इतिवच्चर्चायाम् । ३।२०
२४६. ककार पकारयोः सकारम् । ३।२१
२४७. भाव्युपधः षकारम् । ३।२२
२४८. आविर्निरिडइडायावसतिर्वैरिवः । ३।२३
२४९. दिवोऽककुत् पृथिव्योः । ३।२४
२५०. रायः सहसस्पोष—पुत्रयोः । ३।२५
२५१. तमसोऽपरस्तात् । ३।२६
२५२. तपसस्पृथव्याम् । ३।२७
२५३. अध्वनो-रजसो-रिष-स्पृश-स्पातौ । ३।२८

## ।। षष्ठाध्यायः ।।

| संख्या | सूत्रम् | ज्योत्स्नापाठाङ्काः |
|---|---|---|
| १. | अनुदात्तमाकूख्यातमामन्त्रितवत् । | ४३४ |
| २. | उपसर्गंउपसर्गे । | ४३७ |
| ३. | आम्म्रेडिते चोत्तरः । | ४३८ |
| ४. | कृदाकूख्यातयोस्त्वोदात्तयोः । | ४३९ |
| ५. | नाब्भ्येकाक्षरश्च स्वरसन्धेयेऽकृति । | ४४० |
| ६. | आ पूतजातयोः । | ४४१ |
| ७. | अधिनिष्प्रप्प्रतिश्श्रिताऽत्रिणभानवपचतेषु । | ४४१ |
| ८. | उज्जेषमावर्त्तंऽआपनीफणत्त्सनिष्ष्यदत्सँव्वतं प्रयाणठं० सञ्चरन्तठं० सठं० रभद्ध्वं प्रसितिंँव्विक्कमस्वेत्येतेष्ष्वनु । | ४४३ |
| ९. | ओपप्प्रोदात्ते । | ४४३ |
| १०. | अभिप्रेह्यपसम्प्रयातप्प्रत्स्यातनुष्ष्वासुषाव । | ४४४ |
| ११. | प्रकृत्त्याऽऽकूख्यातमाक्ख्यातपूर्व्वम् । | ४४५ |
| १२. | उदात्ताच्चामन्त्रितादनन्तरम् । | ४४६ |
| १३. | एकान्तरादपि । | ४४८ |
| १४. | यद्वृत्तोपपदाच्च । | ४४९ |
| १५. | हेश्च । | ४५० |
| १६. | उत्तरेऽपि । | ४५१ |
| १७. | नेत् । | ४५२ |
| १८. | समनसस्करत् । | ४५३ |
| १९. | द्वयोः पूर्व्वंठं० समुच्चये । | ४५४ |
| २०. | वा विचारणे । | |
| २१. | अह विनियोगे । | |
| २२. | एवावधारणे । | |
| २३. | उपपदाप्प्रयोगेऽपि च । | |
| २४. | परोपापावप्प्रतिपर्य्यन्न्व-प्प्यत्यदध्याङ्प्रसन्निर्द्दुरुन्निविस्वभि । | ४३५ |
| २५. | द्विस्प्पर्शम् । | |
| २६. | व्वेत्तु व्वित्त्वाऽस्म्मद्द्यूक्क्पात्रमभित्त्यम्मृत्तिकाद्ध्वन्दात्रठं० समाववर्त्यं द्विर्वृद्धिररादध्याऽअर्द्धशुद्धवुद्धनक्क्तं निषण्णस्विन्नान्नसन्नाश्च । | |
| २७. | न क्षवृचिश्विसतयेभ्यस्त्रेकम् । | |
| २८ | ईध्याय वार्ध्रीनसोद्राश्च राश्चेत् । | ३६३ |
| २९. | उपोत्स्थित उत्त्तम्भनमुत्तभानोत्थायोत्थितायेति त्रीणि । | ३६५ |
| ३०. | बर्हिरङ्ङ्कारम्भद्द्रेण पृङ्ङ्क्तं पङ्ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि पाङ्ङ्त्रानिति द्वावनुनासिकौ पूर्वावारपन्तीवर्ज्जमिति च । | |
| ३१. | वृद्धं वृद्धिः । | |

।। इति कात्यायनकृतौ प्रतिशाख्यसूत्रे षष्ठोऽध्यायः ।।

## ।। सप्तमाध्यायः ।।

**संख्या** **सूत्रम्** **ज्योत्स्नापाठाङ्काः**

### [पदावसानपरिग्रहप्रकरणम् १-११]

[अधिकार सूत्रम्]

१. अथावसानानि ।
२. कण्ठ्यस्वरमेकारेण परिगृह्णीयात्प्लुतवर्ज्जम् ।
३. इवर्णमीकारेण ।
४. उवर्णँव्वकारेण ।
५. औकारं च ।
६. ह्रस्वकण्ठ्योपधं विसर्ज्जनीयान्तमरिफितं विवृत्त्या ।
७. दीर्घकण्ठ्योपधँव्विसर्ज्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ।
८. औकारान्तञ्चैके ।
९. भाव्युपधं (च) रिद्विसर्ज्जनीयान्तानि रेफेण ।
१०. प्रथमान्तन्तृतीयेन ।
११. उत्तमान्तमुत्तमेन ।
१२. वृद्धँ व्वृद्धिः ।

।। इति कात्यायनकृतौ प्रातिशाख्यसूत्रे सप्तमोऽध्यायः ।।

## ।। अष्टमाध्यायः ।।

[वर्णमालाप्रकरणम्]

१. अथातो वर्णसमाम्नायं व्याख्यास्यामः । ९
२. तत्र स्वराः प्रथमम् । १०
३. अइति, आइति, आ३इति; इइति ईइति, ई३इति; उइति, ऊइति, ऊ३इति; ऋइति, ॠइति, ॠ३इति; ऌइति, ॡइति, ॡ३ इति । ११
४. अथ सन्ध्यक्षराणि । १२
५. एइति, ए३ इति; ऐइति, ऐ३ इति; ओ इति, ओ३ इति; औ इति, औ३ इति । १३
६. इति स्वराः । १४
७. अथ व्यञ्जनानि । २१
८. किति, खिति, गिति, घिति, ङिति इति कवर्गः । २२
९. चिति छिति जिति झिति ञिति इति चवर्गः । २३
१०. टिति ठिति डिति ढिति णिति इति टवर्गः । २४
११. तिति थिति दिति धिति निति इति तवर्गः । २५
१२. पिति फिति बिति भिति मिति इति पवर्गः । २६

| संख्या | सूत्रम् | ज्योत्स्नापाठाङ्काः |
|---|---|---|
| १३. | इति स्पर्शाः । | २७ |
| १४. | अथान्तस्थाः । | २८ |
| १५. | यिति रिति लिति विति । | २९ |
| १६. | अथोष्माणः । | ३० |
| १७. | शिति षिति सिति हिति । | ३१ |
| १८. | अथायोगवाहाः । | ३२ |
| १९. | ⌓क इति जिह्वामूलीयः । | ३४ |
| २०. | ⌓प इत्युपध्मानीयः । | ३५ |
| २१. | अं इत्यनुस्वारः । | २६ |
| २२. | अः इति विसर्जनीयः । | ३३ |
| २३. | हुँ इति नासिक्यः । | ३७ |
| २४. | कुँ खुँ गुँ घुँ इति यमाः । | ३८ |
| २५. | इति व्यञ्जनानि । | ३९ |
| २६. | एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः । | |
| २७. | यत्किञ्चिद् वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् । | |
| २८. | शुचिना । | |
| २९. | शुचौ देशे । | |
| ३०. | शूद्रपतितयोरसꣳश्रावꣳस्वाध्यायोऽध्येतव्यः । | |
| ३१. | ज्ञाने । | |
| ३२. | पौरुष्यम् । | |
| ३३. | स्वर्ग्यम् । | |
| ३४. | यशस्यम् । | |
| ३५. | आयुष्यम् । | |
| ३६. | तथा विभक्तिपरिज्ञानम् । | |
| ३७. | अथापि श्लोको भवति—<br>वेदस्याध्ययनाद्धर्मः संप्रदानात्तथा श्रुतेः ।<br>व्वर्णशोऽक्षरशो ज्ञानाद् विभक्तिपदशोऽपि च ॥ | |
| ३८. | त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।<br>द्विचत्वारिंशद्व्यञ्जनान्येतावान्वर्णसङ्ग्रहः ॥ | ३७ |
| | [माध्यन्दिनीयानामपरिगृहीता वर्णाः] | |
| ३९. | तस्मिँळळ्‌हजिह्वामूलीयोपद्ध्मानीयनासिक्या<br>न सन्ति माद्ध्यन्दिनानाम् । | ४२ |
| ४०. | ऌकारो दीर्घः प्लुताश्चोक्तवर्ज्जम् । | ३९ |
| ४१. | अथ व्वर्ण्णदेवताः । | |

| संख्या | सूत्रम् | ज्योत्स्नापाठाङ्काः |
|---|---|---|
| ४२. | आग्नेयाः कण्ठ्याः । | |
| ४३. | नैर्ऋत्या जिव्हामूलीयाः । | |
| ४४. | सौम्यास्तालव्याः । | |
| ४५. | रौद्रा दन्त्याः । | |
| ४६. | ओष्ठ्या आश्विनाः । | |
| ४७. | वायव्या मूर्द्धन्याः । | |
| ४८. | शेषा वैश्वदेवाः । | |
| ४९. | तत्समुदायोऽक्षरम् । | |
| ५०. | वर्णो वा । | |
| ५१. | अक्षरसमुदायः पदम् । | |
| ५२. | अक्षरँव्वा । | |
| ५३. | तच्चतुर्द्धा । | |
| ५४. | नामाख्यातोपसर्गनिपाताः । | |
| ५५. | तत्र प्रति विशेषः । | |
| ५६. | क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् । सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥ | |
| ५७. | चतुर्द्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः । निहन्यते खल्वाख्यातमुपसर्गचतुष्टये ॥ | |
| ५८. | अथ पदगोत्राणि । | |
| ५९. | भारद्वाजकमाख्यातं भार्ग्गवं नामभाष्यते । वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥ | |
| ६०. | अथ पददेवताः । | |
| ६१. | सर्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते । आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ | |
| ६१. | इत्याह स्वरसंस्कार प्रतिष्ठापयिता भगवान् कात्यायनः । | |
| ६२. | वृद्धं वृद्धिः । | |

॥ इति कात्यायनकृतौ प्रतिशाख्यसूत्रे अष्टमोऽध्यायः ॥

---

## तृतीयं परिशिष्टम्

महायाज्ञिक-विद्वत्तिलक-आचार्य-श्रीगोपालचन्द्रमिश्रविरचिता
शुक्लयजुर्वेद—माध्यन्दिनशाखीया

# सम्प्रदायप्रबोधिनी शिक्षा



## [१] अथ सामान्यप्रकरणम्

### मङ्गलम्

बोधः प्रयोगः संसिद्धिः सम्प्रदायश्च सद्गुरुः ।
यस्मादिमे प्रवर्तन्ते शिक्षाशास्त्रं तदाश्रये ॥ १ ॥

### उपक्रमः, शिक्षाप्रयोजनम्

ऋग्यजुः सामाथर्वाणो वेदास्तत्र यजुर्द्विधा ।
कृष्णं शुक्लं, तत्र शुक्ले काण्वं माध्यन्दिनीयकम् ।
द्वयं वै पञ्चदशसु शाखासु प्राप्यतेऽधुना ॥ २ ॥

---

अथ सम्प्रदायप्रबोधिन्याः शिक्षायाः टुप्टीकात्मिका व्याख्या

### सुबोधिनी

सुखबोधाय रचिता सम्प्रदायप्रबोधिनी ।
साप्यनभ्यस्तमन्त्राणां न सुखाय भवेत्ततः ॥ १ ॥

सुबोधिनी लिख्यतेऽसौ व्याख्या सुस्पष्टबोधिनी ।
उपकाराय कल्पेत वेदार्थपरिशीलिनाम् ॥ २ ॥

१. बोधः—लौकिकानां वैदिकानां चाक्षराणां लेखोच्चारणयोः, अदृश्यस्वरूपस्य ब्राह्मणत्व-पुंस्त्वादेश्च । प्रयोगः—व्याकरणसिद्धोऽपि लोपागमवर्णविकारप्रतिभावरूपः संस्कारः कस्यां शाखायां कीदृशः प्रयोक्तव्य इति निर्देशमूलकः । एवं यज्ञादिषु मन्त्रोच्चारणे मध्यमा वृत्तिरभ्यर्हितेत्यादिः प्रयोगानुगुणोपदेशः शिक्षाशास्त्रविषयः । संसिद्धिः—सम्यक् सिद्धिरिच्छायाः । शिक्षाशास्त्राननुकूलत्वे फलविरहस्य 'मन्त्रो हीनः' (पा० शि० ५२) इत्यादिषु बहुत्र स्मरणात् । सम्प्रदायः—तत्तच्छाखीयः तत्तद्देशीयश्च उच्चारणसम्प्रदायः शिक्षाशास्त्रेणैव सिद्ध्यति । सद्गुरुः—गुरोः साधुत्वमपि शिक्षाशास्त्रानुसारित्वे एव जना अभिप्रयन्ति ।

२. पञ्चदशशाखानां नामानि चरणव्यूहे (२ खं०) द्रष्टव्यानि ।

उत्तरे भारते प्रायः शुक्लं माध्यन्दिनीयकम् ।
कुलश्रुतौ तथाधीतौ कर्मकाण्डे समादृतम् ॥ ३ ॥

तथापि कलिकालोऽयं संस्काराभाव एव च ।
दुर्बोधत्वं प्रापयति सम्प्रदायागतं क्रमम् ॥ ४ ॥

तस्मादियं मया शिक्षा सम्प्रदायप्रबोधिनी ।
श्रीश्रीगुरोर्भगवतः प्रसादाल्लिख्यते स्फुटा ॥ ५ ॥

**वेदाध्ययने साधारणधर्माः**

सुप्रसन्नमना भूत्वा विनीतः स्वासनं भजेत् ।
निवेश्य दृष्टिं हस्ताग्रे वेदं स्वीयं समभ्यसेत् ॥ ६ ॥

**हस्तस्थापनम्**

हस्तौ सुसंयतौ धार्यौ जानुनोरुपरि स्थितौ ।
गुरोरनुमतिं कुर्यात् पठन्नान्यमतिर्भवेत् ॥ ७ ॥

आसनं स्वस्तिकं पद्मं बध्द्वोरौ दक्षिणे करम् ।
सव्यं समुष्टिं विन्यस्य, मुष्टौ दक्षिणकूर्परम् ॥ ८ ॥

तत्रोत्तानं हस्तदण्डं श्लथं श्लिष्टाङ्गुलं तथा ।
मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत् ॥ ९ ॥

नामितं करपृष्ठं तु सुव्यक्ताङ्गुलिमोक्षणम् ।
दक्षिणं स्वकरं कुर्यादुदात्तादिप्रबोधकम् ॥ १० ॥

---

३. कान्यकुब्जेषु मैथिलेषु च सामवेदिनां, बङ्गीयेषु ऋग्वेदितैत्तिरीय—सामवेदिनाम्, उत्कलेषु च काण्वशाखिनामप्युपलब्धेः 'प्रायः' इति । कुलश्रुतिः—कुलादागता श्रुतिः । 'अस्माकं शुक्लयजुर्वेदीया माध्यन्दिनीया शाखेति' कर्णाकर्णिकया पारम्परिकी श्रुतिः, तस्यां । अधीतौ—साम्प्रतिके परीक्षाद्यात्मके अध्ययने । कर्मकाण्डे सामवेदित्वेन ऋग्वेदित्वेन वा ख्यापयतामपि पुरुषाणां माध्यन्दिनीयसूत्र-मन्त्राद्याश्रयणात् । एतच्च न विरुद्धम् 'सर्वशाखाप्रत्ययमेकं कर्म' (जै० २।४।२ अ०) इति न्यायादिति केचित् ।

४. उपनयनसंस्कारसत्वेऽपि मन्त्रोपदेष्टुराचार्यस्य च शास्त्रोपदिष्टगुणविरहे वास्तविकावश्यकसंस्कारानुदयमूलकः संस्काराभावः । तथाचापस्तम्बधर्मसूत्रेऽपि (१।१।१।१-१८);

६. तु०—या० शि० पृ० २१ ।

७. द्र०—या० शि० पृ० १४ ।

८. दक्षिणोरौ वामकरं मुष्टिबन्धं कृत्वा स्थापयेत् । तत्र च मुष्टौ दक्षिणहस्तस्य कूर्परम् = हस्तमानोपयोगिसोमास्थि, स्थापयेदिति भावः ।

९. द्र०—या० शि० पृ० ३६ । अङ्गुष्ठमूलदेशो मनुष्यतीर्थः । तर्जन्यङ्गुष्ठमध्यं ण्तिृतीर्थः ।

### वर्णोच्चारणे स्थितिः

कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः।
स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः॥ ११॥

### उच्चारणधर्माः

नाभ्याहन्यान्न निर्हंन्यान्न गायेन्नैव कम्पयेत्॥ १२॥

उपांशु त्वरितं चैव नोच्चरेद् वित्रसन् यतः।
अपरूपसहस्राणां सन्देहे स प्रवर्तते॥ १३॥

### पाठदोषाः

शङ्कितं भीतमुद्घृष्ट-मव्यक्तमनुनासिकम्।
काकस्वरं मूर्ध्निगतं तथा स्थानविवर्जितम्॥ १४॥

विस्वरं विरसं चैव विश्लिष्टं विषमाहतम्।
व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश॥ १५॥

---

११. द्र०—या० शि० पृ० १९।

१२-१३. तु०—या० शि० पृ० १९, १६२। अभ्याहननं नाम—कस्यचिद्वर्णस्य विशेषबलपूर्वकमुच्चारणम्। निर्हननं नाम—अधरदन्तावल्या निष्पीडनस्थित्या सर्ववर्णानामुच्चारणम्। गायनं नाम—लोकानुरञ्जनदृष्ट्या स्वरलहरीसमुत्पादनपुरःसर-मुच्चारणम्। कम्पनं तु कण्ठस्थित्या विरामव्यवहितप्रायवर्णोच्चारणरूपं प्रसिद्धमेव।

१४-१५. द्र०—या० शि० पृ० २३। (१) शंकितम्—अयं वा स वा वर्ण इति संशयं मनसिकृत्य पठनम्। (२) भीतम्—भयेन पठनम्। (३) उद्घृष्टम्—रोषेण रोदनेन क्षोभेण वा समपेक्षितबलादधिकबलेनोच्चारणम्। एतस्मिन्नुच्चारणे प्रसृतत्वम्, ध्वने-रूर्ध्वत्वं चानुभूयते। (४) अव्यक्तम्—स्पष्टतया नोच्चारितम् (५) अनुनासिकम्—अननुनासिकाक्षरस्यापि नासिकयोच्चारणम् (६) काकस्वरम्—कण्ठं निष्पीड्योच्च-रुच्चारणम् (७) मूर्ध्निगतम्—अत्युच्चैः पूर्णबलेनोच्चारितम्। (८) स्थानविवर्जितम्—शिक्षाशास्त्रोपदिष्टस्थानविरहेणोच्चारणम्। (९) विस्वरम्—सहाध्येतॄणां समानस्वरतां परित्यज्योच्चारणम्, समपेक्षितमन्द्रादिस्वरविरहेण उदात्तादिस्वरप्रदर्शनाभावेन वा उच्चारणम्। (१०) विरसम्—रूक्षोच्चारणं माधुर्यविरहेण। (११) विश्लिष्टम्—समपेक्षितैकप्राणयोगेऽपि विश्लिष्योच्चारणम्।(१२)विषमाहतम्—चर्वणक्रियाप्रदर्शनमुखेन वर्णानामुच्चारणम्। (१३) व्याकुलम्—शोक-भयादिनिमित्तेन, स्वभावतो वा धैर्यविरहेण चित्तविक्षेपानुमानज्ञापकवृत्त्योच्चारणम्। (१४) तालहीनम्—तालशब्दोऽत्र अवसानार्थः साधीयान्, ततश्च समपेक्षितावसानविरहितोच्चारणम्।

**पाठकगुणाः**

माधुर्यमक्षरव्यक्तिर्हस्तक्षेपश्च सुस्वरः ।
धैर्यं लयसमत्वं च षडेते पाठके गुणाः ॥ १६ ॥

**पाठकदोषाः**

गीती शीघ्री शिरःकम्पी यथालिखितपाठकः ।
अल्पकण्ठोऽनवहितः षडेते पाठकाधमाः ॥ १७ ॥

**वेदाध्ययनक्रमः, तत्र संस्था (सन्था) स्वरूपम्**

गुरूक्तं शृणुयान्मन्त्रं तूष्णीं पश्चादनूच्चरेत् ।
आवर्तनं जिघृक्षार्थं 'संस्था' त्रिः पञ्च सप्त वा ॥ १८ ॥

संस्थायां शिष्यसामर्थ्यमपेक्ष्य गुरुणा पुरा ।
कण्डिका भागतोऽर्द्धा वा विश्लिष्याध्याप्यते सदा ॥ १८ क ॥

चेदेकत्रागतो मन्त्रः संहितायां पुनर्भवेत् ।
तदाध्याप्यः पूर्णमन्त्रः शिष्योऽप्यनुवदेत् सकृत् ॥ १८ ख ॥

**गुणिनो (गुन्नी) स्वरूपम्**

पक्षं वार्द्धमधीतोक्तिर्-गुरोस्तु निरपेक्षया ।
'गुणिनी' सा सप्तकादिशतान्तावृत्तिरन्वहम् ॥ १९ ॥

अभ्यासे पूर्णमन्त्रस्य क्रियमाणेऽग्रतः स्थितः ।
पदद्वयात्मा प्रतीको धृत्यै चाभ्यस्यते सह ॥ २० ॥

---

१६-१७. तु०—या० शि० पृ० १३८, १३७ ।

१८. सम्प्रदाये अध्ययनशब्दार्थः—गुरुमुखोच्चारणानूच्चारणम् । गुरूक्तस्य वर्णोपदेशस्य ग्रहणार्थं दृढतायै चाभ्यासो द्विधा क्रियते । तत्र प्रथमः संस्थारूपेण । स लोके 'सन्था' इति व्यवह्रियते । तत्र गुरूक्तस्य तत्सान्निध्ये एव समनन्तरं त्रिवारं पञ्चवारं सप्तवारं वा सप्ताहं पक्षं वा यावत् आवर्तनम् । द्वितीयो गुणनिकारूपेण ।

१८ ख. एतेन गुरुमुखोच्चारणानूच्चारणात्मकमध्ययनं सिद्ध्यति ।

१९. गुणनिकैव 'गुन्नी' इति भाष्यते । तत्र गुरुसान्निध्यं नावश्यकम् । सतीर्थ्याः सम्भूय गुरुणोपदिष्टस्य मन्त्रजातस्य प्रत्यहं सप्तादि—शतान्तया गुर्वनियमितसंख्यया सप्ताहं पक्षं वा आवर्तनं कुर्वन्ति ।

२०. गुणनिकायां पूर्णः एकैको मन्त्रः दण्डकलितवदावर्त्यते । तत्राग्रिममन्त्रस्य पदद्वयात्मा प्रतीकोऽपि सहाभ्यस्यते । एतेन पाठक्रमविस्मृतिर्न भवतीति दृष्टं फलम् । यथा—इषेत्वा....पाहि । वसोः पवित्रम् । (सं० १।१) ।

मन्त्रप्रतीकोऽर्धर्चो वा भागो वा पठ्यते यदा।
तदान्तिमः स्वरो ज्ञाप्यः परस्परसमाश्रयात् ॥ २० क ॥

### चर्चा-स्वाध्याय-स्वरूपम्

आभ्यासमर्द्धमन्त्रस्य यथार्हं पक्षयोर्द्वयोः।
कथनं प्रोच्यते 'चर्चा' 'स्वाध्यायः' प्रत्यहं जपः ॥ २१ ॥

### पट्टिका ( पट्टी ) पट्ट (फड ) स्वरूपम्

संस्था गुणनिका चर्चा सतीर्थ्यैः सह सम्भवेत्।
'पट्टिका' सा स्मृता, चान्यैः-'पट्टं' स्वाध्याय चर्चयोः ॥ २२ ॥

### स्वाध्यायारम्भविधिः

गणनाथ-सरस्वती-रवि-शुक्र-बृहस्पतीन् ।
पञ्चैतान् संस्मरन्नित्यं वेदवाणीं प्रवर्तयेत् ॥ २३ ॥

प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम्।
सावित्रीं चानुपूर्व्येण ततो वेदं समारभेत् ॥ २४ ॥

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥ २५ ॥

---

२० क—गुणनिकायां, स्वाध्यायावसाने (श्लो० २६) वा यदा मन्त्रप्रतीकः, संस्थायाम् अर्धर्चः, कण्डिकाभागो वा यदाध्याप्यते तदान्त्यः उदात्तादिस्वरः बुद्धिस्थोच्चार्यमाणपरवर्णस्वरमभिलक्ष्य हस्तेन प्रदर्शनीयः इति।

२१. चर्चा—यत्र मन्त्राध्येतारः स्वेषु विभागद्वयं कृत्वा परस्परमभिमुखास्तिष्ठन्ति। तत्र च यथाक्रममेकैकः पक्षः संहितायां क्रमादिषु च एकैकमवसानं, पदचर्चायां तु एकैकं पदं यथापाठं प्रापयति। 'स्वाध्याय' शब्दस्य स्वपूर्वपुरुषपरिगृहीतवेदोऽप्यर्थः। इह त्वयं स्मार्तोऽर्थः।

२२. सतीर्थ्याः = समानगुरवश्छात्राः संस्थायां गुणनिकायां च यदा सम्भूय परस्परमभिमुखास्तिष्ठन्ति सा तेषां स्थितिः पट्टिका = 'पट्टी' इति भाषायामुच्यते। यदा च भिन्नगुरवश्छात्राः स्वाध्यायं चर्चां वा कर्तुं स्थिता भवन्ति सा स्थितिः 'पट्टम्' = 'फड' इति भाषायां कथ्यते।

२३. द्र०—मुद्रितपत्राकृतिमूलमात्रसंहितायाः प्रारम्भे।

२४. द्र०—या० शि० पृ० १७। शाखान्तरे वेदाध्ययनारम्भे चतुर्मात्रस्त्रिमात्रो वा प्रणवः क्रियते। माध्यन्दिनीयैस्तु कैश्चिदेव त्रिमात्रः प्रयुज्यते। बहुभिस्तु स्वरूपस्थितो द्विमात्र एव। अत्र च तैः 'अष्टमं नैव विद्यते' इति प्रणवसम्बन्धियाज्ञवल्क्यशिक्षावचनमुपस्थाप्यते।

२५. द्र०—मनुस्मृतिः २।७४।

संक्षेपतोऽथवा पूर्वं 'हरिः ओम्' इति कथ्यते ।
अधीतेरवसानेऽप्योम् प्रतीकश्चाग्रमन्त्रतः ॥ २६ ॥

## 'हरि ॐ' स्वरविचारः

वेदारम्भे हरिः शब्दः पदवत् पठ्यते यदि ।
आद्युदात्तः प्रयुज्येत स्वरितान्त इति स्फुटम् ॥ २७ ॥

कथने संहितावत् स्यादनुदात्तो रिवर्णकः ।
प्रणवस्तु प्लुतो ज्ञेय उदात्तः सर्वदा बुधैः ॥ २८ ॥

सर्वारम्भे हरिः ओम् स्यात् कर्मकाण्डे समर्चने ।
केवलं प्रणवो योज्यो होमे प्रत्याहुति स्फुटम् ॥ २९ ॥

## स्वराणां हस्तेन ज्ञापनम्

माध्यन्दिनीयशाखायामस्ति हस्तेन बोधनम् ।
उदात्तादिस्वराणां यज् ज्ञातव्यं तदधीतिभिः ॥ ३० ॥

## हस्तेन स्वरप्रदर्शने साधारणनियमः

सममुच्चारयेद् वर्णान् हस्तेन च मुखेन च ।
स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ ॥ ३१ ॥

## हस्तस्वरमहिमा

यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ।
हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ॥ ३२ ॥

---

२६. गणपत्यादिनमस्कारपूर्वकं सावित्रीप्रयोगान्तं वेदाध्ययनमङ्गलम् । अथवा एतत् स्थाने संक्षेपतो मङ्गलस्य प्रयोगः केवलं 'हरिः ॐ' इत्येव उक्त्वा प्रारम्भः । वेदाध्ययनं यदा समाप्यते-तदा 'ॐ' इत्युक्त्वा अग्रिममन्त्रस्य प्रतीक उच्यते सम्प्रदाये ।

२७. हरि÷ । ॐ३म् । अथवा—हरि÷ । ॐ ।

२८. 'हरिः' इति शब्दस्य ॐ पदेनैकप्राणयोगेन कथने स्वरः—हरिः ॐम् । प्रणवः सर्वत्र सर्वदा उदात्त एव । अध्ययनावसाने प्रणवः उदात्तः प्लुतश्च ।

२९. यद्यपि संहितापाठक्रमेण स्मार्तकर्मकाण्डे प्रयोगो नास्ति, तथापि तत्र सर्वारम्भे 'हरिः ॐ' इति प्रयुज्यते । होममन्त्रेषु तु प्रत्याहुति 'ॐ' इत्येव मन्त्रादौ प्रयोगः, इति प्रासङ्गिकमुक्तम् ।

३१. द्र०—या० शि० पृ० २१ । स्वरः—मुखेनोच्चारणीयः उदात्तादिः ।

३२. वाणी—मन्त्राक्षरसम्बन्धिनी, पाणिः-तदक्षरसम्बन्धी उदात्तादिबोधको हस्तः । द्र०—या० शि० पृ० ३३, २१ ।

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
कामनाहानिसन्तप्तो वियोनिमधिगच्छति ॥ ३३ ॥

अनभ्यासा—दधीतेर्वा विरहाद्ये स्वरान् मुधा ।
दर्शयन्ति पराकृष्ट्यै ते ब्रह्मप्लाविनो ध्रुवम् ॥ ३३ क ॥

### हस्तदोषाः

चुलुर्नौका स्फुटो दण्डो स्वस्तिको मुष्टिकाकृतिः ।
परशुर्हस्तदोषाः स्युस्तथाङ्गुल्या प्रदर्शनम् ॥ ३४ ॥

### स्वराणां हस्तेन प्रदर्शनस्थानानि

उदात्तमूर्ध्वं हस्तेन स्वरितं मध्यतस्तथा ।
प्रचयं स्वरितस्थानेऽनुदात्तं दर्शयेदधः ॥ ३५ ॥

द्रुतवृत्तौ दृढेऽभ्यासे प्राप्ते वयसि वैदिकाः ।
यथाशास्त्रं दर्शयन्ति हस्तं प्रादेशगामिनम् ॥ ३६ ॥

उदात्तं तु भ्रुवः प्रान्ते स्वरितं नासिकाग्रतः ।
हृत्प्रदेशेऽनुदात्तं तु तिर्यग् जात्यादिकान् स्वरान् ॥ ३७ ॥

### हस्तचालनसीमा

स्वस्थोच्चारेऽभ्यासकाले प्रयोगे मन्त्रजागरे ।
हस्तो वसन्तपूजायां न प्रादेशे प्रवर्तते ॥ ३८ ॥

❀ इति सामान्यप्रकरणम् ❀

---

३३-३४. तु०—या० शि० पृ० ३०, ३२ । चुलुराचमनमुद्रा । स्वस्तिकोऽभयमुद्रा ।

३७. तु०—या० शि० पृ० ३८ ।

३८. प्रयोगे = स्मार्तकर्मकाण्डीये । मन्त्रजागरे = मन्त्राणां विस्मृतिर्माभूदिति मनसिकृत्य क्रियमाणे परस्परस्पर्धायुक्ते पाठे । वसन्तपूजा = वाराणसेया हि वैदिकाः यजमानेन प्रार्थिताः पूजिताश्च पक्षद्वये स्थित्वा सस्पर्द्धं सोत्साहं च यं वैदिकं पाठमधीयते सा वसन्तपूजा । वेदरक्षायां वसन्तो ये वैदिकास्तेषां पूजा वसन्तपूजा । शब्दसाधुत्वं लोकप्रसिद्धेरूहनीयम् ।

## [२] अथ स्वरप्रकरणम्

### उदात्तादिस्वराङ्कनप्रकारः

#### उदात्तस्य प्रचयस्य च ज्ञापनम्

उदात्तोऽचिन्ह एवं च प्रचयोऽपि भवेत्तथा ।
परं स्वरितपूर्वस्तु प्रचयः सर्वथा भवेत् ॥ ३९ ॥

आद्यानुदात्तात् स्वरितात् पूर्वो, न्युब्जात्परस्तथा ।
अवसानेऽनुदात्ताच्च परोऽचिन्ह उदात्तकः ॥ ४० ॥

अनुदात्तयोर्द्वयोर्मध्ये गतोऽचिह्नश्च पञ्चमः ॥ ४० क ॥

#### स्वरितलेखनम्

स्वरितस्य भवेद्रेखा वर्णस्योपरि लम्बिता ।
स्पष्टं स्वरित एषोऽन्यः स्वतन्त्र स्वरितो भवेत् ॥ ४१ ॥

जात्यादिस्तत्र चिन्हं तु वर्णाधस्तिर्यगङ्कनम् ।
भुजैकहीनस्त्र्यस्रस्तु मध्यावर्तेऽथ न्युब्जके ॥ ४२ ॥

उत्तानशायितः षष्ठो ह्यङ्कः प्राचां मतोऽस्ति वै ।

#### अनुदात्तलेखनम्

नीचै रेखानुदात्तस्य वर्णाधो लिख्यते ऋजु ॥ ४३ ॥

#### त्रैस्वर्यव्यवस्था

माध्यन्दिनीयशाखायां संहितायां त्रयः स्वराः ।
उदात्तनीचस्वरिताः प्रचयो नैव गण्यते ॥ ४४ ॥

---

३९. एवमिति अचिह्नः ।

४०. (१) आद्यानुदात्तात् पूर्वो यथा—अम्बे अम्बिके ( सं० २३।१८ ) ।
(२) आद्यस्वरितात् पूर्वो यथा—आहम जानि ( सं० २३।१९ ) ।
(३) न्युब्जाद् यथा—बृहत्युष्णिहा ( सं० २३।३३ )

४० क. (४) अनुदात्तयोर्मध्यगतो यथा—अम्बे अम्बिके ।
(५) अवसाने अनुदात्तात् परो यथा—गर्भधम् ( सं० २३।१९ ) एवं पञ्चधा उदात्तपरिचयः ।

४२. स्वतन्त्रः स्वरितः जात्यादिः = जात्याभिनिहितक्षैप्रप्रश्लिष्टाः ।

### उदात्ते हस्तप्रदर्शनं भेदाश्च

अनुदात्तपरो ह्येकोऽन्यः पूर्वः स्वरितस्य च।
उदात्तो द्विविधो ह्येवं हस्तनिर्देशने भवेत्॥
पूर्वो वामे प्रदर्श्यस्तु ऊर्ध्वं चैव द्वितीयकः॥ ४५॥

### अनुदात्ते हस्तप्रदर्शनं भेदाश्च

(१) अनुदात्ता यदैकत्र ह्यनेके लक्ष्मतो यदि।
तत्रान्त्ये तु करं नीचै-र्मध्ये पूर्वेषु दर्शयेत्॥ ४६॥

(२) उदात्तव्यवधानेन स्वरितो लक्ष्मतो भवेत्।
पूर्वेऽनुदात्तचिह्ने तु नीचैर्हस्तं प्रदर्शयेत्॥ ४७॥

(३) यद्युदात्तव्यवायेना—नुदात्ताङ्कः पुनर्भवेत्।
तदा दक्षिणपार्श्वेऽग्रयमनुदात्तं प्रदर्शयेत्॥ ४८॥

(४) यद्यव्यवहितं लक्ष्म मध्यावर्तात्पुरो भवेत्।
तत्र भ्रमिः प्रदर्श्यस्तु नीचैश्चिह्ने यथागुडु॥ ४९॥

(५) न्युब्जचिह्ने ऽव्यवहितेऽनुदात्ते पिण्डदानवत्।
करः, एवं पंचधा स्यादनुदात्तप्रर्शनम्॥ ५०॥

---

४५. अनुदात्तात् पर उदात्तो द्विधा भवितुमर्हति—द्वयोरनुदात्तयोर्मध्यगत एकः, अवसाने अदृष्टस्वरितश्च द्वितीयः, तयोर्यथाक्रममुदाहरणं यथा—अम्॒बे अम्बि॒केम्बा॑लिके ( सं० २३।१८ ) गर्भ॑धम् ( सं० २३।१९ )। अनयोराद्यानुदात्तात्पूर्वस्य च वामे प्रदर्शनमुदात्तस्य। एवं पञ्चधा परिचायित उदात्तो हस्तप्रदर्शने द्विधा। ऊर्ध्वगामी, वामगामी च। आद्यस्वरितात्पूर्वः, न्युब्जाच्च परः ऊर्ध्वगामी। शेषासु तिसृषु स्थितिषु वामगामी।

४६. अथ पञ्चधा अनुदात्तः। तदेषां पञ्चानां नामान्यस्माभिः हस्तप्रदर्शनमभिलक्ष्य एवं कृतानि—(१) अन्त्यदर्शी (अयं सप्रचयोऽनुदात्तः) (२) सामान्यानुदात्तः (निम्नगामी) (३) दक्षगामी अनुदात्तः (४) अन्तर्गामी अनुदात्तः (५) तिर्यग्दर्शी अनुदात्तः। सोऽयं द्विप्रकारकः (क) पूर्णन्युब्जपूर्वः—बृहत्युष्णिहा (सं० २३।३३) (ख) दक्षन्युब्जपूर्वः—न्नुदहार्य्यः स दृष्टो (सं० १६।७) इति। (१) यथा—गा॒य॒त्री त्रि॒ष्टुप् ( सं २३।३३ )।

४७. (२) ग॒णाना॑न्त्वा ( सं० २३।१९ )।

४८. (३) जग॑त्य॒नुष्टुप्प॒ङ्क्त्या स॒ह ( सं० २३।३३)।

४९. (४) कप॒र्द्दिने॑ च॒ व्यु॒प्तकेशाय॒ च नमः॑ ( सं० १६।२९ )। उदरे गुडगुडायिते यथावर्तनमनुभूयते तद्वद्धस्तभ्रमिः।

५०. (५) बृहत्युष्णिहा॑ ( २३।३३ )।

### हस्तप्रदर्शनतः स्वरितभेदाः

स्वरितः पञ्चधा ज्ञेयो हस्तनिर्देशने बुधैः।
स्पष्टस्वरित एकस्तु प्रचयश्च द्वितीयकः ॥ ५१ ॥
मध्यावर्तस्तृतीयस्तु दक्षन्युब्जश्चतुर्थकः।
नीचन्युब्जः पंचमश्च नान्यथा दर्शनं क्वचित् ॥ ५२ ॥

### स्वरितेषु हस्तप्रदर्शनम्

(१) ऊर्ध्वस्थानात् पात्यते तु स्पष्टस्वरितचिह्नितः।
(२) स्वरितात्परतोऽचिह्नो वर्णः प्रचयसंज्ञकः ॥ ५३ ॥
मध्ये प्रदर्शनं तस्य स्वरितस्थानतो भवेत्।
(३) स्वरितानुदात्तचिह्नं यत्संश्लिष्टं दृश्यतेऽथवा ॥ ५४ ॥
मुद्रणे च चतुर्थाङ्को मध्यावर्तः प्रकीर्तितः।
अत्र पूर्वेऽनुदात्ताङ्के वर्णे मध्ये भवेद् भ्रमिः ॥ ५५ ॥
मध्यावर्ते भ्रमेर्बाह्यं प्रापयेत् स्वरिते करम्।
(४) उत्तानशायिते षष्ठे चाङ्के न्युब्जं विदुर्बुधाः ॥ ५६ ॥
तत्र पूर्वेऽनुदात्ताङ्के पितृपिण्डप्रदानवत्।
हस्तः प्रदर्शनीयस्तु न्युब्जे तु न्युब्जता भवेत् ॥ ५७ ॥
न्युब्जाङ्कतोऽनुदात्ताङ्के दृश्ये दक्षे प्रदर्शनम्।
(५) स्वरिताङ्को दृश्यते चेत् तदा नीचैः प्रदर्शनम्।
उभयत्राप्युदात्तः स्वं स्थानं मध्यगतो लभेत् ॥ ५८ ॥

---

५३—(१) गणानांन्त्वा (२३।१९) अत्र 'ना' स्वरितचिह्नवत्वात्स्पष्टस्वरितः। (२) गणपतिं हवामहे (सं० २३।१९) अत्र 'तिं हवामहे' प्रचयाः। स्वरितस्थाने मध्ये प्रदर्शनात् स्वरिता इत्यौपचारिको व्यपदेशः। वाजसनेयिनां प्रचयस्य पृथक् स्वरत्वं नास्ति। स्वरितादिति = स्पष्टस्वरितात् मध्यावर्तिनश्चेत्युभयोः परः। गणपतिं हवामहे (सं० २३।१९) चव्युप्तकेशाय (सं० १६।२९) इति क्रमेणोदाहरणे।

५४—(३) च व्युप्तकेशाय (सं० १६।२९)।

५५—अङ्कः = अङ्कनम्, स्वरसङ्केतबोधकं चिह्नम्।

५६-५७—(४) रथ्यो न रश्मीन् (सं० ३४।४९)। दक्षे न्युब्जतायाः प्रदर्शनम्।

५८—(५) बृहत्युष्णिहा (सं० २३।३३)।

५८. मध्यगतः—न्युब्जानुदात्तचिह्नमध्यगतः, न्युब्जस्वरितचिह्नमध्यगतो वा। त इमे पञ्च स्वरिताः हस्तदर्शनस्थित्या इत्थं संज्ञापिताः—(१) मध्यपाती (२) मध्यदर्शी (३) मध्यावर्ती (४) पूर्णन्युब्जः (५) अर्द्धन्युब्जः, दक्षन्युब्जापरनामधेयः इति।

**कण्ठतः स्वरबोधनम्, सम्प्रदायमहिमा च**

एवं स्वरास्तु हस्तेन दर्शनीया अथापि च ॥ ५९ ॥

कण्ठेनोच्चारणं तेषां गुरुभ्योऽभ्यासतस्तथा ।
सतीर्थ्येभ्यः श्रद्धया च ब्रह्मण्यैः समवाप्यते ॥ ६० ॥

विरहे सम्प्रदायस्य श्लथेऽभ्यासेऽस्मृतौ तथा ।
उच्चारणं भिद्यते तद् वेदह्रासकरं परम् ।
तस्मात्सर्वात्मना वेदो सद्गुरोः समधीयताम् ॥ ६१ ॥

❁ इति स्वरप्रकरणम् ❁

## [३] अथ वर्णोच्चारणप्रकरणम्

**शिक्षाशास्त्रोपयोगः, सम्प्रदायतो ज्ञानम्**

शिक्षाशास्त्रे पूर्णतया वर्णस्थानादिबोधनम् ।
उक्तं तथोपदेशस्तु बाल्ये प्रायो न लभ्यते ॥ ६२ ॥

शिक्षाशास्त्रं ततः प्रौढा विवेकायोपयुञ्जते ।
यदा तु वेदगुरुभिः पाठ्यते बालकस्तदा ॥ ६३ ॥

उच्चारणे स्याद् वर्णानां शिक्षाशास्त्रानुकूलता ।

**एतच्छिक्षाविषयः**

वर्णानां देवनागर्यां लेखो वै लोकवेदयोः ॥ ६४ ॥

समः, क्वचन वेदेऽस्ति विशेषो लेखलक्ष्मतः ।
उच्चारणं लौकिकं च क्वचिद् वेदेऽन्यथायते ॥ ६५ ॥

**संहितायाा लेखने मुद्रणे च स्वरूपम्**

तदत्र बोध्यते स्पष्टं माध्यन्दिनमतानुगम् ।
मुद्रणादौ स्पष्टमर्थबोधनाय यथायथम् ॥ ६६ ॥

रेखा–पदविभागादि लक्ष्म यद्दीयते बुधैः ।
सम्प्रदायागताभ्यासोच्चारणाय न तन्मतम् ॥ ६७ ॥

अभ्यस्यमन्त्रग्रन्थेऽर्थनिरपेक्षेण लेखनम् ।
पठनं श्रवणं दृष्टिर्द्रढिम्ने श्रेयसे मताः ॥ ६८ ॥

---

६५. लक्ष्म—चिह्नम्, सङ्केतः । यथा यकारस्य ।

६७. न तन्मतम् = साम्प्रदायिकलेखने तन्नाद्रियत इत्यर्थः ।

६८. अभ्यसनीयमन्त्रग्रन्थे अर्थस्य अपेक्षामकृत्वा तन्निरपेक्षेण सन्ततविधया लेखनं, पदविभागमकृत्वा पठन श्रवणं दृष्टिश्च दीयते चेत् लेखन-पठन-श्रवण-दर्शनजनिताः

स एव यद्यर्थबोध-कृते मुद्राप्यते बुधैः।
तत्र सर्वः समादृत्यो विधिर्लोकमतानुगः॥ ६९॥

### पूर्वरूपचिह्नं विवृत्तिः

अकारः पूर्वरूपेण लुप्यते यत्र तत्स्थले।
अर्द्धाकारं सर्परूपं लौकिका विलिखन्ति तत्।
वेदे नैव प्रयोक्तव्यं विवृत्तेर्लक्ष्म तत्स्मृतम्॥ ७०॥

द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते।
विवृत्तिस्तत्र विज्ञेया 'यऽईशे' तु निदर्शनम्॥ ७१॥

### विरामस्थानानि

मन्त्रमध्येऽवसाने तु विवृत्तावपि मात्रया।
अवग्रहे प्रतीकेषु विरामः सर्वदा मतः॥ ७२॥

पदपाठे प्रतिपदं क्रमादौ नियते स्थले।
मात्राकालोऽस्ति चर्चायां नापेक्ष्यो सोऽन्यपक्षिणा॥ ७३॥

### मात्राकालः

उच्चारणगतिं प्रेक्ष्य मात्राकालस्तु बोध्यते।
गुरुभिः केवलं नास्ति लक्षणेन प्रयोजनम्॥ ७४॥

### ऋकारस्य रेकारोच्चारणम्

स्वरः स्वयमृकारोऽसौ रेकारोच्चारणं भजेत्।

### अनुस्वारलेखनं भेदाः हस्तमुद्राश्च

अनुस्वारो यत्र दृश्यो धनुश्चिह्ने सुबिन्दुधृक्॥ ७५॥

---

संस्काराः द्रढिम्ने बुद्धिवैशद्याय च श्रेयसे प्राचीनैरभिमताः। अत एव प्राचीनसन्तत-( रेखा-पदविभागविर्रहित ) शैलीलिखितग्रन्थपाठकाः स्वीयया अभ्यूहप्रधानया दृष्ट्या साधारणपाठकानतिशेरते।

६९. स एव = अभ्यस्यमन्त्रग्रन्थः।

७१. द्र०—या० शि० पृ० ८३। यऽईशे (सं० २३।३)

७२. मन्त्रमध्ये इति त्रिचतुरादिविरामवत्सु मन्त्रेषु सर्वत्र विरामस्थानज्ञापनार्थः, न तु यत्र कुत्रचिद् स्वाभिलषितविरामे मात्राकालनिर्देशकः। अवग्रहः पदपाठे भवति।

७३. चर्चा—पक्षद्वयसाध्या, तत्र परस्परमन्यः पक्षः द्वितीयपक्षीयं विरामकालं नापेक्षते, अपि तु द्वितीयपक्षस्य उच्चारणीयवर्णराशौ यदा वर्णद्वयं शिष्यते तदैवान्यः पक्षः स्वोच्चारणीयं पाठांशं प्रारभते इति भावः।

७५. सर्वहुतऽऋचः (सं ३१।७) छन्दांसि जज्ञिरे (३१।७)।

लघुः स मात्रिको ह्रस्वे तर्जन्यङ्गुष्ठयोगदः ।
संयोगे परतो ह्येष गुरुत्वं शास्त्रतो भजेत् ॥ ७६ ॥

षष्ठाङ्को रेफयुक् ठो वा पार्श्वे वोढ्वं तु बिन्दुमान् ।
अनुस्वारं द्विमात्रं तु वोधयेद्दीर्घसंज्ञकम् ॥ ७७ ॥

तर्जनीप्रसृतिस्तत्र हस्तेनैवं प्रदर्शनम् ।
अनुस्वारः स्वराभावान्न मात्राकालभाक् परम् ॥ ७८ ॥

## अनुस्वारोच्चारणम्

भिन्नश्रुतिः शषसहरेफेषु तत्र मात्रिता ।
पूर्वश्लिष्टो गः प्रणव-द्वितीयमात्रया युतः ॥ ७९ ॥

सनादो गुँ श्रुतिर्बिन्दुः न ग्वं गोमादि वा भवेत् ।
यत्र स्वरूपतो बिन्दुः कथनं तत्र लोकवत् ॥ ८० ॥

## विसर्गस्य लेखनं हस्तमुद्राश्च

वेदे विसर्गश्चिह्नेन सहितो लिख्यते ह्यतः ।
रेखा बिन्दुद्वयस्यान्त-रधोरेफसमा च या ॥ ८१ ॥

कनिष्ठां क्षेपये, दूर्ध्व-रेफतुल्या तु तर्जनीम् ।
तिर्यग्रेखा द्वयङ्गुली ते क्षेप्ये इति विनिर्दिशेत् ॥ ८२ ॥

## विसर्गोच्चारणम्

'ह्' श्रुत्या मात्रया वेदे संहितायां प्रयुज्यते ।
स्वराश्रयी विसर्गोऽयम्, ऐ-औभ्यां परतो यदि ॥ ८३ ॥

---

७७. गणपतिं हवामहे (२३।१९) लेखो द्विधा—ꣳ०—ꣳ०

७८. यद्यपि लोके अनुस्वारस्य एकमात्रिकता द्विमात्रिकता वा नास्ति, परमूष्मसु परेषु वेदेऽनुस्वारस्य भिन्ना श्रुतिः मात्राकालसंबन्धश्च भवति शास्त्रोपदेशादेव। [शु० प्रा० ४।१४८, १४९]

७९. ऊष्मणां पूर्वस्यानुस्वारस्य उच्चारणनिर्देशः—पूर्वश्लिष्ट इति। पूर्वश्लिष्टत्वात् गस्य द्वित्वश्रुतिः। स्पष्टं तु साम्प्रदायिकोच्चारणत एव ज्ञायेत।

८०. बिन्दुरनुस्वारः।

८१. पुरुषः। सहस्राक्षः (सं० ३१।१)

८२. सूचीभि ÷ (सं० २३।३३) ते—तर्जनीकनिष्ठिके।

८३. ऐ—सदस्यैः (सं० ७।४५) औ—शीर्ष्णो द्यौः (सं० ३१।३१)।

इ-उ-स्वरश्रुतिं धत्ते, ऋकाराद् द्वे श्रुती तथा।
परो ह्य-इ-उ-ए-ओ-भ्यो यथावर्णश्रुतिर्मतः॥ ८४॥

**अवसानगतवर्णोच्चारणं हस्तमुद्राश्च**

अस्वरं व्यञ्जनं लोकेऽवसानेस्त्यर्द्धमात्रिकम्।
साम्प्रदायिकद्विःश्रुत्या कालतः करमुद्रया॥ ८५॥

वेदे विशेषतां धत्ते तद् वेद्यं पाठशुद्धये।
तर्जनीं नामयित्वा तु क-ट-ङ-णांश्च दर्शयेत्॥ ८६॥

तर्जन्यङ्गुष्ठयोगेन कुण्डलाकृतिना तु तम्।
'पं' पञ्चाङ्गुलियोगेन, मुष्टिना 'मं' प्रदर्शयेत्॥ ८७॥

अङ्गुष्ठोपरि तर्जन्या नखं धृत्वा नकारकम्॥ ८८॥

**रङ्गस्य लेखनमुच्चारणं च**

पदान्तीयो नकारस्तु संहितास्वनुनासिकः।
यदा स्यान् 'मैरयँश्चन्द्र' लोकतुल्यो रवः श्रुतौ॥ ८९॥

स एव रेफपरको रङ्गः स्यान्मात्रिकः पुनः।
स्वरमध्ये द्विमात्रः स्याद् रेखामात्राङ्कनायुतः॥ ९०॥

नस्त उच्चार्यते रङ्गः कांस्येन समनिस्वनः।
स्वरं दीर्घं रञ्जयित्वा मृदुर्द्विश्रुतिवर्जितः॥ ९१॥

---

८४. ऋ—नॄँः पाहि (सं० १३।५२) अ-आ—ऋषयः, सप्तदैव्याः (सं० ३४।४९) इ—सूचीभिः (सं० २३।३३) ई—शर्ठ० रात्रीः (सं० ३६।११) उ—मनो यजुः (सं० ३६।१) ऊ—केतपूः (सं० ९।१) ए—वरुणस्याग्नेः (सं० ७।४२) ओ—सुविताय शंयोः (सं० ३६।११)।

८६. अत्र अवसानवर्णोच्चारणे पदपाठोदाहरणान्यपि द्रष्टव्यानि। क्—भिषक् (सं० १२।८०) ट्—सम्राट् (सं० २०।५) ङ्—प्राङ् (सं० २५।२५) ण्—वृषण्वसू इति वृषण्। वसू (सं० ११।१३)।

८७. त्—पुरीतत् (सं० ३९।९) प्—ककुप (सं० २३।३३) म्—गर्भधम् (सं० २३।१९)।

८८—न्—रश्मीन् (सं० ३४।४९)।

८९—क्रमजटादिसन्धीरनुलक्ष्य संहितास्विति बहुवचनम्। मैरयँश्चन्द्रमसि (सं० १।२८)

९०—शत्रूँ १॥ रप (सं० ७।३७) लोकाँ २॥ अकल्पयन् (सं० ३१।१३)
९१—तु०-या० शि० (पृ० १३१)।

## रङ्गे हस्तमुद्रा

रङ्गे सर्वत्र तर्जन्याः प्रसारः शाश्वतो मतः।
केचिन्मध्यमया सार्धं क्षेपणं कुर्वतेऽमतम् ॥ ९१ क ॥

## यकारस्य जकारोच्चारणम्

रेखया यदि भिद्येत यकारस्योदरं तदा।
चवर्गीय-जकारेण सममुच्चारणं मतम् ॥ ९२ ॥

सान्ध्यः पदान्त्यो वर्णैर्युग् उपसर्गपरस्तथा।
अथ मा-स-न-शब्देभ्यो यकारो लोकवत्स्मृतः ॥ ९३ ॥

मा यज्ञ-मथो ये-स यन्ता चैव मनो न ये।
उपसर्गाच्च पादादि-ऋं-ह-सं-रेफयुक्तु जः ॥ ९४ ॥

## र-लयोः सैकारोच्चारणम्

रेफो लकारश्च यदा श-ष-हेभ्यस्तु पूर्वतः।
'ए' स्वरश्रुतिमान् ज्ञेयो स्वरभक्तिरियं मता ॥ ९५ ॥

ऋकारात्पूर्वतो रेफो गौड़ाचार्यैः स्वरश्रुतिः।
दाक्षिणात्यैर्यथालोकं कथ्यतेऽनुपरम्परम्।
लकारः श-ह्योर्योगे सैकारश्रुतिभाङ् मतः ॥ ९६ ॥

---

९१. क.—केचन द्विमात्रिके रङ्गे तर्जन्या सह मध्यमामपि प्रदर्शयन्ति, तत्प्रदर्शनं न सद्भिरनुमन्यते। एतच्च तर्जनीप्रसारणमन्याङ्गुलीनां न्यचने (नामने) एव सम्भवतीति सर्वत्र ध्येयम्। एवं विसर्गे कनिष्ठाप्रसारणेऽप्यन्याङ्गुलीनां नामनमवगन्तव्यम्। एतत्प्रसारणमेव बहुत्र शिक्षासु 'क्षेप' शब्देनाप्युच्यते।

९२—मनो यजुः (सं० ३६।१); यकारस्य नीचैर्बिन्दुदानं त्वसाम्प्रदायिकम्।

९३—सन्धिजः—अत्यतिष्ठद् (सं० ३१।१) पदान्तीयः—मयि प्राणापानौ (सं० ३६।१); वर्णयुक् पदादिपरि—यो रेवान् यो (सं० ३।२९); उपसर्गात् परः पदादिरपि—वियत्सूर्यो (सं० १२।३४); अथ—अप्यर्थोऽयम, मा—माया स्वधया (सं० ११।६९); स—स योजते (सं० १५।३३); न—न यत्परो (सं० २०।८२)।

९४—मा यज्ञम् (सं० ५।३); अथो ये (सं० १६।८); सयन्ता (सं० ६।२९); मनो न येषु (सं० ७।१७); उपसर्गात्परोऽपि पादादिः—उप यज्ञम् (सं० ८।३५); ऋयुक्-सदोस्यृतस्य (सं० ५।३); हयुक्—गेह्याय (सं० १६।४४); संयुक्—संय्यौमीदमग्नेः (सं० १।२२); रेफयुक्—उदहार्य्यः (सं० १६।७); अत्र यकारस्य जकारोच्चारणम्।

९५—श—दर्शतम् (सं० ११।३७); ष—सहस्रशीर्षा (सं० ३१।१); ह—देवं बर्हिः (सं० २१।४८)।

९६—ऋ—अग्निर्ऋषिः(सं० २६।९); 'रे रे षिः' इति गौडसम्प्रदाये उच्चारणम्। श—शतवल्शा (सं० १२।१००); ह—उपवल्हामसि (सं० २३।५१)।

### वकारे विशेषलेखनमुच्चारणं च

वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ।
पदस्यादौ गुरुर्मध्ये लघुः पंचमयुक् तथा ॥ ९७ ॥

सन्धिजश्च पदान्तीयो वर्णयुक्च लघूतरः ।
गुरौ द्वित्वं लेखने चोच्चारणं स्पष्टमेव हि ॥ ९८ ॥

लघौ लघूतरे लेखे न भेदोऽस्ति परं स्वतः ।
उच्चारणे मृदुर्भेदो ज्ञायते ह्यप्रमादतः ॥ ९९ ॥

सं विहायोपसर्गात्तु पदादिरपि वो लघुः ।
वो वां वा वै मन्त्रपाठे लघवो, गुरवः पदे ॥ १०० ॥

### वर्णान्तरस्य द्वित्वमुच्चारणं च

अथ सर्वेऽपि वर्णा ये शिक्षा-पार्षदशास्त्रतः ।
द्विर्भवन्ति यथालोक-मुच्चार्यास्ते यथायथम् ॥ १०१ ॥

### षकारस्य खकारोच्चारणम्

कवर्गीयद्वितीयेन खकारेण समो खः ।
मूर्द्धन्यस्य षकारस्य टवर्गीययुतिं विना ॥ १०२ ॥

### ज्ञवर्णोच्चारणम्

ज ञोर्ज्ञ इति वर्णस्य प्रयोगो भिद्यते श्रुतौ ।
गौड़ाचार्या जञौ स्पष्टं विश्लिष्य ब्रुवते परम् ॥ १०३ ॥

महाराष्ट्रा दन्तमूल-पीडनाद् ग्न्यमिवाक्षरम् ।
ग्यन्द्येत्यादिश्रुतिर्वेदसम्प्रदाये न विद्यते ॥ १०४ ॥

---

९७—गुरुः—व्वसो मम (सं० २३।१९); लघुः—हवामहे (सं० २३।१९); अन्वालेभिरे (सं० ३४।४९); पञ्चमाः वर्गाणाम् ।

९८—सन्धिजः—वायो + इह = व्वायविह (सं० २७।३३); पदान्तीयः—अमृतन्दिवि (सं० ३१।३); वर्णयुक्—गणानान्त्वा (सं० २३।१९) ।

१००—सम्—संव्वपामि (सं० १।२१); अन्योपसर्गात्परो लघुः—प्र वायुमच्छा (सं० ३।५५); वः—देवो वः (सं० १।१); वाम्—या वाङ्कशा (सं० ७।११); वा—वातो वा मनो वा (सं० ७।७); वै—न वा उ (सं० २३।१६) ।

१०१—प्रसङ्गचिन्त्येयम् । सविता प्प्रार्पयतु (सं० १।१) आदौ ।

१०२—खः = उच्चारणम् । इषे त्वा (सं० १।१) टयुतिः—अष्टौ च (सं० १५।२५) ठ—ज्येष्ठाय च (सं० १६।३२) ड—× । ढ—× । ण—विष्णुर्विचक्रमे (सं० ५।१) टवर्गयोगे न खकारोच्चारणम् ।

१०३—यज्ञेन यज्ञम् (सं० ३१।१६) ।

## गौडदाक्षिणात्योच्चारणविशेषाः

व्यृध्यै ङ्कयोर्योगे तसोर्योगे च भिद्यते।
गौडानां दाक्षिणात्यानां कथनं गुर्वनुक्रमात्॥ १०५॥

यवौ दीर्घस्वरैर्युक्तौ स्वरितौ सविसर्गकौ।
स्यातां तदाङ्गुली क्षेप्ये इति गौडा वदन्ति नः।
कनिष्ठिकैव क्षेप्येति दाक्षिणात्यांस्तु मन्वते॥ १०५ क॥

## यमबोधः

पञ्चमापञ्चमस्पर्शयोगे ज्ञेयो यमोऽक्षरम्।
विदुषामपि मोहाय तत्र स्थूला दृशिस्त्वियम्॥ १०६॥

संहितायां ककारस्तु मध्यतो यस्तमोस्तनोः।
लिख्यते न॰ प्रयुज्येतान्यत्र विद्वत्समाश्रयः॥ १०७॥

## दीर्घपाठस्थितिः

प्रतिज्ञापरिशिष्टे यद्दीर्घत्वं प्रतिपादितम्।
तदनुस्मृत्य सर्वत्र मात्राकालस्य दीर्घता।
तस्मान्माध्यन्दिनीयोऽसौ दीर्घपाठो निगद्यते॥ १०८॥

---

१०५—व्यृद्ध्यै (सं० ३०।१७); प्राङ्क्सोमो (सं० १९।२); त्रीन्त्समुद्रान्त्समसृपत् (१३।३१)।

१०५ क. सदस्यैः (सं० ७।४५); अतिविश्वाः (सं० ११।८४)।

१०६—यमस्वरूपं सिद्धान्तकौमुद्यामपि—'वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः' (पा० ८।२।१)। शुक्लयजुः-प्रातिशाख्येऽपि - 'अन्तः पदेऽ पञ्चमः पञ्चमेषु विच्छेदम् (४।१६१)। 'अप्रत्यक्षकादि-वर्णशरीराः श्रुतिविशेषा एव यमाः, विसर्गानुस्वारादिवत्' इति शिक्षाविदः। दृश्यते तु काद्विवर्णत्वं यमानाम्। अतो यमविषये बहुधा वचनोपलम्भाद्विदुषामपि मोहः प्रायः सम्भवति। अतोऽत्र यम विषये बहुविवेक्तव्यमन्यत्र विवेचयिष्यते। इह तु स्थूलदृष्ट्या-वैदिकैरिदमवगन्तव्यं यत्—

१०७. आत्मदा ( सं० २५।१३ ) पत्नीभिः ( सं० १५।५० ) इत्यादौ तमोः तनोर्वा योगे यः मध्ये ककारो लिखितो दृश्यते, स एव यमपरिचायक इति। यतो हि न तस्य ककारस्योच्चारणं भवति। अन्यापञ्चमपञ्चमयोगे यमपरिचायनाय न कश्चन सङ्केतः सम्प्रदाये प्रयुज्यत इति तत्र विद्वदाश्रय एव शरणम्।

१०८. वाजसनेयमाध्यन्दिनीयसंहितायाः पाठो 'दीर्घपाठः' कथ्यते। तत्र बहव आधुनिकाः ससारं प्रमाणमनुपलभमाना अपि कल्पयन्ति यत्—आसीदेतस्याः संहिताया ह्रस्वपाठोऽपि, ह्रस्वदीर्घशब्दयोः परस्परापेक्षत्वादिति। तत्र वक्ष्यमाणार्षीसंहिता (१११) विरहितो लघुपाठो ह्रस्वपाठो वा, तत्सहितो दीर्घपाठ इति। तदसत्

### कण्डिका—मन्त्रयोर्भेदः

संहितायां मन्त्रसङ्ख्या दृश्यते सा तु कण्डिका।
स्मार्ते प्रयोगे स्युर्मन्त्राः कण्डिकान्तास्तु सर्वथा ॥ १०९ ॥

श्रौते श्रौतप्रयोगानु-सारेण कल्पसूत्रतः।
एकस्यां कण्डिकायां स्युर्बहवोऽपि यथावचः।
लोके च मन्त्रशब्दोऽयं कण्डिकासु प्रयुज्यते ॥ ११० ॥

### आर्षी संहिता, विशेषश्च

बहुत्र संहितायां तु केचिन्मन्त्राः प्रतीकतः।
उक्तास्तत्र विशेषाख्या या चा'र्षी संहिता' स्मृता ॥ १११ ॥

सा प्रातिशाख्ये निर्दिष्टा 'संहिता' तत्र वैदिकाः।
पारायणे तामुच्चार्य पूर्णान्मन्त्रानधीयते ॥ ११२ ॥

### गायत्रीमन्त्रे विशेषः

मन्त्रः सवितृदैवत्यो गायत्रस्तु 'तदा'दिकः।
लोकप्रसिद्धो गायत्री-मन्त्रो नाध्याप्यते स्फुटम् ॥ ११३ ॥

---

सम्प्रदायापरिज्ञानात्। कात्यायनीये प्रतिज्ञापरिशिष्टे विसर्गानुस्वारादेरप्रसिद्धानां लघु-दीर्घ-गुरुत्वव्यवस्थानाम्, उच्चारणेऽपि 'ईषद्दीर्घता च भवति' इति विधानानां, मात्रा-कालदीर्घतायाश्च जागरूकत्वात्, तदुच्चारणस्य च सम्प्रदायसमधीनत्वात् सृष्टिन्यायेन ( जै० १।४।१७ ) सर्वोऽपि पाठः शाखान्तरवैलक्षण्यद्योतनाय 'दीर्घपाठः' इति कथ्यते। अतोऽत्र न ह्रस्वपाठपरिकल्पनावसरः इति।

१०९-११०. यद्यपि कण्डिकासु मन्त्रशब्दप्रयोगो न श्रौतकल्पसम्मतः। परं वेदान्तरसंस्कारवशात् शास्त्रज्ञाः साम्प्रदायिकाः लौकिकाश्च सर्वेऽपि कण्डिकासु मन्त्र-शब्दं प्रयुञ्जते। तदेतदप्युपपद्यत इत्यन्यत्र विचारयिष्यामः।

१११-११२. लोकं ता इन्द्रम् ( सं० १४।२२ ) इत्यादिषु मन्त्राणामाद्यपदसङ्केतेन 'तं प्रत्नथायं वेनश्चित्रं देवनाम्' ( सं० ३३।३३ ) इत्यादिषु पदद्वयसङ्केतेन च मन्त्राः संकेतिताः सन्ति। त इमे संहिताधर्मेणैव ऋषिसङ्केताः समधीयन्ते। तस्मादेषां सम्प्रदाये 'आर्षी संहिता' इति व्यवहारः। प्रातिशाख्ये त्वेषां आर्षीविशेषणविरहेण 'संहिता' (४।१७७) शब्देनैवास्ति व्यवहारः। साधारणे विधिनिरपेक्षे पाठे सङ्केतमात्र-पाठः। पारायणे ब्रह्मयज्ञादौ तु सङ्केतात्मिकाम् आर्षीसंहितामधीत्य सङ्केतितमन्त्राणां पूर्णः पाठः क्रियते। एवमस्ति कण्डिकानुवाकसङ्केतोऽप्येतच्छब्देन ( सं० ३२।३ )।

११३. यद्यपि बहवो मन्त्राः सावित्राः गायत्रीछन्दस्काश्च सन्ति। परं 'तत्सवितुः' ( सं० ३।३५ ) इत्यादिक एव गायत्रीमन्त्रत्वेन प्रसिद्ध्यति। एतस्य स्फुटम् = वाचिक-धर्मेण नाध्यापनम्।

उपनीतावेव मन्त्रं कर्णे ह्युपदिशन्ति तम्।
नैतस्य संस्था गुणिनी कार्यते साम्प्रदायिकैः॥ ११४॥

पाठकाले परित्यागः, परं पारायणे तथा।
प्रयोगे सस्वरं तस्य चोपांशुः पाठ इष्यते॥ ११५॥

### मन्त्र-ब्राह्मणस्वरभेदनिर्देशः

मन्त्रश्च ब्राह्मणं चेति वेदः स्यात्तत्र संहिता।
मन्त्रभागः स्मृतस्तत्र पाठस्त्रैस्वर्यतः स्मृतः॥ ११६॥

ब्राह्मणे तूच्चनीचौ द्वौ स्वरौ तद्विस्तरोऽन्यतः।

### ब्राह्मणभागस्य बृहत्त्वं तदध्ययनस्थितिश्च

ब्राह्मणं माध्यन्दिनीयं शताध्यायात्मकं ततः॥ ११७॥

स्मृतं शतपथं तच्च स्यादर्थात्परिमाणतः।
इतरेभ्यो महत् तेन सर्वे न समधीयते॥ ११८॥

### पूर्णशाखाध्ययनाक्षेपपरिहारः

ब्राह्मणाध्ययनाभावात् शाखा वाजसनेयिभिः।
पूर्णा नाधीयते दोष—माक्षिपन्ति परे, परम्॥ ११९॥

---

११४. मन्त्रोऽयमुपनयने गुरुणा उपदिश्यते। उपदेशश्च शास्त्रविधया प्रथमतः कर्णकुहरेण श्रावणम्। उपदेशधर्मेण प्राप्तत्वात् विशेषाराधनीयत्वात्, द्विजत्वोपबृंहकत्वाद्, महिम्नो गुरुत्वात्, देश-काला-धिकारिशौचादौ प्रमादसंभवात्, सम्प्रदायस्य तादृशत्वात् गायत्रीमन्त्रस्य गुणिनी-संस्थाविधया नाभ्यासः क्रियते। ये चाधुनिकाः सर्वस्य मङ्गलमुद्घोषयन्तो मन्त्रस्यास्य सार्वजनीनत्वं स्पष्टोच्चारणं च विदधते तदसाम्प्रदायिकम्।

११५. पारायणादिविधिनिरपेक्षे न तु सर्वथा विधिनिरपेक्षे वेदपाठे एतस्य मन्त्रस्य उच्चारणं न क्रियते। वैधे पारायणे ब्रह्मयज्ञे तु यथार्हं सस्वरं, होमादौ हस्त-स्वरविरहितं च गायत्रीमन्त्राध्ययनमुपांशुविधया क्रियते।

११६. 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (प्र० प० १।२)। तत्र मन्त्रात्मकतया वैदिकप्रसिद्धो भागः 'संहिता' संज्ञया सर्वशाखासु व्यवह्रियते। संहितायामत्र त्रैस्वर्येण सहस्तप्रदर्शनमध्ययनम्।

११७. वाजसनेयिनां ब्राह्मणे तदन्तर्गतयोरारण्यकोपनिषदोरपि सहस्तप्रदर्शन-मुदात्तानुदात्तेतिस्वरद्वयज्ञापनपरमध्ययनम्। तदेतत्स्वरद्वयं 'भाषिकम्' इति कथ्यते। यथा—'ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ' (प्र० प० १।८)। प्रकरणान्तरादेतत् ब्राह्मणस्वरसंबन्धिविवेचनमत्र नोक्तम्।

सम्प्रदायविदस्तत्र कथयन्ति वचो यथा—।
'विधिर्विधेयस्तर्कश्च वेदः' कल्पे समीरितम् ॥ १२० ॥

'विधिः' स्याद् ब्राह्मणं, मन्त्रः 'विधेय' इति कीर्तितम् ।
प्रयोगपाटवं 'तर्कः' सम्प्रदायात् त्रयं स्थितम् ॥ १२१ ॥

पृथक् पृथक् त्रयं त्वेतद् वेदः सूत्रेण बोध्यते ।
तस्मात् पूर्णतया मन्त्रा-ध्ययने वेदपूर्णता ॥ १२२ ॥

भवत्येवं ब्राह्मणस्य पूर्णाधीतौ च पूर्णता ।
श्रौतस्मार्तप्रयोगस्य ज्ञानेऽपि वेदकृत्स्नता ॥ १२३ ॥

अथैतदप्यनुध्येय—मन्यवेदेषु यावता ।
कालेनाभ्यसनं मन्त्र-ब्राह्मणानां तु तावता ॥ १२४ ॥

माध्यन्दिनीयशाखाया एको भागो भवेद् ध्रुवम् ।
यतो ह्रस्तस्वराभ्यासः कृच्छ्रेण स्वात्मसादिति ॥ १२५ ॥

---

१२०-१२३. शुक्लयाजुषाणां स्वीये पारस्करगृह्यसूत्रे समावर्त्तनप्रकरणे—'वेदं समाप्य स्नायात्' ( पा० गृ० २।५।१ ) इति प्रक्रम्य उक्तम्—'विधिर्विधेयस्तर्कश्च वेदः । षडङ्गमेके । न कल्पमात्रे । कामं तु याज्ञिकस्य ।' इति । एतानि सूत्राणि सम्प्रदायरहस्यविद एवं व्याचक्षते ।—"विधिः = ब्राह्मणभागः । विधेयः = मन्त्रभागः, विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति व्युत्पत्तेः । तर्कः = प्रयोगः । तर्क दीप्तौ ( श० क० ) तर्क्यते प्रकाश्यते वेदत्वं येन । प्रयोग एव इष्टप्राप्त्यनिष्टपरिहारद्वारा वेदस्य वेदत्वं प्रकाशयति । एतत् त्रितयं पृथक् पृथक् पूर्णो वेदो माध्यन्दिनीयेषु परिभाष्यते अध्ययनाय । अत एव 'शतषष्टेः' षिकन् पथः इति कात्यायनीयं (पा० ४।२।६०) वार्तिकं ब्राह्मणबृहत्त्वात् शतपथिकः, षष्टिपथिकः, इति शुक्लयाजुषाणामध्येतृणां संज्ञाविशेषं व्यावहारिकतया समर्थयद् वेदान्तराध्यायिभिर्वैलक्षण्यं निर्दिशति ।

एतेष त्रिषु वेदशब्दवाच्येषु एकं भागं पूर्णमधीत्य स्नायात् । एके आचार्याः षडङ्गसहितं त्रितयेष्वेकं वेदभागमधीत्य स्नायादित्याहुः । एके इत्युक्तेरनावश्यकत्वद्योतनाद् वाजसनेयिषु ऋग्वेदिनामिव न नियततया मूलमात्रं षडङ्गाध्ययनम् ।

अन्याङ्गाध्ययनरहिते 'तर्क' शब्दनिर्दिष्टे प्रयोगज्ञानमात्रे अधीते सति वेदाध्ययनं नास्तीति एके आचार्याः मन्यन्ते । तत्र सूत्रकृत् सिद्धान्तयति—याज्ञिकस्य पौरोहित्यवृत्तेर्ब्राह्मणस्य तु कामं प्रयोगज्ञाने सम्पादितेऽपि वेदाध्ययनं सिद्ध्यत्येव । याज्ञिकस्येत्युक्तेः क्षत्रियवैश्ययोः प्रयोगज्ञानमात्रसम्पादने न पूर्णं वेदाध्ययनमिति । अत एव वाजसनेयिषु वेदपाठी, ब्राह्मणपाठी, श्रौती (कर्मकाण्डी) चेति ख्यातास्त्रयोऽपि वैदिकाः परिगण्यन्ते ।" इति ।

१२४-१२५. एवं वाजसनेयिषु मन्त्रभागस्य स्वराभ्यासनैयत्येन गुरुत्वात् ब्राह्मणभागस्य चार्थतः परिमाणतश्च ह्रस्तस्वरपूर्वकमभ्यासेन बृहत्त्वात्, आध्वर्यववेदे च प्रयोग-

## पदपाठस्वरूपम्

पदपाठे संहितायाः पदानि समधीयते।
विच्छिद्य सन्धि, तस्मात्तु स्वर-वर्णविपर्ययः॥ १२६॥

दृश्यते तस्य विज्ञानं कार्यं स्यात् पार्षदादिभिः।
न तत्र सम्प्रदायाद्धि विशेष इति नोच्यते॥ १२७॥

## पदपाठे गलत्पदानि

येषां पदानां नोक्तिः स्यात्पदपाठे तु तानि वै।
'गलत्पदानि' प्रोक्तानि प्रातिशाख्येऽस्ति निर्णयः॥ १२८॥

## पदपाठे गलदृचः

एवं गलदृचस्ताः स्युर्यासां पाठो न विद्यते।
पदपाठे,ऽसकृत् पाठो संहितायां च दृश्यते॥ १२९॥

## क्रमपाठस्वरूपम्

पदपाठे पठितयोर्द्वयोः सामान्यतः क्रमात्।
ससन्धि पदयोः पाठः क्रमपाठस्तु कथ्यते॥ १३०॥

क्वचित् तत्रापि त्रयाणां चतुर्णां वा ससन्धिकः।
पाठो विधीयते सोऽपि प्रातिशाख्यानुसारतः॥ १३१॥

---

पाटवस्यावश्यकत्वात्, तत्राभ्यासस्य च समपेक्षितत्वात् एकैको भाग एव स्वशाखीय-वेदत्वेन मन्तव्यः। त्रयाणामध्ययनासामर्थ्यस्य प्रत्यक्षसिद्धत्वात् सम्प्रदायस्य च एकैक-भागाध्ययने एव वेदकात्स्न्यापादनात्। तत्र सम्प्रति ब्राह्मणभागस्य संभवन्ति केचिद् विरला एव स्वतन्त्राध्येतारः। मूले (१२४) ब्राह्मणानामिति बहुवचनमारण्यकोप-निषदावनुलक्ष्य।

१२६-१२७. पदपाठे सन्धिविच्छेदेन संहितायाः स्वराः वर्णाश्च विपर्यस्ता इव दृश्यन्ते। तेषां परिज्ञानं ततः सुस्पष्टं भवतीति सम्प्रदाये न तत्र विशेषः। पार्षदम् = प्रातिशाख्यम्। आदिना व्याकरणशास्त्रसङ्ग्रहः।

१२८—यथा—वाजः। च। मे प्रसवः। प्रयतिः (सं० १८।१ पद १८।१)। अत्र प्रसवादिपदैः साकं—च। मे—इति पदे नाधीयेते, ते गलत्पदे। एवमन्यत्रोह्यम्। एतदर्थं शुक्लयजुः प्रातिशाख्यस्य चतुर्थाध्यायः (सू० १६६-१८०) द्रष्टव्यः।

१२९—या ऋचः संहितायामसकृत् पठितास्तासां पदपाठे प्रथमस्थले एव पाठः, अन्यत्र तासामनिर्देश इति ता 'गलदृचः' कथ्यन्ते।

१३०-१३१—प्रातिशाख्ये क्रमपाठप्रकरणं चतुर्थाध्याये (सू० १८१-१९९) द्रष्टव्यम्।

### क्रमपाठे सङ्क्रमसन्धिः

गलत्पदान्यनुच्चार्यं तदाद्यन्ते पदद्वये ।
या सन्धिः क्रमपाठेऽस्ति 'सङ्क्रमः' प्रोच्यते तु सा ॥ १३२ ॥

### विकृतिपाठाः

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
पाठा इमे विकृत्याख्या अष्टौ स्युर्वेदरक्षकाः ॥ १३३ ॥

केचिदन्ये सन्ति पाठाः सम्प्रदाये समादृताः ।
तेषामेषां स्वरूपं च लक्षणं वर्णयिष्यते ।
ग्रन्थेऽन्यस्मिन्नात्र तेषां लेखः प्रकरणान्तरात् ॥ १३४ ॥

### पाठानां साम्प्रदायिकाभ्यसनग्रन्थः

सम्प्रदाये क्रमादीनां पाठानां नास्ति पुस्तकम् ।
पदपाठस्यैव लेखे घनान्तं पाठ्यते मुदा ॥ १३५ ॥

### गुरुपरम्पराया आश्रयः

उच्चारणे वस्तुतस्तु सद्गुरुः शरणं मतम् ।
तस्मात्पूर्वैर्भारतीयै-राचार्यैः स्पष्टमुच्यते ॥ १३६ ॥

'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्याद् अधुनाध्ययनं यथा' ॥ १३७ ॥

'कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ १३८ ॥

सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते' ॥ १३९ ॥

---

१३२—सन्धौ 'सङ्क्रम' शब्दव्यवहारः प्रातिशाख्ये (४।१६६, १९६, ८१; ३।१४९)। तत्स्वरूपं चोवटभाष्ये यथा—गलत्पदमति-क्रम्यागलता (पदेन) सह सन्धानं सङ्क्रमः (शु० प्रा० ४।८१)।

१३३—वेदरक्षकत्वं स्वरवर्णविपर्याससम्भावनाविरहेण। एषामेव पाठानां महिमायं यद् वेदो मात्रया स्वरेणापि च न शङ्कास्पदतामेति।

१३४—अन्ये-पञ्चसन्धियुक्तघनपाठः, पञ्चसन्धिमालायुक्तो घनपाठः, सांकली-पाठः, एवमादयः।

१३७—मीमांसान्यायप्रकाशे।

१३८-१३९. द्र० पा० शि० ५०-५१।

### एतच्छिक्षान्यूनतापरिहारः

एवं लेखाश्रयो यश्च विशेषः साम्प्रदायिकः।
आवश्यकः स हि प्रोक्तो नात्र शास्त्रीयविस्तरः॥ १४०॥

द्वित्व-सर्ग-यम-स्थाना-नुस्वारा-गम-सन्धयः।
परिभाषादि सर्वत्वं शास्त्रस्यान्यत्र दृश्यताम्॥ १४१॥

### विनयः

यथामति यथास्फूर्ति सम्प्रदायप्रबोधिनी।
शिक्षैषा ग्रथिता तत्र दोषश्चेत्क्षम्यतां बुधैः॥ १४२॥

### प्रसादनम्

अत्र शास्त्रं सम्प्रदायः शास्त्र-सद्गुर्वनुग्रहात्।
नवोनसज्जीमाधत्तो न नरं क्लेशयन्ति च॥ १४३॥

लोकानां सुखबोधाय सम्प्रदायप्रबोधिनी।
मिश्र-गोपालचन्द्रेण कृता शिक्षा मनोरमा॥ १४४॥

तुष्येयुस्तेन विद्वांसः श्रम-शक्तिहितैषिणः।
आशीर्वदेयुर्येन स्यां वेद-वैदिक-सेवकः॥ १४५॥

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः।
गोपालचन्द्रमिश्रस्य वाङ्मात्राभिः प्रसीदताम्॥ १४६॥

—:o:—

इति काशोनिवासि—वेद-धर्मशास्त्र-मीमांसादर्शनाचार्य-
एम्० ए०-महायाज्ञिक-विद्वत्तिलक—

**श्रीगोपालचन्द्रमिश्रस्य कृतौ**

शुक्लयजुर्वेद-माध्यन्दिनशाखीयसम्प्रदायरक्षणशिक्षापरा
**सम्प्रदायप्रबोधिनी**
नाम शिक्षा समाप्ता

---

१४१. शिक्षाशास्त्रस्य सर्वत्वमनयैव शिक्षया न ज्ञेयम्। इह तु पूर्वशिक्षासु स्पष्टमनुक्तानां साम्प्रदायिकानां वा मन्त्रसम्बन्धिविषयाणामेव बोधनं लक्ष्य।।

१४६. सम्प्रदायप्रबोधिन्याष्टुप्टीकेयं सुबोधिनो।
पूर्णतामगमत्तेन वेदात्मा सम्प्रसीदताम्॥

इति श्रीगोपालचन्द्रमिश्रकृता सम्प्रदायप्रबोधिनीशिक्षायाः
टुप्टीकात्मिका सुबोधिनी व्याख्या
समाप्ता॥

